(टीका) जयत्युत्कृष्टो वर्तते । अज्ञानं तम इवाज्ञानतमः प्रकाशप्रतिबन्धकत्वात् । तच्च कपाटमिवाज्ञानतमःकपाटम् । परमपुरुषाराधनधामप्रवेशप्रतिबन्धकत्वात् विपाटितमज्ञान-तमःकपाटं येन तद्विपाटिताज्ञानतमःकपाटं विपाटिताज्ञानतमःकपाटमत्युरुहुङ्कृतं हुङ्कारो यस्यासौ तथोक्तः । अत्राज्ञानं च मायामतमेवाभिमतं; प्रसङ्गात् ।

**(मूलम्)** **जयत्यमितपौरुषः स्वजनतेष्टचिन्तामणिः ।**
**अजेशमुखवन्दितो गुणगणार्णवः श्रीपतिः ॥**

(टीका) **जनता** जनसमूहः । इष्टसिद्धौ चिन्तामणिरिवेष्टचिन्तामणिः ।

**(मूलम्)** **सर्वज्ञसन्मुनीन्द्रोच्चसन्मनःपङ्कजालयः ।**
**अजितो जयति श्रीशो रमाबाहुलताश्रयः ।**

(टीका) रमाबाहुलतयोराश्रयो रमाबाहुलताश्रयः ।
श्रीमदानन्दतीर्थार्यहृदयाम्भोजमन्दिरः ।
कमलाश्लेषरसिकः प्रीयतां नः परः पुमान् ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्त्वोद्योतविवरणं श्रीजयतीर्थभिक्षुविरचितं सम्पूर्णम् ॥*

(भा०प्र०) इति श्रीविजयीन्द्राख्यभिक्षुणा प्रीतये हरेः ।
तत्त्वोद्योतस्य विवृतौ गूढो भावः प्रकाशितः ॥

*॥ इति श्रीपरमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थश्रीपादानां शिष्येण श्रीविजयीन्द्रभिक्षुणा विरचितस्तत्त्वोद्योतविवृतेः भावप्रकाशः समाप्तः ॥*

★ ★ ★

# तत्त्वोद्योतः

## विषयानुक्रमणिका



## श्रीविजयीन्द्रतीर्थीयटिप्पणीगतविशेषविषयानुक्रमणिका

★ ★ ★

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# प्रमाणलक्षणम्

श्रीजयतीर्थविरचितटीकया तथा
श्रीविजयीन्द्रतीर्थविरचितया टीकाव्याख्यया समेतम्

सम्पादकः

विद्वान् चतुर्वेदी प्रदीपसिंहाचार्यः

॥ श्रीगुरुभ्यो नमः ॥

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# प्रमाणलक्षणम्

## श्रीजयतीर्थविरचितटीकया तथा
## श्रीविजयीन्द्रतीर्थविरचितया टीकाव्याख्यया समेतम्

*मङ्गलाचरणम्*

**श्रीजयतीर्थविरचिता प्रमाणलक्षणटीका**

प्रणम्यागण्यकल्याणगुणाब्धिं पुरुषोत्तमम् ।
पूर्णबोधानपि गुरून् व्याकुर्वे मानलक्षणम् ॥

**श्रीविजयीन्द्रतीर्थविरचिता प्रमाणलक्षणटीकाव्याख्या**

प्रणम्य नन्दवालं तं पूर्णबोधान् जयाभिधान् ।
गुरून् मुनिवरानन्यान् श्रीसुरेन्द्रगुरूनपि ॥

श्रीसुरेन्द्रगुरोः शिष्यो विजयीन्द्रयतिर्मितम् ।
प्रमाणलक्षणव्याख्याभावं वक्ष्ये यथामति ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थादौ निबध्नन् शिष्यमनः-समाधानार्थं चिकीर्षितं प्रतिजानीते **प्रणम्येति** ॥ तत्र भक्तिश्रद्धातिशयकथनाय प्रशब्दः । करिष्यमाणापेक्षया पूर्वकालत्वं क्त्वाप्रत्ययार्थः । न तु प्रधानक्रियामात्रापेक्षया तद् विवक्षितम् । एवं च पुरुषोत्तमप्रणामस्य गुरुपूर्णबोधप्रणामापेक्षयाऽपि पूर्वकालत्वे वेदिते गुरुतमगुरुतरगुरुक्रमेणैव प्रणामः कर्तव्य इत्यपि शिक्षितमिति वेदितव्यम् । गुणाब्धिपुरुषोत्तमपदाभ्यां निर्गुणब्रह्मवादसाम्यवादौ परास्तौ ।

मानलक्षणस्य व्याकरिष्यमाणत्वेऽपि 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् प्रयुक्तः । अन्येषां व्याक्रियमाणत्वेऽपि मानलक्षणस्यैव प्राधान्यात् लिङ्गसमवायेन प्राणभृच्छन्दवत् मानलक्षणालक्षण-समुदाये मानलक्षणशब्दः प्रयुक्तः । ग्रन्थनामत्वेऽपि च लिङ्गसमवाय एव निमित्तं बोध्यम् ।

**(टीका) इह खलु 'सुखमेव मे स्यात् दुःखं मनागपि मा भूत्' इति निखिला-पेक्षितमोक्षस्येश्वरसाक्षात्कारमन्तरेणासम्भवात्, तस्य च प्रमाणानि विनाऽनुदयात्, प्रमाणानां च यथावद्विदितानामेव तद्धेतुत्वोपपत्तेः तत्स्वरूपं यथावज्ज्ञापयितुकामो भगवानाचार्यवर्यः प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्यादिप्रयोजनाविगीतशिष्टाचारपर-म्परादिप्राप्तेष्टदेवतानतिपूर्वकं श्रोतृशेमुषीमनुकूलयिष्यन् वक्ष्यमाणमेवाग्रे दर्शयति ।**

**(टिप्पणी)** आचार्यकृतनारायणप्रणामस्य कर्तव्यताबोधकप्रमाणविरहात् प्रयोजनविरहाच्च मानलक्षणकथनस्य प्रथमं प्रतिज्ञाया अनौचित्यमाशङ्क्याह **इहेति** ॥ **इह** जगति । **खलु** वाक्यालङ्कारे । दुःखनिवृत्तिमात्रस्य अपुरुषार्थतया सुखस्यापि मोक्षस्वरूपेऽन्तर्भावमनुभवबलेनापि समर्थयितुं **सुखमेव** इत्युक्तम् । 'वरं वृन्दावने शून्ये सृगालत्वं स इच्छति । न तु निर्विषयं मोक्षं कदाचिदपि गौतम' इत्यभिगीतवचनदर्शनात् । तादृशपुरुषानपेक्षितत्वेऽपि मोक्षस्य सम्भवादधिकारिविषयाद्यखिलोक्तिरित्यप-व्याख्यानम् । मोक्षलक्षणस्यापि सुखस्य सुखत्वेनैव पुरुषार्थतया सकलकामनाविषयत्वात् । अन्यथा स्वतः पुरुषार्थत्वं न स्यात् । मन्मते मोक्षीयसुखस्य चन्दनादिरूपविषयाधीनाभिव्यक्तिकत्वरूपस-विषयत्वाङ्गीकारेण निर्विषयत्वस्यैवासिद्धेश्चेति । 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिबलेनेश्वरसाक्षात्कारस्य मोक्षहेतुत्वमभिप्रेत्य ईश्वरेत्युक्तम् । तत्साक्षात्कारस्य मोक्षमात्रहेतुत्वेऽपि ग्रन्थस्य कथं तद्धेतुत्वमित्याशङ्क्य तदुपपादयितुं तस्य चेत्याद्युक्तम् । साक्षात्कारस्य मोक्षकारणत्वेऽपि परम्परया शब्दादेरपि तत्रोपयोगात् प्रमाणानीति बहुवचनोपपत्तिः । अविवेचितस्वरूपैः प्रमाणैः प्रमोत्पत्तावपि प्रमाणाविवेके तज्जन्यज्ञानविषयेश्वराप्रामाणिकत्वशङ्कया तत्साक्षात्कारार्थं प्रवृत्त्यनुपपत्तेः तदभावे च मोक्षानुपपत्तेः प्रमाणजन्यज्ञानस्य फलोपयोगित्वाय प्रमाणविवेकस्यावश्यं कर्तव्यत्वात् । तस्य च लक्षणादिभिर्विनाऽनुपपत्तेस्तज्ज्ञापनाय ग्रन्थकरणमुचितमिति प्रमाणानामित्यादिनोक्तम् । एतेन द्वितीया शङ्का निरस्ता । प्रारिप्सितेत्यनेन चाविघ्नपरिसमाप्तिरादिशब्दोपात्तशिष्यार्थं प्रदानाविच्छेदरूपप्रचयगमनं च मङ्गलप्रयोजनम्, शिष्टाचारश्च तत्कर्तव्यतायां प्रमाणमिति दर्शयता प्रथमा शङ्का निरस्ता ।

## *मङ्गलवादः*

अत्र वदन्ति ॥ मङ्गलं न समाप्तौ हेतुः । व्यभिचारात् । न च विघ्नध्वंसद्वारा समाप्तौ तद्धेतुः । तस्य द्वारत्वे कामनायामनुल्लेखापत्तेः । किञ्च कामनाविशेषणतया तत्फलत्वस्यावश्यकत्वाल्लाघवाच्च तस्यैव

फलत्वमुचितम् । अपि च विघ्नध्वंसं प्रति पूर्ववृत्तित्वग्रहानन्तरमेव समाप्तिं प्रति पूर्ववृत्तित्वग्रहाद् अन्यथासिद्ध्याऽपि न तत् फलम् । अन्यथा मणिध्वंसजन्यदाहे मण्यवयवविभागस्यापि हेतुत्वापत्तेः । अपि च विघ्नध्वंसस्य जनकत्वेन न तज्जन्यतावच्छेदकत्वम् । तयोर्विरोधात् । किञ्च विघ्नध्वंसस्य द्वारत्वे तज्जन्यतापि किमवच्छेदेन । न तावत् समाप्तित्वेन । व्यभिचारात् । अन्यच्च दुर्वचम् । सुवचत्वे वा तदवच्छेदेनैव मङ्गलजन्यतास्तु । किं तस्यावच्छेदकतया अन्वयव्यभिचारादपि न मङ्गलं समाप्तौ हेतुः । न च विघ्नसमसङ्ख्यं तत् तथा । अधिकसङ्ख्यादसमाप्त्यापत्तेः । न चान्यूनसङ्ख्यं तथा । अन्यत्र तथाभूतादपि समाप्त्यापत्तेः । न च ज्ञानरूपलौकिक-कारणविरहात् तदभावः । साङ्गाद् वैदिककर्मणः फलावश्यम्भावनियमात् । अन्यथा समसङ्ख्यतयापि हेतुत्वं न कल्प्येत । अपि च विघ्नध्वंसस्य द्वारत्वे सिद्धे तदवच्छेदेन मङ्गलस्य समाप्तिहेतुत्वसिद्धिः । तत्सिद्धौ च अन्यथानुपपत्त्या विघ्नध्वंसस्य द्वारत्वसिद्धिरित्यन्योन्याश्रयोऽपि स्यात् । किञ्च प्रमत्तानुष्ठितसमाप्तिः मङ्गलं विनैव वाच्या । तदुद्देशेन मङ्गलाननुष्ठानात् । एवं चान्यत्र क्लृप्तपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतस्य मङ्गलस्य न कारणत्वम् ।

अपिच आचारानुमेया ह्यत्र श्रुतिः । सचाचारो यावता विना नोपपद्यते तावन्मात्रबोधिकां श्रुतिं कल्पयेत् न त्वधिकमपि । एवं च समाप्तिप्रयोजनकत्वज्ञानादप्याचारसम्भवेन तेन हेतुत्वबोधिका श्रुतिर्नानुमेया । न च हेतुत्वज्ञानमेव प्रवृत्तिप्रयोजकम् । लाघवेन प्रयोजकत्वज्ञानस्यैव प्रवर्तकत्वात् । अन्यथा पाकार्थिनः तण्डुलक्रयादावप्रवृत्त्यापत्तेः । तस्मान्न समाप्तिः फलं, नवा विघ्नध्वंसो द्वारम् । अपि तु स एव फलमिति ।

अत्राहुः ॥ मङ्गलं समाप्तौ हेतुः । न च व्यभिचारेण हेतुत्वबोधकप्रमाणाभावः । प्रथमं हेतुत्वाज्ञानेऽपि श्रुत्या स्वर्गत्वयागजन्यत्वयोरिव समाप्तित्वमङ्गलजन्यत्वयोः सामानाधिकरण्य उपस्थापितेऽनन्तरं स्वर्गविशेषवत् विघ्नध्वंसद्वारकत्वे अवच्छेदकत्वकल्पनस्य निष्प्रत्यूहत्वात् । मङ्गलं विनापि समाप्तिरित्यस्य समाप्तित्वावच्छेदकत्वग्रहे प्रतिबन्धकत्वात् । अन्यथा स्वर्गेऽपि साम्यप्रसक्तेः । प्रत्यक्षे तु अन्वयव्यतिरेकग्रहस्य सहकारित्वात् । तयोश्चावच्छेदकग्रहमन्तरेण ग्रहणासम्भवात् । अवच्छेदकग्रहपुरस्कारेणैव कारणताग्रहात् । यत्तु विघ्नध्वंसस्य द्वारत्वे कामनाविषयत्वं न स्यादिति । तन्न । अप्रयोजकत्वात् । किञ्च कामनाविषयत्वाभावो हि प्रवृत्तशिष्टेच्छाविषयत्वाभावः । स च नापाद्यः । अपूर्वद्वारा स्वर्गे इवापूर्वेऽपि उक्तकामनाविषयत्वसत्वात् । न च विषयत्वनैयत्याभाव आपाद्यः । इष्टत्वात् । मङ्गलं समाप्तिसाधनमित्याप्तवाक्यादवगत्यापि मङ्गले शिष्टप्रवृत्तिसम्भवेन तदिच्छायां

विघ्नध्वंसस्याविषयत्वात् । न च सोऽशिष्ट एवेति वाच्यम् । तल्लक्षणासम्भवात् । एतेनैव बाधकेन तस्याशिष्टत्वेऽन्योन्याश्रयात् । बाधकान्तरस्य च तत्राभावात् । न चाधिकारिविशेषणकामनाविषयत्वाभाव आपाद्यः । इष्टत्वात् । समाप्तिकामो मङ्गलमाचरेत्याकारिकाया एव श्रुतेर्लाघवेनानुमानात् । अत एव किञ्च विशेषणतयेत्यादि परास्तम् । तस्य प्रथमं फलत्वाकल्पनात् । अत एव अपिच विघ्नध्वंसं प्रतीत्यादिनोक्ताऽन्यथासिद्धिरप्यपास्ता । विघ्नध्वंसं प्रति पूर्ववृत्तित्वग्रहं विनापि हेतुताया वेदेन बोधनात् । विघ्नध्वंसजन्यतापि समाप्तेरनजन्यत्वे श्रुत्या बोधित एव ज्ञेयेति ।

किञ्च विघ्नध्वंसेत्यादिनोक्तं निरस्तम् । अन्वयव्यभिचारस्यानवकाश एव । विघ्नानुसारिमङ्गलाचरणेन विघ्नान्यूनसङ्ख्यस्यैव मङ्गलस्य हेतुत्वात् । न चाङ्गकृतेः समास्यापत्तिः साङ्गाद् वैदिककर्मणः फलावश्यम्भावनियमादिति वाच्यम् । साङ्गस्यापि तस्य लौकिककारणसत्त्व एव जनकत्वोपगमात् । एवमपि नियमाक्षतेः विघ्नध्वंसस्य कारणताग्रहोत्तरकालं द्वारत्वकल्पनात् । अपि च विघ्नध्वंसस्य द्वारत्व इत्याद्युक्तान्योन्याश्रयोऽपि निरस्तः । यच्च जनकत्वेऽवच्छेदकत्वं विरुद्धमिति । तन्न । ग्राहके सति तेजस्तेजोगतोद्भूतरूपयोरिव उभयथाऽप्यविरोधात् । ग्राहकस्य च प्रकृते दर्शितत्वात् । यदपि किञ्च प्रमत्तेत्यादि तदपि न । वेदेनानन्यथासिद्धत्वगर्भहेतुत्वे बोधिते तन्निर्वाहाय प्रमत्तादिस्थले प्राक्तनसुकृतसम्पत्तेः कल्पनात् । यदपि चाचारानुमेयेत्यादि तदपि न । हेतुत्वज्ञानस्यैव प्रवर्तकतया श्रुत्याऽपि तस्यैव प्रतिपादयितुमौचित्यात् । अन्यथा यागहेतुत्वस्यापि दुर्लभत्वापातात् । तण्डुलक्रयादावपि तत्तत्साधनत्वज्ञानस्यैव प्रवर्तकस्यानुभवसिद्धत्वाच्च । न च यागस्य नियतपूर्ववृत्तित्वमात्रे बोधिते प्रमाणान्तरेण अन्यथासिद्धिविरहावगम इति वाच्यम् । तस्य अनन्यथासिद्धत्वानवगतौ तद्व्यावृत्तान्यथासिद्धेरेव व्यावर्तनायोगात् । तत्र चातिप्रसङ्गशङ्कासत्वात् । न चानादिशिष्टव्यवहारेणैव (तत्र) अन्यथासिद्धत्वावगमः । मङ्गलेऽपि प्राचां शिष्टानां तद्व्यवहारादिति ।

एतेन काशीमरणादीनां मोक्षे व्यभिचारेऽपि अनतिप्रसक्तधर्मसामानाधिकरण्येन कार्यकारणभावे आगमेन बोधिते तत्वज्ञानविशेषव्यापारकत्वमवच्छेदकमादाय हेतुता स्यादित्यापादनमपास्तम् । इष्टत्वात् । एतावांस्तु विशेषः । यत् तमेवं विदित्वेत्यादिवाक्यबलेन रामोपनिषदि तारकोपदेशश्रवणेन च तत्वज्ञानद्वारैव हेतुत्वमिति सङ्क्षेप इति ।

शिष्टाचार इत्यत्र शिष्टत्वमभ्रान्तत्वम् । अलौकिकविषयत्वं चाचारविशेषणमवगन्तव्यम् । एवं च मङ्गलं वेदबोधितकर्तव्यताकम् अलौकिकविषयशिष्टाचारविषयत्वात् ज्योतिष्टोमवदित्यनुमानं द्रष्टव्यम् ।

शिष्टपदेन निष्फलचैत्यवन्दनादि एवमगम्यागमनादि च व्यावर्तितम् । आद्ये इष्टसाधनत्वांशे भ्रमात् । द्वितीये बलवदनिष्टाननुबन्धित्वांशे भ्रमात् । अलौकिकेत्यनेन च लौकिकप्रमाणप्रमापितबलवदनिष्टाननुबन्धीष्ट-साधनताकभोजनादिव्युदासो द्रष्टव्यः । शिष्यबुद्ध्यनुकूलेन प्रतिज्ञासार्थक्यमिति न तृतीयशङ्काऽपीति । श्रोत्रियेत्यादिनोक्तं प्रमाणोद्देशार्थत्वमपि द्रष्टव्यम् । अत एव च वक्ष्यति प्रमाणानामित्यनेन उद्देशे सिद्धे इति ।

**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**

**प्रमाणलक्षणम्**

**(मूलम्) अशेषगुरुमीशेशं नारायणमनामयम् ।**
**सम्प्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥**

**(टीका)** नारायणस्यैव नमस्कारे को हेतुरित्यत उक्तम् **अशेषगुरुमिति** ॥ सर्वज्ञं गुरुमिति पाठे सार्वज्ञ्यं गुरुत्वस्योपपादकम् । किञ्च नारायणस्यैवातिसमर्थत्वेनेष्ट-प्रदानसम्भवात् तन्नतिरिति भावेनोक्तम् **ईशेशमिति** ॥ अपिच रागादिदोषरहिता हि लोके वन्द्या भवन्ति । नारायणश्चाशेषदोषदूर इति सूचयितुम् **अनामयमिति** ॥ आमयपदं दोषान्तरोपलक्षणम् । प्रवक्ष्यामीति उद्देशविभागपरीक्षाद्युपयोगिसङ्ग्रहायोपसर्गः । न हि तद्विना प्रकृष्टा लक्षणोक्तिः स्यात् ।

**(टिप्पणी)** यथासम्भवं नारायणविशेषणकृत्यमाह **नारायणस्यैवेत्यादिना** । विशेषनिषेधस्य शेषा-भ्यनुज्ञापूर्वकत्वन्यायेन दोषान्तरसत्वापादकतया भासमानत्वाद् अनामयपदस्य तद्व्यावृत्त्यर्थतया आमयपदं दोषान्तरोपलक्षणार्थत्वेन व्याचष्टे **आमयपदमिति** ॥ वक्ष्यामीत्येतावता सिद्धे प्रशब्दानर्थक्यमाशङ्क्याह **प्रवक्ष्यामीतीति** ॥ अत्रोद्देशविभागपरीक्षाद्युपयोगि यत् तत्सङ्ग्रहायोपसर्गः । प्रमाणोद्देशादिव्यतिरिक्तसङ्ग्रहाय आदिशब्दः । उद्देशादिसङ्ग्रहार्थत्वमुपपादयति **नहीति** ॥

*लक्षणलक्षणम्*

**(टीका)** लक्ष्यमात्रव्यापको धर्मो लक्षणम् । तदुक्तिः शब्दव्यवहारार्था ।

**(टिप्पणी)** लक्षणपदप्रवृत्तिनिमित्तमाह **लक्ष्येति** ॥ लक्ष्य एव व्यापकः । लक्ष्येतरावृत्तित्वे सति सकललक्ष्यवृत्तिधर्मो लक्षणमित्यर्थः । ननु भवन्मते लक्ष्यवृत्तिधर्मो लक्षणमित्येवास्तु ।

लक्ष्यतापर्याप्त्यधिकरणताकस्यालक्ष्यवृत्तित्वाभावात् । द्वितीयव्यक्तेर्लक्ष्यत्वाभावात् । लक्ष्यत्वे वा लक्षणस्यासम्भवः । लक्षणस्य गोत्वादेः सकलगोव्यक्त्यादिवृत्तित्वाभावात् । अनुगतजातेरनङ्गीकारात् । उपाधेरप्यननुगतजातिघटितत्वेनाननुगतत्वात् ।

किञ्च गोव्यक्तीनां गोत्वं लक्षणं द्रव्यत्वं न लक्षणमिति कथं विभागः । तत्तद्व्यक्तेः तत्तद्व्यक्तिवृत्ति-गोत्वस्येव तत्तद्व्यक्तिवृत्तिद्रव्यत्वस्यापि लक्षणत्वसम्भवात् । एवमेव द्रव्यव्यक्तीनां द्रव्यत्वं लक्षणं न गोत्वादिकमित्ययमपि विभागोऽनुपपन्नः । गोत्वादिद्रव्यत्वयोस्तुल्यत्वात् ।

अपि च पृथिवीत्वावच्छिन्ने पृथिवीत्वावच्छिन्नेतरभेदकत्वं पृथिवीलक्षणत्वं गन्धवत्त्वस्य न स्यात् । पृथिवीत्वस्य पक्षतावच्छेदकस्याननुगतत्वेन सर्वव्यक्तेरपक्षत्वात् । साध्यतावच्छेदकहेतुतावच्छेदकयोर-ननुगतत्वेन दृष्टान्तविलोपापाताच्च । गन्धत्वस्याननुगतत्वेन गन्धवत्त्वस्याप्यननुगतत्वात् । न च तत्तद्व्यक्तौ तत्तद्व्यक्तीतरभेदानुमितिजनकत्वमेव गन्धवत्त्वस्य पृथिवीलक्षणत्वमिति वाच्यम् । व्यतिरेकसहचार-ग्राह्याया यत्र गन्धवत्त्वं तत्रेतरभेद इत्यन्वयव्याप्तेर्ग्रहकाल एव सिद्धत्वात् सिद्धसाधनापत्तेः । तद्व्यक्तौ साध्यस्य ग्रहात् । अप्रयोजकत्वेन तादृगन्वयव्याप्त्यग्रहप्रसङ्गाच्च । न च पृथिवीगन्धयोः कार्यकारणभाव एव विपक्षबाधकतर्क इति वाच्यम् । अनुगतधर्माभावेन प्रतिव्यक्तिकार्यकारणभावस्यैव ग्रहीतुमशक्यत्वात् । न च अनुगतधर्माभावेन प्रत्यक्षतस्तद्ग्रहेऽपि शब्दादेव सकलपृथिवीगन्धव्यक्त्युपस्थितेः सत्वात् कार्यकारणभावग्रहः स्यादिति वाच्यम् । तस्यासार्वत्रिकत्वात् । अनुगतप्रवृत्तिनिमित्ताभावेन तस्यापि सकलव्यक्त्यनुपस्थापकत्वाच्चेति चेत् ।

मैवम् । लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगीतरवृत्तिवृत्तिसादृश्यानिरूपकत्वे सति लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगियावद्वृत्तिवृत्तिसादृश्यप्रतियोगित्वस्य लक्षणत्वस्य विवक्षितत्वात् । तेन च प्रतिव्यक्तिविश्रान्तत्वाविशेषेऽपि पृथिवीव्यक्तेर्द्रव्यत्वं न लक्षणम् । गन्धवदसदृशवृत्तिवृत्तिसादृश्यनिरूपकत्वात् । न वा घटत्वं तल्लक्षणम् । गन्धवत्सदृशयावद्व्यक्ति-वृत्तिवृत्तिसादृश्यानिरूपकत्वात् । इदमेव घटत्वद्रव्यत्वयोरव्याप्तत्वमतिव्याप्तत्वं च । अत एव च न प्रमेयत्वादौ लक्षणपदप्रयोगः । तत्र प्रमेयत्वादिसमशीलाभिधेयत्वादिलक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्य-प्रतियोगीताराप्रसिद्धेः ।

न च यन्निष्ठं यल्लक्ष्यतावच्छेदकमादाय लक्षणपदप्रवृत्तिनिमित्तमिदं निरुच्यते तल्लक्ष्यतावच्छेदकाश्रये स्ववृत्तिसादृश्यप्रतियोगित्वाभावेन लक्षणस्य तदवृत्तित्वादसम्भवो दोषः । स्ववृत्तिसादृश्यनिरूपकत्वस्य तत्प्रतियोगित्वस्य स्वस्मिन्नपि सत्वात् । न चैवं तद्व्यक्तित्वादेर्लक्षणत्वं न

स्यात् । तत्समानशीललक्ष्यतावच्छेदकस्य सादृश्यानभिव्यञ्जकत्वेन तदभिव्यञ्जकत्वघटितलक्षण-पदप्रवृत्तिनिमित्ताभावादिति वाच्यम् । इतरभेदानुमितिजनकत्वपुरस्कारेण तत्र लक्षणपदप्रयोगात् । तद्व्यक्तिमात्रवृत्तित्वात् सकललक्ष्यवृत्तित्वाभावेन तत्र त्वयाऽप्येवमेवावश्यं वक्तव्यत्वात् ।

यद्वा लक्ष्यतावच्छेदकनिष्ठसादृश्यप्रतियोग्यनाश्रयवृत्तिवृत्तिसादृश्यानिरूपकत्वे सति लक्ष्यतावच्छेद-कनिष्ठसादृश्यप्रतियोग्याश्रययावद्व्यक्तिप्रतियोगिकसादृश्याश्रयत्वं लक्षणत्वम् । न चैतदज्ञानेऽपि लक्षणपदप्रयोगात् नैतल्लक्षणत्वमिति वाच्यम् । असिद्धेः । अन्यथा त्वदुक्तमपि लक्षणत्वं न स्यात् । तदप्रतिसन्धानेऽपि लक्षणपदप्रयोगादिति वक्तुं शक्यत्वात् । एवं च तत्तत्पृथिवीव्यक्तेस्तत्तत्पृथिवीत्व-मननुगतमेव लक्षणम् । इतरव्यावृत्तलक्षणपदप्रयोगस्तूक्तोपाधिनियम्यः । यथा अनुगतजातिवादिमतेऽ-ननुगतमेव पृथिवीजलत्वादिकं लक्षणम् । अनुगतलक्षणपदप्रयोगस्तूपाधिविशेषेणैवेति । एतावांस्तु विशेषः । मन्मते पृथिवीव्यक्तावपि पृथिवीत्वमननुगतं त्वन्मते त्वेकमितीति दिक् ।

यच्चोक्तं पृथिवीत्वावच्छिन्ने इतरभेदानुमापकत्वं पृथिवीलक्षणत्वं गन्धवत्त्वस्य न स्यात्, पृथिवीत्वस्य अननुगतत्वेन सर्वव्यक्तेरपक्षत्वादिति । तन्न । पृथिवीत्वावच्छिन्ने स्वार्थानुमितिस्तथा न स्यादिति वा परार्था-नुमितिस्तादृशी न स्यादिति वा । नाद्यः । स्वार्थानुमाने हि पक्षतावच्छेदकस्यानुगतस्योपयोगः तावता प्रतिसन्धं ज्ञानासम्भवेन सामान्यप्रत्यासत्तीभूय तावदुपस्थापकतया । तच्चास्मन्मतेऽन्यथैवोपपन्नमतः किं तेन । तथाहि । अस्मन्नये सर्वपृथिवीव्यक्तौ सकलपृथिवीव्यक्तिनिरूपितसादृश्यं पदार्थान्तरमस्ति । अपदार्थान्तरं वाऽस्तु । तथा च पुरोवर्तिपृथिवीव्यक्तिनिष्ठसादृश्यप्रतियोगित्वेन सामान्येन सकलपृथिवीव्यक्तीनामुपस्थितेः ।

न चैवं सामान्यलक्षणायाः स्वप्रकारकज्ञानजनकत्वनियमेनोपस्थिततद्धर्मावच्छेदेनैवानुमितिः स्यात् न तु पृथिवीत्वावच्छेदेनेति वाच्यम् । स्वप्रकारकज्ञानजनकत्वनियमस्यासिद्धेः । न च तथासति अतिप्रसङ्गः । एतत्सादृश्यप्रतियोगित्वेन तत्सादृश्याभिव्यञ्जकधर्मप्रकारकज्ञानत्वेन कार्यकारणभाव-स्यैवातिप्रसङ्गभञ्जकत्वात् । न च तत्समानाधिकरणधर्मस्यैव तदभिव्यञ्जकत्वेन तस्य च सर्वत्रावृत्तित्वेनापरव्यक्तीनां किंधर्मप्रकारकोपस्थितिः स्यादिति वाच्यम् । अभिव्यञ्जकधर्मप्रकारकज्ञान-त्वेनाभिव्यञ्जकधर्मनिष्ठसादृश्यप्रतियोगिधर्मप्रकारकज्ञानस्य विवक्षितत्वात् । एवं सकलव्यक्त्युपस्थितौ सत्यां तत्र च प्रमाणान्तरेण पक्षधर्मताज्ञाने जाते स्वार्थानुमितिरविकला । एतावांस्तु विशेषः । तव पक्षतावच्छेदकेनैव धर्मेण सकलव्यक्त्युपस्थितिः मम तु धर्मान्तरेणेति । अनुमितिस्तु प्रत्येकधर्मावच्छेदेनैव जायते घटपटावनित्याविवित् ।

न द्वितीयः । पृथिवीपदात् सकलपृथिवीव्यक्त्युपस्थितौ सत्यां परार्थानुमित्यविरोधात् । न चानुगतधर्मस्य प्रवृत्तिनिमित्तस्याभावेन कथं तावद्व्यक्त्युपस्थितिरिति वाच्यम् । तत्तद्व्यक्तिवृत्तिनैव पदप्रवृत्तिनिमित्तेनोपस्थितिसम्भवात् । न च शक्तिग्रहकाले तत्तद्धर्मविशिष्टत्वेनानुपस्थितत्वात् कथं शक्तिग्रह इति वाच्यम् । पूर्वोक्तसामान्यलक्षणयैव तथोपस्थितिसम्भवात् । न चैवं नानार्थाविशेषः । एकोच्चारणगर्भशक्तिमत्त्वेन विशेषात् । न चैवं पुष्पवत्पदाद्यविशेषः । सदृशनानाधर्मप्रवृत्तिनिमित्तवत्त्वेनैव ततो विशेषात् । न च सादृश्यप्रतियोगित्वमेव एकत्वात् पदप्रवृत्तिनिमित्तमास्तामिति वाच्यम् । यत्प्रकारिका हि प्रतीतिः पदजन्या तस्यैव प्रवृत्तिनिमित्तत्वात् । न च सादृश्यप्रतियोगित्वं तथा । अन्यथा तवापि घटपदे सत्त्वस्यैव प्रवृत्तिनिमित्तत्वापत्तेः ।

न च पृथिवीत्वस्याननुगतत्वेन पृथिवीतरभेदस्याप्यननुगतत्वात् कथं व्याप्तिग्रह इति वाच्यम् । तावद्धर्मावच्छिन्नभेदवद्भेदत्वस्यानुगतत्वात् । घटपटोभयप्रतियोगिकभेदवत्प्रतियोगिकभेदत्वस्येव । न च तावद्धर्मावच्छिन्नभेदस्याधिकरणरूपत्वादननुगमतादवस्थ्यमिति वाच्यम् । तत्राभावभिन्नत्वस्यैवानुगतस्य सम्भवात् । अननुगतत्वेऽपि तावद्धर्मावच्छिन्नभेदवद्वैसादृश्यप्रतियोगित्वेनोपस्थितानां भेदग्रहसम्भवात् । न च अनुगतव्यापकतावच्छेदकाभावः । व्याप्तिग्रहप्रयोजकीभूतोपस्थित्या तस्यान्यथासिद्धत्वात् । तस्याश्चान्यथैवोपपादितत्वात् । अत एवान्वयिनि वह्नित्वस्याननुगतत्वेऽपि न दोषः ।

यत्किञ्चिद्वह्निसादृश्यनिरूपकत्वसामान्यलक्षणया तत्तद्वह्नित्वेनोपस्थितसकलवह्निव्यक्तिनिरूपित-व्याप्तिग्रहसम्भवात् । न चैवं दृष्टान्तविरोधः । साध्यतावच्छेदकसदृशधर्मावच्छिन्नाप्रतीतेर्दृष्टान्तविरोध-पदार्थत्वात् । तादृक्प्रतीतेरेव दृष्टान्तत्वप्रयोजकत्वात् । एवमेव हेतावप्यननुगमपरिहारो द्रष्टव्यः। अत एव हेतुतावच्छेदकस्याननुगमेऽपि शब्दसाम्यमात्रेणानुमानप्रवृत्तौ वाग् विषाणिनी गोत्वादित्याद्यप्यनुमानं स्यादिति परास्तम् । व्याप्तिग्रहजनकीभूतोपस्थितिजनकसादृश्यप्रतियोगित्वस्य स्वरूपसतो नियामकत्वात् । प्रकृते गोवाग्वृत्तिगोत्वस्यासदृशत्वात् । अत एव नाप्रयोजकता । यत्किञ्चित्पृथिवीगन्धव्यक्तिनिष्ठसादृश्यप्रतियोगित्वेन सकलपृथिवीगन्धव्यक्त्युपस्थितौ तत्तद्वृत्तिपृथिवीत्व-गन्धत्वावच्छेदेन कार्यकारणभावग्रहस्यैव विपक्षबाधकत्वात् । न च कार्यकारणभावावच्छेदकाननुगमो दोषः । दृष्टान्तस्थलाभावात् ।

मन्मते सर्वत्राननुगतस्यैवावच्छेदकत्वात् । तत्कर्तव्यसकलोपस्थितेरतिप्रसङ्गाभावस्य च सादृश्य-प्रतियोगित्वेनैव कृतत्वाच्च । ननु सादृश्यप्रतियोगित्वं ज्ञातमासत्तिः । तज्ज्ञानं च प्रतियोगिज्ञानाधीनम् । तथाच प्रतियोगिज्ञाने सति सादृश्यज्ञानं तस्मिंश्च ज्ञाते सादृश्यप्रतियोगित्वेन

प्रतियोगिज्ञानमित्यन्योन्याश्रय इति चेत् । न । सामान्यस्य ज्ञातस्यैव आसत्तित्वे मानाभावात् । प्रत्यासत्तेरज्ञाताया एव प्रत्यक्षजनकत्वावधारणाच्च ।

न चाज्ञातस्यासत्तित्वे संशयो न स्यात् । स्वरूपसता तेन धर्मेण संशयात् पूर्वं घटत्वादिप्रकारक-ज्ञानजननादिति वाच्यम् । पुरोवृत्त्यंशे तस्यासत्तित्वाभावात् । भावे वा संशयजनकदोषस्यैव प्रतिबन्धकत्वात् । अन्यथा संशयार्थं कोटिज्ञानस्यावश्यकत्वेनासत्तिज्ञानसम्भवात् तत्प्रकारकज्ञानापत्त्या तत्रापि संशयो न स्यात् । न च निश्चयसामग्रीतः संशयसामग्री बलवतीति वाच्यम् । धर्मिज्ञानपूर्वमिव यदा कोटिज्ञानं तदा धर्मिज्ञानाभावेन संशयसामग्र्यभावात् धर्मिज्ञानस्यैव तत्प्रकारकत्वापत्तेः । न च सादृश्यप्रतियोगित्वं तत्तत्प्रतियोगिरूपस्वरूपसम्बन्धविशेषः । स च अननुगत इति कथं तावद्व्यक्त्युपस्थितिरिति वाच्यम् । प्रतियोगित्वेन सम्बन्धेन सादृश्यस्यैवासत्तित्वमिति तदर्थत्वात् । न च सम्बन्धाननुगमो दोषः । सम्बन्ध्यनुगमे तस्यादोषत्वात् । अन्यथा दण्डित्वसामान्यलक्षणया सकलदण्डयनुपस्थितिप्रसङ्गात् । दण्डसंयोगस्याननुगतत्वादिति सङ्क्षेपः ।

क्रियावत्त्वादेर्द्रव्यलक्षणत्वपरिहाराय **सकलेति**[1] ॥ प्रमेयत्वादिवारणाय प्रथमदलम् । अत एव वक्ष्यति 'व्यभिचारिणोऽव्यापकांश्च परिहृत्य' इति । इदं चार्थलक्षणम् । शब्दपरत्वे तत्प्रतिपादकवाक्यत्वं लक्षणं द्रष्टव्यम् । **शब्दव्यवहारार्थेति** । शब्दव्यवहर्तव्यत्वज्ञानार्थेत्यर्थः ।

**(टीका) सास्नादिमान् गौः इति ज्ञातलक्षणो हि यं पिण्डं सास्नादिमन्तं पश्यति तं गोशब्दवाच्यं प्रत्येति ।**

**(टिप्पणी)** लक्षणोक्तेः शब्दवाच्यत्वज्ञानहेतुतामुपपादयति **सास्नादिमानिति** ॥ सास्नादिमानिति सामान्यतो गोशब्दवाच्यज्ञानेऽपि व्यक्तिविशेषस्याज्ञानात् । या सास्नादिमती सा गौरित्युक्ते 'यद्वृत्तयोगः प्राथम्यम्' इत्याद्युद्देश्यलक्षणम् । 'तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम्' इति न्यायेन प्रसिद्धलक्षणोपदेशेना-प्रसिद्धतत्तच्छब्दवाच्यत्वविधानात् । उद्देश्यस्य च लक्षणस्य धूमादिवद् व्याप्यत्वावगमात् यावति लक्षणं तावद् गोशब्दवाच्यमित्येव व्यक्तिविशेषस्य वाच्यत्वं श्रोताऽवधारयतीत्यर्थः ।

**(टीका) यदा तु 'अयं गौः' इत्युपदेशादिना व्युत्पत्तिः तदाऽपि व्यक्तिविशेष एव न सर्वत्र । तत्रोपदेशाद्यभावात् । अतस्तत्र व्यक्तिविशेषे व्युत्पन्नः तदन्यत्रापि व्युत्पित्सुः तद्धर्मेषु व्यवहारान् आलोच्य, व्यभिचारिणोऽव्यापकांश्च परिहृत्य, लक्षणभूतमेकं गृहीत्वा,**

१. अस्य वाक्यस्य मूलं नोपलब्धम् ।

**तद्वत्सु गोशब्दसम्बन्धं गृह्णाति । प्राचीनपक्षे केवलव्यतिरेकिणा अत्र अन्वयव्यतिरेकिणेति विशेषः।**

**(टिप्पणी)** शृङ्गग्राहितया अयं गोशब्दवाच्य इति केनचिदुक्ते अनन्तरं तद्धर्मवत्यन्यत्र व्यवहार-मालोच्यावापोद्वापक्रमेण यत्र साक्षाद्व्यभिचारज्ञानं तद्वति गोशब्दवाच्यज्ञानं तत्र लक्षणोक्तेर्व्यभिचारात् कथं शब्दवाच्यत्वज्ञानहेतुतेत्याशङ्क्य लक्षणज्ञानं सर्वसाधारणशक्तिग्रहाव्यभिचारि, स्वतो लक्षणाज्ञं प्रति तु लक्षणज्ञापनद्वारा वाच्यत्वज्ञाने लक्षणोक्तिरुपयोगिनीति परिहारं सूचयितुमाह **यदा त्विति** ॥

### *उद्देशलक्षणम्*

**(टीका) नाममात्रेण वस्तुसङ्कीर्तनमुद्देशः । स च लक्षणाद्युक्तिसम्भावनार्थः । अनुद्दिश्य कस्य लक्षणादि ब्रूयात्।**

**(टिप्पणी)** उपसर्गसङ्गृहीतोद्देशजिज्ञासायामाह **नामेत्यादि** ॥ व्यावर्तकधर्मातात्पर्यकलक्षणो-क्त्युद्देश्यकशब्द इत्यर्थः । तेन लक्षणविभागवाक्ययोर्व्यवच्छेदः। प्रथमस्य सजातीयव्यावर्तकपरत्वात् । द्वितीयस्य सजातीयविभाजकपरत्वात् । विभागस्य विशेषलक्षणोक्त्यर्थत्वमप्यस्तीति विशेष्यभागे दत्तेऽपि तत्रातिव्याप्तिसम्भवात् । उदासीनघटादिपदेऽतिव्याप्तिवारणाय विशेष्यभागः । लक्षणोक्त्यनुकूले ताल्वादिव्यापारेऽतिप्रसङ्गपरिहाराय शब्दपदम् । मात्रशब्दस्य व्यावर्तकधर्मातात्पर्यकत्वार्थकत्वं स्फुटं मत्या समित्यनेनोक्तं लक्षणोक्त्यर्थत्वं सूचयितुमाह **स इति** ॥ आदिशब्देन विभागपरिग्रहः ।

**(टीका) विधा विभागः । तदुक्तिरवान्तरोद्देशार्था । युक्तायुक्तचिन्ता परीक्षा । सोद्देशविषया न सम्भवति । फलाभावेन नाममात्रे विवादायोगात् । लक्षणपरीक्षा तस्य लिङ्गत्वनिश्चयार्था । न ह्यसंभवाव्याप्त्यादिलक्षणस्वरूपासिद्धिभागासिद्धिव्यभिचारा-परिहारे लिङ्गता निश्चीयते । विभागपरीक्षा न्यूनाधिकसङ्ख्याव्यवच्छेदमुखेन विभाग-समर्थनार्था । बुद्धिदोषनिवृत्तिपर्यन्ता परीक्षायाः परीक्षा तत्सौष्ठवसिद्ध्यर्था । द्विधा चोद्देशादयः सामान्यतो विशेषतश्चेति।**

**(टिप्पणी) विधेति** सजातीयविभाजकधर्मतात्पर्यकविशेषोद्देश्यकः शब्द इत्यर्थः । सामान्योद्देशवारणाय प्रथमो भागः । लक्षणवाक्यवारणाय द्वितीयः । उत्तरविशेषणसूचनायैव तदुक्तिरित्युक्तम् । **युक्तेति** ॥ शास्त्रावयवभूतोपपन्नत्वानुपपन्नत्वविचार इत्यर्थः । अन्यस्यालक्ष्यत्वात् । विषयविशेषानिर्देशादेवोद्देशविषयत्वभ्रान्तिं वारयितुं चिन्ताविषयं विवेचयति **सेत्यादिना** ॥ **बुद्धिदोषः**

अयुक्तार्थविषयत्वम् । **सौष्ठवं** अप्रामाण्यशङ्कारहितत्वम् । उद्देशस्यैक्येन विभागलक्षणकथनेऽवान्तरोद्देशार्थत्वविशेषणमयुक्तमित्याशङ्क्याह **द्विधा चेति** ॥ प्रसङ्गाल्लक्षणादिद्वैविध्यकथनाय आदिशब्दः ।

**(टीका) प्रमाणलक्षणस्यान्यैरेवोक्तत्वात् किमपूर्वनिर्माणेनेत्यतो वा प्रवक्ष्यामि इत्युक्तम् । अन्योक्तीनामप्रकृष्टतां वक्ष्यति ।**

**(टिप्पणी)** उद्देशं विना लक्षणस्य वक्तुमशक्यत्वात् परीक्षां च विना प्रमाणविवेकस्यासिद्धेः अथदिव तत्सङ्कहसिद्धेस्तदर्थत्वं नातिप्रयोजनमुपसर्गस्य मत्वाऽन्यथा व्याचष्टे **प्रमाणेति** ॥ प्रकर्षस्यावध्यपेक्षायामाह **अन्यैरिति** ॥

*लक्षणविभागः*

**(टीका) द्विविधं लक्षणम्, यावल्लक्ष्यभावि अयावल्लक्ष्यभावि चेति । तत्राद्यं यथा, 'पृथुबुध्नोदराकारो घट' इति । द्वितीयं यथा, 'भोगायतनं शरीरम्' इति । तत्राद्यमेव व्युत्पाद्यम् । तस्यैव सार्वत्रिकव्यवहारोपयोगित्वादिति भावेनोक्तम् स्वलक्षणमिति ॥ तदेव हि स्वरूपभूतं लक्षणं यत् यावल्लक्ष्यभावीति ।**

**(टिप्पणी)** लक्षणं वक्ष्यामीत्येतावता कृतार्थत्वे स्वपदानर्थक्यमाशङ्क्य तत्सार्थक्यं दर्शयितुमाह **द्विविधमिति** ॥ **द्वितीयमिति** भोगाभावदशायामभावादिति भावः । **सार्वत्रिकेति** सर्वकालीनेत्यर्थः । स्वपदेन कथं यावल्लक्ष्यभावित्वलाभ इत्यत आह **तदिति** ॥ यद्यपि वक्ष्यमाणप्रमाणलक्षणस्याप्यर्थविषयीकारित्वस्य फलोपधानपक्षे स्वलक्षणत्वमयुक्तम् । लिङ्गादौ सत्यपि सिद्धसाधनादावनुमितिविरहेण तदसम्भवात् । स्वरूपयोग्यत्वस्य तथात्वे शरीरलक्षणेऽपि तुल्यम् । तथापि फलोपधानपक्ष एव शरीरलक्षणस्य तथात्वमुक्तमिति ध्येयम् ।

*प्रमाणसामान्यलक्षणम् लक्षणविभागः*

**(टीका) प्रमाणानामित्युद्देशे सिद्धे प्रमाणसामान्यलक्षणमाह—**

**(मूलम्) यथार्थं प्रमाणम् ।**

**प्रमाणमिति लक्ष्यनिर्देशः । यथार्थमिति लक्षणोक्तिः । एवमुत्तरत्रापि ज्ञातव्यम् ।**

**(टिप्पणी)** उद्देशं विना लक्षणकरणमयुक्तमित्याशङ्क्याह **प्रमाणानामिति** ॥ यथार्थपदस्य प्रथमं प्रयोगात् पूर्वं स्वपरेत्यादेर्द्वितीयव्याख्याने लक्षणसूचनार्थत्वस्योक्तत्वात् पूर्वपदस्यैव लक्ष्यपरत्वभ्रान्तिं

वारयितुमाह **प्रमाणमिति** ॥ यद्वृत्तयोगः प्राथम्यमित्याद्युद्देशलक्षणमिति न्यायेनात्र यथार्थस्योद्देशत्वावगमात् प्रसिद्धस्यैवान्य-त्रोद्देश्यत्वदर्शनात् प्रसिद्धत्वेन यथार्थस्यैव लक्षणत्वमित्यर्थः । पूर्वमित्यादावपि प्रथमोक्तस्य लक्ष्यत्वभ्रान्तिं वारयितुमाह **एवमिति** ॥ प्रसिद्धत्वेनैव लक्ष्यत्वमेवंशब्देन परामृश्यते । प्रकृते प्राथम्यस्योद्देश्यत्वावगतिद्वारा प्रसिद्धताज्ञाने उपयोगः । पूर्वमित्यादौ तु लक्षणपदविवक्षया नैवं भ्रान्तिरिति तात्पर्यम् ।

**(टीका) यथार्थं यथावस्थितार्थविषयीकारि । अर्थविषयीकारित्वमात्रस्य संशय-विपर्ययसाधारण्याद् विशेषणोपादानम् ।**

**(टिप्पणी)** घटाद्यर्थमतिक्रम्यापि ज्ञानस्यात्मनि वृत्तेरव्ययीभावार्थानतिवृत्तेरयुक्ततामाशङ्क्याह **यथार्थमिति** ॥ विषयीकारेऽनतिक्रमो विवक्षित इत्यर्थः । एवं च येन सम्बन्धेन यद् यत्रास्ति तेन सम्बन्धेन तत्र तद्विषयीकारित्वं फलितम् । यथावस्थितेत्यस्य प्रयोजनमाह **अर्थविषयीकारित्वेति** ॥ संशयेत्युपलक्षणम् । तत्साधनमपि द्रष्टव्यम् ।

**(टीका) अर्थविषयीकारित्वेनैव प्रमेयादिव्युदासः । अर्यत इत्यर्थो ज्ञेयमुच्यते । अतो न गम्यविषयीकारिगतावतिव्याप्तिः ।**

**(टिप्पणी)** अर्थविषयीकारित्वस्य ज्ञानजनकतया इन्द्रिय इवार्थेऽपि सत्त्वादतिव्याप्तिमाशङ्क्य आह **अर्थेति** ॥ नन्वर्थविषयीकारित्वं यदि विषयविषयिभावसम्बन्धः तदेच्छायामतिव्याप्तिः, यदि चार्थविषयकज्ञानत्वं तदेन्द्रियेऽव्याप्तिः, यदि च ज्ञानजनकसंसर्गगर्भत्वं तदाऽर्थेऽतिप्रसक्तिर्दुर्वारा, तत्साधनत्वगर्भत्वे ज्ञानेऽव्याप्तिस्तदवस्था । गमने च कथमतिव्याप्तिर्न स्यात् । ग्रामकर्मकं गमनमित्यनुभवेन ग्रामादेरपि विषयत्वात् । न च ज्ञेयपरतयाऽर्थपदस्य तद्वारणमिति वाच्यम् । ज्ञानोपलक्षितपरत्वे उक्तदोषतादवस्थ्यात् । विशिष्टपरत्वे इन्द्रियादावसम्भवापत्तेः । नापि ज्ञानतत्साधनान्यान्यत्वं विवक्षितोऽर्थः । तत्साधनान्यान्यस्य लिङ्गत्वे व्यर्थविशेषणत्वेऽपि तन्निष्ठधर्मस्य व्याप्यत्वे धूमालोकान्यान्यत्वस्य वह्निव्याप्यत्ववत् व्यर्थविशेषणत्वाभावात् । तदन्यान्यताव्यतिरिक्तस्य लघोर्व्याप्यतावच्छेदकस्याभावादिति वक्तुं युक्तम् । तदन्यान्यत्वस्य तदन्यभेदात्मकस्य एतल्लक्षणसाध्यत्वेनासिद्धेरिति चेत् ।

अत्राहुः । अर्थेन सह ज्ञानतद्विषयतत्साधनान्यानिरूपितसविषयत्वव्यवहारप्रयोजकसम्बन्धत्व-मित्यर्थः । पुरोवर्तिनि घटत्वज्ञानं घटादौ चक्षुरादि प्रमाणं घटादौ प्रत्यक्षं प्रमाणमित्यादौ

सम्यगर्थविषयत्वानुभवेन पूर्वोक्तसम्बन्धस्य केवलानुप्रमाणयोः सत्त्वात् । घटे घटः प्रमाणमित्याद्यनुभवाभावान्न प्रमेयादावतिप्रसक्तिः । न चैवमिच्छादावतिप्रसक्तिः । तद्विषयस्यान्यनिरूपितत्वात् । एवं चान्यानिरूपितत्वविशेषणलाभायैवेहार्यत इति ज्ञेयेनैव सह यः सम्बन्ध इत्यवधारणमभिप्रेत्य तस्य च साधनान्यव्यवच्छेदार्थत्वमभिप्रेत्य पूर्वोक्तं विशेषणं सूचितमिति द्रष्टव्यम् ।

*प्रमाणविभागः*

**(टीका) तद्विभागमाह—**

**(मूलम्) तद् द्विविधम् ।**

**प्रमाणानामानन्त्येऽपि साक्षात्पारम्पर्येण याथार्थ्यज्ञापनार्थोऽयं विभागः । एतदेव दर्शयन् द्वे विधे उद्दिशति—**

**(मूलम्) केवलमनुप्रमाणं च ।**

**साक्षाद् यथावस्थितार्थविषयीकारि केवलम् । परम्परया तादृशमनुप्रमाणमिति ।**

**(टिप्पणी)** ननु सविषयत्वस्य केवलानुप्रमाणसाधारणत्वे घटविषयकं ज्ञानमितिवत् घटविषयकं चक्षुरित्यादि कुतो न व्यवहार इत्याशङ्क्य तन्निरासार्थत्वं विभागस्य सूचयितुमाह **प्रमाणानामिति** ॥ तथाच केवलजनकतया सविषयके न केवलतुल्यो व्यवहार इति भावः । पारम्पर्यं केवलसाधनत्वमिति दर्शयितुं विशेषोद्देश इत्याह **एतदिति** ॥

*केवलप्रमाणलक्षणम्*

**(टीका) प्राधान्याभिप्रायेण प्रथममुद्दिष्टं केवलं लक्षयति—**

**(मूलम्) यथार्थज्ञानं केवलम् ।**

**संज्ञानिरुक्त्यैव लक्षणसिद्धौ शृङ्गग्राहिकया तज्ज्ञापनार्थं पृथगारम्भः । यथार्थेति संशयाऽदिव्युदासः ।**

**(टिप्पणी)** उद्देशस्य लक्षणनियामकत्वेऽपि उद्देश एव किं नियामकमित्याशङ्क्य तद् दर्शयितुमाह **प्राधान्येति** ॥ केवलसंज्ञयैव साक्षाद्विषयीकारित्वकथनाल्लक्षणे ज्ञाते किं पुनर्लक्षणेनेत्यत आह **संज्ञेति** ॥

यथा शृङ्गं गृहीत्वा व्यक्तिविशेषो निर्दिश्यते तथा किं केवलप्रमाणमिति जिज्ञासायां ज्ञानमिति विशेषनिर्देशेन तां निवर्तयितुमाहेत्यर्थः । यथार्थपदव्यावर्त्यमाह **यथार्थमितीति** ॥

*संशयनिरूपणम्*

**(टीका) अनवधारणज्ञानं संशयः । स द्विविधः । अनिर्दिष्टकोटिको निर्दिष्टकोटिकश्चेति । तत्र कोटीनामतिबाहुल्यादनिर्दिष्टकोटिरनध्यवसायापरनामा । यथा, 'किंसंज्ञकोऽयं वृक्षः' इति । द्वितीयोऽपि समानानेककोटिरन्यतरकोटिप्रधानश्चेति द्वेधा । तत्राद्यो यथा, 'किमयं ब्राह्मणस्तदितरो वा' इति । ऊहापरनामा द्वितीयो यथा, 'प्रायेणायं ब्राह्मणः' इति ।**

**(टिप्पणी)** व्यावर्त्यस्य व्यावर्तकधर्मवत्तयाऽज्ञाने तद्व्यावृत्तिर्ज्ञातुमशक्येत्यतः संशयं लक्षयति **अनव-धारणेति** ॥ परस्परविरुद्धप्रकारकैकधर्मिकनानाकोट्यवगाहिज्ञानमित्यर्थः । एवं च वस्तुगत्या विरुद्धविषयके संशयानात्मनि भ्रमे नातिव्याप्तिः । ज्ञानपदं च तज्जन्यशब्दवारणाय । अनध्यवसायस्यैककोटिकत्वात् तत्राव्याप्तिमाशङ्क्य तां परिहर्तुं तद्विभागपुरस्सरमुदाहरणमाह **स इति** ॥ तथाच नानाकोटिकत्वेऽपि विशिष्य कोट्यनुल्लेखान्नाव्याप्तिरिति भावः । प्रायेणायं ब्राह्मण इत्यादावपि तथात्वात् तस्याप्यनध्यवसायत्वापत्तिरित्याशङ्क्य तद्विवेचनार्थं द्वितीयमपि विभजति **द्वितीयोऽपीति** ॥ तथा चोहे विशेषतः कोट्यन्तरानुल्लेखेऽपि एकत्रोत्कटत्वमित्यर्थः ।

**(टीका) प्रत्येकं निश्चायकाभावसहकृतसमानासमानधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिजन्मा पञ्चधा भिद्यत इत्येके । तद्यथा, समानधर्मात् दीर्घत्वात् 'स्थाणुर्वा पुरुषो वा' इति । असमानधर्मात् आकाशविशेषगुणत्वात् 'शब्दो नित्योऽनित्यो वा' इति । विप्रतिपत्तेः 'भौतिकानीन्द्रियाणि उत अभौतिकानि' इति । उपलब्धेः 'किं सदिदमुदकमुतासत्' इति । अनुपलब्धेः 'किमत्र यक्षोऽस्ति न वा' इति ।**

**(टिप्पणी)** प्रमाणसामान्यलक्षणे व्यावर्त्यावसरे संशयपदेन तत्साधनस्याप्युपलक्षणात् तज्जिज्ञासायामाह **प्रत्येकमिति** ॥ उदाहरति **तद् यथेति** । **असमानधर्मादिति** ॥ आकाशविशेषगुणत्वस्य नित्यव्यावृत्ततया अनित्यत्वकोट्युपस्थापकत्वम् अनित्यव्यावृत्ततया नित्यत्वकोट्युपस्थापकत्वम् । **विप्रतिपत्तेरिति** ॥ भूतसमवायिकारणत्वं नैयायिकानां मतं वैकारिकाहङ्कारजन्यत्ववादिनां साङ्ख्यानामभौतिकत्वं मतम् । **उपलब्धेरिति** ॥ कूपखननानन्तरमिति शेषः ।

**(टीका) उपलब्ध्यनुपलब्ध्योः समानधर्म एवान्तर्भावात् त्रैविध्यमित्यपरे। समाने हि सदसतोरुपलब्धत्वानुपलब्धत्वे इति।**

**(टिप्पणी)** परमुखेनोपलब्ध्यनुपलब्धी तावत् समानधर्मेऽन्तर्भावयति **उपलब्धीति** ॥

**(टीका) असमानधर्मविप्रतिपत्त्योरपि समानधर्म एवान्तर्भावयितुं शक्यत्वात् ऐकविध्यमिति तत्त्वम्।**

**(टिप्पणी)** असमानधर्मविप्रतिपत्त्योरपि तत्रैवान्तर्भाव इति स्वयमाह **असमानेति** ॥ यद्यप्यारोप्य-कोटिद्वयसहचरिते समानधर्मपदप्रयोगोऽन्यत्र । अनयोश्च न तथात्वम् । तथाप्यारोप्यतद्व्याप्यत्व-निश्चयविषयभिन्नारोप्यकोटिसमानाधिकरणत्वमेव समानधर्मत्वम् । एवं च असमानधर्मस्थले यावन्नित्यनिष्ठात्यन्ताभावप्रतियोगियावदनित्यनिष्ठात्यन्ताभावप्रतियोगिरूपनित्यानित्यव्यावृत्ततया शब्दत्वज्ञाने नित्यव्यावृत्तधर्मवत्त्वस्य अनित्यसहचरितस्य अनित्यव्यावृत्तधर्मवत्त्वस्य नित्यत्व-सहचरितस्य शब्दे ज्ञानात् संशय इत्यनुभवसिद्धम् । तत्रासाधारणधर्मस्य वाऽक्लृप्तस्य हेतुताकल्पनमुत नित्यव्यावृत्तधर्मवत्त्वादेरेवेति सन्देहे समानधर्मस्य हेतुतया क्लृप्तत्वात् द्वितीयस्य च अतथात्वात् तस्यैव संशयहेतुत्वम् । शब्दत्वस्य नित्यानित्यव्यावृत्तत्वज्ञानं तु पूर्वोक्तसमानधर्मज्ञाने उपयुज्यत इत्येव कल्प्यते । न च कोटिद्वयसहचरितत्वं समानधर्मत्वं कारणतावच्छेदकं च लाघवात् तच्च नास्तीति कथं हेतुता क्लृप्तेति वाच्यम् । सामान्यरूपतयाऽस्मदुक्तस्यैव समानधर्मस्य जनकत्वात् । तस्य च प्रकृते सत्त्वात् । पुरुषत्वादिनिश्चये च न सन्देहः । तस्य प्रथमविशेषणेन वारणात् । करादिनिश्चयेऽपि न सन्देहः । तस्य द्वितीयेन विशेषणेन निरासात् । ऊर्ध्वतादिज्ञाने च न घटत्वादिसन्देहः । तत्र तृतीयविशेषणाभावात् ।

विप्रतिपत्तिस्थलेऽपि भौतिकत्वेन प्रतिपन्नत्वम् अभौतिकत्वेन प्रतिपन्नत्वं पूर्वोक्तसमानधर्मरूपं ज्ञात्वैव संशयः । न च तथा प्रतिपन्नत्वमज्ञात्वाऽपि वाक्यद्वयेन कोटिद्वयोपस्थितौ संशयात् तत्र विप्रतिपत्तेर्हेतुता नेति वाच्यम् । क्लृप्तत्वेन तत्रापि तज्ज्ञानकल्पनात् । किञ्च एकेन वाक्येनैककोटि-प्रतिपत्तौ तत्राप्रामाण्यशङ्कां विना न द्वितीयेनापरकोटिप्रतिपत्तिः । विरोधिज्ञानस्याप्रामाण्यशङ्काशून्यस्य सत्त्वादित्यतः प्रथमज्ञानेऽप्रामाण्यशङ्का वाच्या । तथा च ज्ञाने ज्ञायमाने विषये तद्विषयत्वं गृह्यत एव । न च वाक्यद्वयेन कोटिद्वयमात्रोपस्थितिरेव न तु धर्मिविशेषे । एवं च विरोधाभावान्नाप्रामाण्यशङ्काऽपेक्षणीया येन ज्ञाने ज्ञानविषये तथा प्रतिपन्नत्वं गृह्येतेति वाच्यम् । अनुभवापलापात् । न च द्वितीयज्ञानार्थं प्रथमज्ञानेऽप्रामाण्यशङ्काबलेन प्रथमप्रतिपन्नकोटिमत्तया प्रतिपन्नत्वज्ञानेऽपि द्वितीयज्ञानेऽप्रामाण्यशङ्का-

ऽनुपयोगान्न तद्बलेन द्वितीयकोटिमत्तया प्रतिपन्नत्वज्ञानमायातीति वाच्यम् । तत्राप्रामाण्यशङ्काविरहे तस्यैव निश्चयस्य संशयप्रतिबन्धकतापत्त्या तत्राप्यप्रामाण्यशङ्काया अवश्यम्भावात् । एतावांस्तु विशेषो यद् धर्मिज्ञानस्य हेतुत्वे तदेव समानधर्मज्ञानतयोपयुज्यते तदहेतुत्वे तु अप्रामाण्यशङ्कैव तेन रूपेणोपयुज्यत इति सङ्क्षेपः ।

### *विपर्ययलक्षणम्*

**(टीका) विपरीतनिश्चयो विपर्ययः । यथा, शुक्तिकायाम् 'इदं रजतम्' इति । ज्ञानमित्यनुप्रमाणव्युदासः । अनुमानादेरपि स्वविषये केवलत्वान्नातिव्याप्तिः ।**

**(टिप्पणी)** आदिपदग्राह्यं स्फुटयन्नाह **विपरीतेति** ॥ निश्चयपदं संशयान्यपरम्[1] । तद्वारणाय । विपरीतेति प्रमावारणाय । यत्र येन सम्बन्धेन यन्नास्ति तत्र तेन सम्बन्धेन तन्निश्चय इति फलितं द्रष्टव्यम् । केवललक्षणे ज्ञानपदव्यावर्त्यमाह **ज्ञानमितीति** ॥ याथार्थ्यं सामान्यलक्षणोक्तं द्रष्टव्यम् । तेन नातिव्याप्तिशङ्काया असम्भवः । नन्वनुमितिजनकलिङ्गज्ञानादेरप्यनुप्रमाणस्य यथार्थज्ञानत्वात् तत्र केवललक्षणमतिव्यापकमित्याशङ्क्याह **अनुमानादेरपीति** ॥ साक्षाद् यद् यत्र यथार्थं तत्र तस्य केवलत्वान्नानुमितिविषये तदापत्तिरिति भावः ।

### *अनुप्रमाणलक्षणम्*

**(टीका) अनुप्रमाणलक्षणमाह—**

**(मूलम्) तत्साधनमनुप्रमाणम् ।**

**(टीका) तदिति यथार्थज्ञानपरामर्शः । यथार्थेति संशयादिसाधनदुष्टेन्द्रियसन्निकर्षादिव्युदासः । ज्ञानग्रहणमनुप्रमाणसाधननिवृत्त्यर्थम् । साधनमिति केवलप्रमाणव्युदासः । अनुमानादेरपि लिङ्ग्यादिविषयेऽनुप्रमाणत्वात् । हेतुरित्युच्यमाने प्रमातृप्रमेययोरपि प्रसङ्गात् साधनग्रहणम् । सतोरपि कर्तृकर्मणोर्यदभावात् कार्याभावो यदनन्तरं चासति प्रतिबन्धे भवत्येव कार्यं तदुच्यते साधनमिति ।**

**(टिप्पणी)** ज्ञानमात्रस्य तच्छब्देन परामर्शभ्रान्तिं वारयितुमाह **तदितीति** ॥ यथार्थपदव्यावर्त्यमाह **यथार्थेति** ॥ ज्ञानपदस्य व्यावर्त्यमाह **ज्ञानेति** ॥ साधनपदस्य तदाह **साधनमितीति** ॥ नन्वनुमानादे-

1. अत्र 'निश्चय इति' पदं पूर्णीयमिति भाति ।

लिङ्गादिज्ञानात्मकस्य केवलप्रमाणत्वेनोक्तत्वात् । तद्व्यावृत्तियुक्तेत्याशङ्क्याऽह **अनुमानादेरपीति** ॥ स्वविषये तथात्वेऽपि अनुमितिविषयज्ञानसाधनत्वेनानुप्रमाणत्वा न व्याहन्यत इति भावः । सामान्यवाचकपदत्यागेन विशेषोपादाने बीजमाह **हेतुरितीति** ॥ तदनुकूलव्यापारवत्त्वस्य प्रमातृप्रमेययोरपि सत्त्वादाह **सतोरपीति** ॥ एवं च निर्दुष्टेन्द्रियसन्निकर्षादिस्तथा तद्विशिष्टमिन्द्रियं वा तथेति भावः ।

**(टीका) यथा, व्यापारवान् कुठारः । अत एव न यादृच्छिकसंवादिलिङ्गविभ्रमादावतिव्याप्तिः । यथार्थमित्येवोक्ते केवले अतिव्याप्तिः । ज्ञानमित्येवोक्ते तत्र संशयादौ च । प्रत्यक्षे अव्याप्तिश्च । साधनमित्येवोक्ते कुठारादौ । अतो विशिष्टग्रहणम् ।**

**(टिप्पणी)** अत एवाऽह **यथेति** ॥ यदवच्छिन्नमवश्यं प्रमां जनयत्येव तत्रैव तान्त्रिकाणां प्रामाण्यव्यवहारो यथा अकाङ्क्षादिमति शब्दे । अतो यादृच्छिकलिङ्गभ्रमादीनां व्यावृत्तिर्युक्तेत्याह **अत एवेति** ॥ व्यत्यासेन व्यावर्त्यकथनायाह **यथार्थमित्यादि** ॥

*प्रमात्रादिलक्षणम्*

**(टीका) प्रमावान् प्रमाता । प्रमाविषयः प्रमेयम् । यथार्थज्ञानं प्रमा । प्रमातुः प्रमेयत्वेऽपि विवक्षावशात् पृथगुक्तिः ।**

**(टिप्पणी)** व्यावर्त्यत्वेनोपस्थितयोः प्रमातृप्रमेययोः स्वरूपमाह **प्रमावानित्यादिना** ॥ ननु प्रमेयपदेनैव प्रमातृसङ्ग्रहात् पृथगुक्तिरनर्थिकेत्याशङ्क्याह **प्रमातुरिति** ॥ प्रमाश्रयत्वं विशेषमादाय गोबलीवर्दन्यायेन तस्य पृथगुक्तिरिति भावः । अत्र यद्यप्यनुप्रमाणलक्षणे साधनत्वस्य पूर्वोक्तस्य शब्दादौ कथं सत्त्वं तस्मिन् सत्यपि ज्ञानानुदयात्, न च आकाङ्क्षादिसहितस्यावश्यं प्रमाजनकत्वम्, आकाङ्क्षादिज्ञानस्यैव प्रमाणत्वापत्तौ विनिगन्तुमशक्यत्वात् तथापि सतोरपीत्यादिना लक्षणोपलक्ष्यस्वरूपसम्बन्धविशेष एव साधनत्वपदार्थ इति द्रष्टव्यम् । इदं च परनये । अस्मन्नये तु शक्तिविशेषावच्छिन्नस्यैव साधनत्वम् । स च विशेषः तान्त्रिकाणां यत्र साधनत्वव्यवहारस्तत्रैव कल्प्यत इति विशेषः ।

*केवलप्रमाणविभागः*

**(टीका) केवलप्रमाणं विभजति—**

**(मूलम्) केवलं चतुर्विधम् ।**

**अयमपि महावैलक्षण्यज्ञापनार्थो विभागः । चतस्रो विधाः प्राधान्यक्रमेण उद्दिशति—**

**(मूलम्) ईशलक्ष्मीयोग्ययोगिभेदेन ।**

**(टिप्पणी)** तार्किकादिमतव्यावर्तनार्थत्वं विभागस्य सूचयन्नाह **अयमपीति** ॥ **प्राधान्येति** । आश्रय-प्राधान्येत्यर्थः ।

**(टीका) ज्ञानिनामेवं भेदेन निमित्तेन ज्ञानस्यापि चातुर्विध्यम् । ज्ञानपदं वा संयोज्यम् ।**

**(टिप्पणी)** ज्ञानस्य विधाकथने उद्देश्ये तदाश्रयभेदकथनमयुक्तमित्याशङ्क्याह **ज्ञानिनामिति** ॥ आश्रयभेदकथनमपि तदर्थमिति भावः ॥ **ज्ञानपदं वेति** । अयोगिपदात् परत इति शेषः ।

**(टीका) अनुप्रमाणस्य केवलप्रमाणसाधनत्वेनोक्तत्वात् चतुर्विधमपीदं तज्जन्यं, तत एवानित्यं चेति न मन्तव्यमित्याह—**

**(मूलम्) पूर्वद्वयमनादि नित्यम् ।**

**(टीका) ईशलक्ष्मीज्ञानम् ।**

**(टिप्पणी)** ईशलक्ष्मीज्ञानयोरनादित्वकथनस्य प्रयोजनमाह **अनुप्रमाणस्येति** ॥ पूर्वपदस्येशलक्ष्मी-परत्वभ्रान्तिं वारयितुमाह **ईशेति** ॥

**(टीका) द्वयोरप्यनादिनित्यत्वे को विशेषो येन पृथग्ग्रहणमित्यत आह—**

**(मूलम्) स्वातन्त्र्यपारतन्त्र्याभ्यां तद्विशेषः ।**

**(टीका) अनादिनित्यत्वसाम्येऽपि स्वसत्तादौ स्वतन्त्रमीशज्ञानं, तदधीनं लक्ष्मी-ज्ञानमिति महाविशेषात् पृथग्ग्रहणमुपपद्यते ।**

**(टिप्पणी)** स्वातन्त्र्येत्यादिग्रन्थस्य स्वातन्त्र्यपारतन्त्र्याभ्यां तयोरीशलक्ष्मीज्ञानयोः विशेषो भेदो योग्यादिज्ञानादित्युभयस्य योग्यादिज्ञानवैलक्षण्यकथनार्थत्वभ्रान्तिं, ताभ्यां तयोर्भेद इत्येवमीशलक्ष्मी-ज्ञानयोरेव प्रत्येकं द्वैविध्यकथनार्थत्वभ्रान्तिं वा वारयितुमाह **द्वयोरपीति** ॥ नित्यत्वे पारतन्त्र्यस्य असम्भवमाशङ्क्य स्वरूपसम्बन्धापरपर्यायविशेषात्मकत्वस्य ईशनियम्यत्वस्य लक्ष्मीज्ञाने सम्भव इति परिहारार्थमाह **अनादीति** ॥ उपपद्यत इत्यस्यानन्तरम् इति भाव इति शेषः । पारतन्त्र्यस्य ब्रह्मादिज्ञानसाधारण्येन लक्ष्मीज्ञानमात्रव्यावर्तकत्वायोगात् ।

(टीका) अनेन स्वतन्त्रज्ञानमाद्यम्, ईशैकाधीनं द्वितीयमिति द्वयोर्लक्षणं सूचितं भवति । आद्ये स्वतन्त्रमिति लक्ष्म्यादिज्ञाननिवृत्तिः । ज्ञानमितीशव्युदासः । द्वितीये ईशाधीनमिति ईशज्ञाननिवृत्तिः । एकेति ब्रह्मादिज्ञाननिवृत्तिः । ज्ञानमिति लक्ष्मीव्यावृत्तिः ।

(टिप्पणी) योग्यादिज्ञानवत् स्वसाधारणविभागप्रयोजकधर्मानुपपत्तिमाशङ्क्य असाधारणधर्मकथनेन शङ्कापरिहारं सूचयितुमाह **अनेनेति** ॥ यथाक्रमं लक्षणद्वयेऽपि व्यावर्त्यमाह **आद्य इत्यादिना** ॥

(टीका) तयोर्विशेषान्तरमाह—

**(मूलम्) पूर्वं स्वपरगताखिलविशेषविषयम् ।**

(टीका) लक्ष्मीज्ञानस्याप्यतिमहत्त्वेनैतत्सम्भवात् कथमीशज्ञानस्य विशेष इत्यत आह—

**(मूलम्) द्वितीयमीशेऽन्येभ्योऽधिकम् ।**

(टीका) लक्ष्मीज्ञानमीशविषये ब्रह्मादिज्ञानेभ्य एवाधिकविषयम् ।

**(टिप्पणी)** पृथग्ग्रहणप्रयोजकस्य पूर्वमेवोक्तत्वात् पूर्वमित्यादेरानर्थक्यमाशङ्क्याह **तयोरिति** ॥ ईशज्ञानं स्वगता ईशज्ञानगताः परगता ईशज्ञानव्यतिरिक्तगता ये अखिला विशेषाः तद्विषयमिति मूलार्थः ।

[1]पूर्वमित्यनेनैव विशेषसिद्धेः द्वितीयमित्याद्यानर्थक्यमाशङ्क्य पूर्वमित्यादेर्लक्ष्मीज्ञानसाधारण्येन विशेषानापादकतानिराकरणार्थत्वेन सार्थक्यमाह **न त्विति** ॥

**(टिप्पणी) महत्त्वेनेति** । इतरापेक्षया बहुविषयत्वेनेत्यर्थः । अन्येभ्योऽधिकविषयत्वस्येशज्ञान-साधारण्येन विशेषानापादकत्वतादवस्थ्यमाशङ्क्याह **लक्ष्मीज्ञानमिति** ॥ ईशज्ञानं तु लक्ष्मीज्ञानादपीति विशेष इति गूढो भावः ।

(टीका) किञ्च अत इत्यत आह—

**(मूलम्) असार्वत्रिकम् ।**

(टीका) न तु ईशे सर्वविशेषविषयम् । अतस्तयोरस्ति विशेषः ।

**(टिप्पणी)** एवमपीशज्ञानापेक्षया आधिक्यं मास्तु साम्यं तु स्यादिति ब्रह्मादिज्ञानेभ्य एवाधिकं न

---

१. इदं वाक्यं उत्तरमूलसम्बन्धि वा पूर्वसम्बन्धि वेति न निश्चितम् । अस्य मूलं किमिति न स्पष्टम् ।

तु ईशज्ञानादित्यर्थभ्रान्त्याऽवधारणाशयमजानानस्य शङ्कां निराकर्तुमाशयविवरणार्थमुत्तरग्रन्थ इति सूचयितुमाह **किञ्चेति** ॥ **अत इति** ॥ ब्रह्मादिज्ञानेभ्य एवाधिकत्वेऽपीत्यर्थः । यद्वा लक्ष्मीज्ञानस्येशतदतिरिक्तयोरसार्वत्रिकत्वस्य सामान्यवाचकपदात् प्रतीतेर्ब्रह्मादिज्ञानाधिकता पूर्वोक्ता न युक्तेत्याशङ्क्याह **किञ्चेति** ॥ ईश इत्यस्यानुषङ्गो नोऽभिप्रेत इति भावः । अभिसन्धिविवरणार्थत्वं द्योतयन्नुपसंहरति **अत इति** ॥

**(टीका) यथेशेऽसार्वत्रिकं तथा किमन्यत्रापि । नेत्याह—**

**(मूलम्) अन्यत्र सर्वविषयम् ।**

**(टिप्पणी)** 'ईशे न सर्वविशेषविषयमि'ति विशेषनिषेधेनैवान्यत्र सर्वविषयत्वलाभेऽपीशे विषये ब्रह्मादि-ज्ञानेभ्योऽधिकमिति विशेषविधिनाऽन्यत्र ब्रह्मादिज्ञानन्यूनताशङ्कोदयात् तन्निरासार्थत्वमुत्तरग्रन्थस्य सूचयन्नाह **यथेति** ॥ तथा किमन्यत्रापीति काक्वा पूर्वोक्तविशेषविधिः शङ्काबीजं दर्शितम् ।

**(टीका) किम् ईशलक्ष्मीज्ञानयोरन्यत्र तर्हि साम्यमेव । नेत्याह—**

**(टिप्पणी)** नन्वेवं पूर्वं स्वपरेत्यादौ स्वगताखिलविशेषविषयमित्यनेन विशेषसिद्धेः परगताखिलविशेषविषयत्वस्य च लक्ष्मीज्ञानसाधारण्येन पार्थक्येनापि विशेषायोगात् परगतेति व्यर्थमित्याशङ्क्य यादृशमीशज्ञाने परगतविशेषविषयत्वं न तादृशं लक्ष्मीज्ञानेऽस्तीति पृथग् विशेषणतया सार्थक्यमित्येवं परिहारसूचनार्थत्वमुत्तरग्रन्थस्य सूचयन्नाह **किमीशेति** ॥ अन्यत्र तर्हि साम्यमेवेत्यनेन यद्यत्र साम्यं तर्हि परगतेत्यस्य पृथग्विशेषणताया असम्भवाद् आनर्थक्यमिति शङ्कां काक्वा सूचयता तत्परिहारार्थत्वमुत्तरग्रन्थस्य सूचितम् ।

**(मूलम्) स्पष्टत्वे भेदः ।**

**(टीका) द्वयमपीशादन्यत्र सर्वविषयं स्पष्टं च । तत्रेशज्ञानं निरतिशयस्पष्टम् । न तथा लक्ष्मीज्ञानमित्यस्त्येव विशेषः ।**

**(टिप्पणी) स्पष्टत्वे** भेदनिमित्ते ज्ञानयोर्भेद इत्यर्थः । एकस्य स्पष्टत्वमपरस्यास्पष्टत्वमिति भ्रान्तिं वारयति **द्वयमपीति** ॥ सर्वविषयत्वोक्तिः पूर्वानुवादमात्रार्था । स्पष्टमित्येव विवक्षितम् । एवं चोभयोः स्पष्टत्वस्य समत्वात् तन्निमित्तो न ज्ञानयोर्भेदः । अपि तु स्पष्टत्वे धर्मिणि निरतिशयत्वादिरूपभेद इति भावः । निरतिशयस्पष्टत्वादिरूपधर्मविशिष्टस्पष्टत्वाश्रयं विवेचयति **तत्रेति** ॥ तथा च परगताखिलविशेषेषु

निरतिशयस्याष्टमीशज्ञानमिति ईशज्ञानविशेषान्तरोक्त्यर्थं परगनेति सार्थकमिति फलितं द्रष्टव्यमिति सूचयितुमाह इत्यस्त्येवेति ॥

**(टीका) अथवा पूर्वमित्यनेन कात्स्न्र्येन ईशविषयत्वं लक्षणान्तरं ईशज्ञानस्य सूचितम् । तत्र कात्स्न्र्येनेति लक्ष्म्यादिज्ञानव्युदासः । कृत्स्नजगद्विषयं लक्ष्मीज्ञानमपि भवतीतीशग्रहणम् ।**

**(टिप्पणी)** पूर्वोक्तया रीत्या पूर्वव्याख्याने तत्तच्छङ्कापरिहारार्थत्वेन पूर्वग्रन्थजातसामञ्जस्ये करिष्यमाणव्याख्याने च परगनेत्यस्य व्यर्थत्वाऽपरिहारेण प्रयासाधिक्येन क्लिष्टतां पूर्वव्याख्यानस्य मत्वा व्याख्याविभवाय पूर्वमित्यादिग्रन्थजातं लक्षणकथनार्थत्वेन व्याख्यास्यन् पूर्वमिति तावदीश-लक्षणकथनार्थत्वेन व्याचष्टे **अथवेति** ॥ ईशपदप्रयोजनमाह **कृत्स्नेति** ॥ कृत्स्नविषयमित्युक्ते यद्यपि न लक्ष्मीज्ञाने प्रसङ्गः । ईशगतविशेषविषयत्वाभावात् । तथापि कात्स्न्र्यस्य प्रकारतयोपादानात् तस्य किञ्चिद्विषयमादाय पर्यवसानसम्भवेऽतिव्याप्तिशङ्कायां तन्निरासायेशग्रहणमित्यर्थः ।

**(टीका) ईशेऽन्येभ्योऽधिकमसार्वत्रिकमिति लक्ष्मीज्ञानस्य लक्षणान्तरम् । ईशग्रहणं स्वरूपकथनार्थम् । असार्वत्रिकत्वासम्भवनिवृत्त्यर्थं च ।**

**(टिप्पणी)** ईशेऽन्येभ्योऽधिकमित्येतस्येशज्ञानसाधारणत्वेन लक्ष्मीज्ञानसाधारणत्वायोगात् ईशज्ञानस्यैवेदं लक्षणमिति शङ्कां वारयन् असार्वत्रिकमित्येतदेकवाक्यतया ईश इत्येतत् लक्ष्मीज्ञानलक्षणपरतया व्याचष्टे **ईश इति** ॥ अन्यपदस्य सङ्कोचाभावे इतरमात्रपरत्वेऽप्य-सार्वत्रिकपदसमभिव्याहारे असार्वत्रिकत्वसर्वाधिकत्वयोर्व्याघातात् ब्रह्मादिज्ञानमात्रपरत्वमभिप्रेतमिति नेशज्ञानलक्षणत्वशङ्का युक्तेति भावः । ईशपदस्य लक्षणानन्तर्भावात्र वैयर्थ्यदोष इत्यभिप्रेत्याह **ईशग्रहणमिति** ॥ **असार्वत्रिकेति** ॥ अन्यत्र सर्वविषयत्वस्याभिप्रेतत्वेन प्रतीयमानासम्भवनिवृत्त्यर्थ-मित्यर्थः ।

**(टीका) अन्येभ्योऽधिकमिति ब्रह्मादिज्ञानव्युदासः । असार्वत्रिकमिति ईश-ज्ञाननिरासः । ईशेऽसार्वत्रिकमन्यत्र सर्वविषयमिति तल्लक्षणान्तरम् । ईशादन्यत्रग्रहणं व्याघातपरिहारार्थम् । ईशेऽसार्वत्रिकमिति ईशज्ञाननिवृत्तिः । अन्यत्र सर्वविषय-मित्यस्मदादिज्ञानव्युदासः ।**

**(टिप्पणी)** अन्यपदस्य सामान्यपरत्वे लक्ष्मीज्ञानेऽसम्भवात् विशेषपरत्वे चास्मदादिज्ञानाधिकत्वा-सार्वत्रिकत्वयोर्ब्रह्मादिज्ञानसाधारण्यमाशङ्क्यान्यपदस्य ब्रह्मपरत्वमभिप्रेतमिति परिहारं सूचयन्नाह **अन्येभ्य इति** ॥ अन्यत्र सर्वविषयत्वस्येशलक्ष्मीज्ञानसाधारण्येनैकतरलक्षणत्वस्यायोगाद् अन्यत्रेत्यस्यानर्थक्य-माशङ्क्य असार्वत्रिकपदानुषङ्गेन लक्ष्मीज्ञानलक्षणपरतया तद् व्याचष्टे **ईश इति** ॥ यथासम्भवं विशेषणप्रयोजनमाह **ईशादिति** ॥

**(टीका) ऋजुज्ञानेऽतिव्याप्तिपरिहारायानालोचनेऽपीति ग्राह्यम् । तस्यालोचने अन्यत्र सर्वविषयत्वं वक्ष्यति । स्पष्टत्व इत्यनेनापि निरतिशयस्पष्टं ईशज्ञानं, ईशज्ञानमेव यतोऽधिकस्पष्टं तत् लक्ष्मीज्ञानम् इत्यनयोर्लक्षणान्तरं सूचितं भवति ।**

**(टिप्पणी)** ऋजुज्ञानेऽतिप्रसङ्गमाशङ्क्याह **ऋज्विति** ॥ **आलोचनं** प्रणिधानं चिन्तनापरपर्यायम् । अपेक्षिकस्पष्टत्वस्यास्मदादिज्ञानसाधारण्यान्नान्यतरलक्षणत्वं सम्भवतीत्याशङ्क्याह **स्पष्टत्व इति** ॥ स्पष्ट-प्रतियोगिकापकर्षानाश्रयत्वविशिष्टस्पष्टत्वम्, ईशज्ञानमात्रनिरूपितापकर्षाश्रयत्वं लक्षणद्वयार्थः ।

### *योगिज्ञानविभागः*

**(टीका) योगप्रभावलब्धातिशयं योगिज्ञानम् । तत् त्रिविधम् । ऋजुतात्त्विका-तात्त्विकयोगिज्ञानभेदेन ।**

**(टिप्पणी)** सकलयोगिज्ञानसाधारणरूपज्ञानं विना तद्भेदविशेषस्य ज्ञातुमशक्यत्वादाह **योगेति** ॥ यद्वा योगजन्यज्ञानत्वस्य योगिज्ञानलक्षणत्वे ऋज्वादिज्ञानानामनादित्वोक्तिर्व्याहन्येतेत्याशयेन तदविरुद्धं लक्षणमाह **योगेति** ॥ उत्तरग्रन्थस्य विषयविवेकार्थं योगिज्ञानविभागमाह **तदिति** ॥ ता एव विधा उद्दिशति **ऋज्विति** ॥

**(टीका) तत्र पूर्ववदृजुज्ञानं नानुप्रमाणजन्यमनित्यं चेत्याह—**

**(मूलम्) योगिनामृजूनामनादिनित्यम् ।**

**केषां योगिनाम् । ऋजूनाम् इति योज्यम् । योगिज्ञानं इति पाठे ज्ञानमिति शेषः ।**

**(टिप्पणी)** अनादिनित्यत्वमात्रस्येशज्ञानेऽतिप्रसक्ततया ऋजुयोगिज्ञानलक्षणत्वायोगात् स्वरूपकथनमात्रार्थत्वेनोत्तरग्रन्थं व्याचष्टे **तत्रेति** ॥ तेष्वित्यर्थः । योगिनाम् ऋजूनामनादिनित्यमित्यत्र विशेष्याभावादपूर्णत्वमाशङ्क्याह **ज्ञानमिति शेष इति**[1] ॥ तत्र ऋजूनामित्यस्यानन्वयमाशङ्क्याह योगिज्ञानमिति पाठे केषाञ्चित् योगिनाम् ऋजूनामिति योज्यमिति ऋजुत्वस्य योगिविशेषणत्वेन सापेक्षस्य योगिशब्दस्य ज्ञानशब्देन सह समासायोगात् सम्बन्धिशब्दत्वाभावेन देवदत्तस्य गुरुकुलमित्यादि-वन्नित्यसापेक्षत्वेनापि समाससमर्थनानुपपत्तेः शाब्दविशेषणविशेष्यभावस्याभ्युपगमायोगात् ऋजुसम्बन्धि यद् योगप्रभावलब्धातिशयं ज्ञानं तदनादिनित्यमित्यस्यार्थस्याभिप्रेतत्वेऽपि ऋजुत्वयोगयोर्वैयधिकरण्ये योगप्रभावलब्धातिशयज्ञानस्य ऋजुसम्बन्धित्वायोगाद् अर्थत ऋजुत्वस्य योगिविशेषणत्वमभिप्रेत्य केषां योगिनां ऋजूनामिति योज्यमित्युक्तम् ।

क्वचित् पुस्तके 'इत्याहे'त्यस्यानन्तरं 'योगिज्ञानमृजूनामनादिनित्यं केषां योगिनां ऋजूनामि'ति योज्यम् । 'योगिज्ञानमि'ति पाठे 'ऋजूनां ज्ञानमि'त्येव शेष इत्येव पाठो दृश्यते । तत्रापि 'इति' योज्यमित्येतद् आर्थिकविशेषणविशेष्यभावमभिप्रेत्य उक्तम् । 'योगिज्ञानमि'त्यस्य तु योगिज्ञानमित्य-स्मान्निष्कृष्टं विपरिणतज्ञानपदमनुषक्तमध्याहृतविशेषाकाङ्क्षापूरकशेषत्वेनादाय योगिज्ञानमध्ये ऋजूनां ज्ञानमनादिनित्यमित्यर्थः कार्य इत्यर्थः ।

## (टीका) असार्वत्रिकत्वात् योगविभागः ।

**(टिप्पणी)** ननु योगिज्ञानस्याप्यनादिनित्यत्वे पूर्वत्रयमनादिनित्यमित्येकग्रन्थेनैवेशादिज्ञानेन सहानादित्वोक्तिसम्भवे किमर्थं पृथग्ग्रन्थेन योगिज्ञानस्यानादित्वाद्युक्तिरित्याशङ्क्याह**असार्वत्रिकत्वादिति** ॥ ईशादिज्ञानवद् विभाजकोपाध्यवच्छिन्ने सर्वत्र योगिज्ञानेऽनादित्वायोगात् सहोक्त्यसम्भवेन पृथग् ऋजुज्ञानमात्रेऽनादित्वाद्युक्तिरित्यर्थः । केचित्तु असार्वत्रिकत्वादिति ईशेऽसार्वत्रिकत्वादित्यर्थ इति वदन्ति । तन्न । लक्ष्मीज्ञानेऽपि योगविभागापत्तेः । न च लक्ष्मीज्ञानापेक्षयाऽप्यस्य न्यूनविषयत्वेन योगविभाग इति वाच्यम् । लक्ष्मीज्ञानस्यापीशज्ञानापेक्षया न्यूनविषयत्वेन योगविभागापत्तेस्तुल्यत्वात् । न च पूर्वोक्तेऽपि व्याख्याने पूर्वद्वयम् ऋजुयोगिज्ञानं चानादिनित्यमित्येकग्रन्थेनानादित्वाद्यभिधानशङ्का न परिहृता स्यादिति वाच्यम् । ऋजुयोगिज्ञानत्वेन पूर्वमप्रकृततयेशादिज्ञानेन सहानादित्वाद्युक्तिशङ्काया एवासम्भवात् ।

---

१. क्वचिन्मूले योगिज्ञानमृजूनामनादिनित्यमिति पाठः । तेन मूले प्रचलितपाठाद्भिन्नपाठः आदृतः श्रीविजयीन्द्रतीर्थैः इति स्पष्टं भवति ।

*ऋजुयोगिज्ञानलक्षणम्*

**(टीका) तल्लक्षणमाह—**

**(मूलम्) ईशे जीवेभ्योऽधिकम् ।**

**ऋजुव्यतिरिक्तजीवज्ञानेभ्य एव । ईश इति स्वरूपकथनम् । जीवेभ्योऽधिकमित्यस्मदादिज्ञाननिरासः । अवधारणेनेशलक्ष्मीज्ञाननिवृत्तिः ।**

**(टिप्पणी)** अनादिनित्यत्ववत् जीवेभ्योऽधिकत्वस्याप्यतिप्रसक्ततया लक्षणत्वायोगात् स्वरूपकथनमात्रार्थत्वभ्रान्तिं वारयितुमाह **तल्लक्षणमिति** ॥ यत्किञ्चिज्जीवाधिक्यस्यास्मदादिज्ञानेऽपि सत्वात् सकलजीवाधिकत्वस्य च स्वापेक्षयैवात्र ऋजुज्ञानेऽधिकत्वाभावेनानुपपत्तेः । ईशादिज्ञानेऽतिप्रसक्तस्य लक्षणत्वानुपपत्तिज्ञाने विषयकृतातिशयस्य विजातीयावधिकत्वस्य चायुक्तत्वमाशङ्क्याह **ऋजुव्यतिरिक्तेति** ॥ जीवपदस्य स्वातिरिक्तसकलजीवजातपरत्वात् जीवेभ्य एवेत्यवधारणस्य चाभिप्रेतत्वात् पूर्वोक्तदोषानापत्तिरित्याशयः । तथापीश इत्यस्य व्यर्थत्वाद् व्यर्थविशेषणतया लक्षणत्वानुपपत्तिरित्याशङ्क्याह **ईश इतीति** ॥ ऋजुव्यतिरिक्तसकलजीवजातनिरूपितोत्कर्षाश्रयत्वे फलिते लक्षणे तद्विशेषणकृत्यमाह **जीवेभ्य इत्यादिना** ॥

**(टीका) लक्षणान्तरं चाऽह—**

**(मूलम्) अन्यत्राऽलोचने सर्वविषयम् ।**

**अन्यत्र ईशादिति शेषः । अन्यत्रग्रहणमसम्भवनिवृत्त्यर्थम् । आलोचन इतीशलक्ष्मीज्ञाननिरासः । सर्वग्रहणमस्मदादिज्ञाननिरासार्थम् ।**

**(टिप्पणी)** इतरसकलजीवज्ञानाधिक्योक्त्या सर्वविषयत्वस्य ज्ञातुं शक्यत्वात् तन्मात्रापेक्षया अधिक्योक्त्या च ईशलक्ष्मीज्ञानन्यूनत्वोक्तेरीशातिरिक्तत्वस्य विषयविशेषणस्यालोचनापेक्षत्वस्य ज्ञानविशेषणस्य ज्ञातुं शक्यतया स्वरूपकथनमात्रार्थत्वेऽनतिप्रयोजनतामन्यत्रेति ग्रन्थस्य मत्वा लक्षणान्तरकथनार्थत्वमाह **लक्षणान्तरं चाहेति** ॥ पूर्वोक्तप्रकारस्यातिक्लिष्टतया स्वरूपकथनार्थत्वमप्यनुमतं सूचयितुं चकारः । अन्यत्रेत्यस्येशेऽपि सत्त्वात् तत्र सर्वविषयत्वोक्तिर्विरुद्धेत्याशङ्क्याह **अन्यत्रेशादिति शेष इत्यादि** ॥ यद्यपीशेऽधिकमन्यत्र सर्वविषयकमिति समभिव्याहारादेवेश इति लभ्यते । तथापि जीवेभ्य

इत्यस्यान्यपदान्वययोग्यविभक्तिमत्तया तेन सहान्वयप्रतीतिं वारयितुम् ईशपदे पञ्चम्यश्रवणेऽपि अर्थनामन्वययोग्यतावशेनान्यपदान्वययोग्यपञ्चमीविभक्तिमत्तया विपरिणतमीशपदमेवान्यपदस्य शेषोऽन्वयीत्युक्तम् । आलोचनप्रयोज्येशातिरिक्तसर्वविषयत्वे फलिते विशेषणप्रयोजनमाह **अन्यत्र ग्रहणमित्यादिना ॥**

**(टीका) ऋजुज्ञानं यद्यनादिनित्यं तर्हि कथं तत् योगिज्ञानम् । योगजं हि योगिज्ञानमित्यत आह**

**(मूलम्) क्रमेण वर्धमानम् ।**

**योगप्रभावेन वृद्धिसद्भावात् योगिज्ञानत्वं युक्तम् । क्रमेण वर्धमानत्वे मुक्तावपि किं वर्धत इति । नेत्याह—**

**(टिप्पणी)** स्वकृतस्य योगिसामान्यलक्षणस्य मूलकारसम्मतत्वं सूचयन् क्रमेणेत्यादेस्तात्विकादि-ज्ञानलक्षणार्थत्वभ्रान्तिं वारयति **ऋज्विति ॥** क्रमेण विषयाधिक्यरूपवृद्धिसद्भावेऽपि योगस्योपयोगानुक्तेः कथं योगिज्ञानतोपपादनमित्याशङ्क्य योगप्रभावेनेति शेषपूरणपूर्वकं स्वोक्तलक्षणं योजयति **योगेति ॥** एतच्छरीराद्यधीनवृद्धेर्निरवधिकत्वे एतच्छरीरादेरपि तथात्वापत्तावनिर्मोक्षप्रसङ्ग इत्याशङ्कानिरासार्थत्वेनोत्तरग्रन्थं व्याख्यातुं शङ्कां तावदाह **क्रमेणेति ॥** निरवधिकक्रमवृद्धौ त्वदभिमतकालेऽपि एतच्छरीरसाध्ययोगाधीनवृद्ध्यापत्त्या अनिर्मोक्षापत्तिरिति शङ्कार्थः । शङ्कानिरासार्थत्वेन उत्तरग्रन्थमवतारयति **नेत्याहेति ॥** आङोऽभिविध्यर्थत्वे व्याघातमाशङ्क्याह **आङिति ॥** यद्वा क्रमवृद्धेर्मुक्तिदशायामभावात् सामान्यलक्षणाव्याप्तिशङ्कानिरासार्थत्वेन उत्तरग्रन्थं व्याख्यातुमव्याप्तिशङ्कां तावदाह **क्रमेणेति ॥** अपेर्भिन्नक्रममङ्गीकृत्य किमश्च प्रतिक्षेपार्थमङ्गीकृत्य क्रमेण वर्धमानत्वेऽपि मुक्तौ न वर्धत इति शङ्काग्रन्थो योज्यः । अव्याप्तिशङ्कापरिहारार्थत्वेनोत्तरग्रन्थमवतारयति **नेत्याहेति ॥**

**(मूलम्) आमुक्तेः ।**

**(टीका) आङ् मर्यादायाम् । अभिवृद्धनदीवत् पुनः किं ह्रासो भवति । नेत्याह—**

**(मूलम्) ततोऽव्ययम् ।**

**(टिप्पणी)** आङोऽभिविध्यर्थतया तदापि क्रमवृद्ध्यभ्युपगमेन अव्याप्तिशङ्कापरिहारार्थत्वं वक्तुमाह **आङिति ॥** तदा क्रमवृद्ध्यभावेऽपि मुक्तिप्राक्कालीनक्रमवृद्धेस्तदाप्यनुवृत्तेर्नाव्याप्तिरिति परिहाराशय

इत्याशयः । कादाचित्कवृद्धिसद्भावेनाव्याप्तिशङ्कापरिहारसम्भवेऽपि मुक्तावप्यनुवर्तमानायास्तस्यास्त्यागा-योगात् तत्कालीनसत्वाभ्युपगमेनाव्याप्तिपरिहारः कृत इति द्रष्टव्यम् । ऋजुज्ञानस्य पूर्वमिव नित्यत्वोक्तेः पुनस्तत इत्यनेन तदभिधानानर्थक्यमित्याशङ्क्य नानेन नित्यत्वं कथ्यते किन्त्वभिवृद्धनद्यादेर्ह्रासदर्शनेन सामान्यतोदृष्टानुमानेन मुक्तौ ह्रासानुमानान्मुक्तिप्राक्कालीनवृद्धेरप्यनुवृत्त्यभावात् तत्कालीनवृद्ध्यभ्युप-गमेनाव्याप्तिपरिहारो न सम्भवतीत्याशङ्कापरिहारार्थं ह्रासाभावोऽव्ययशब्देनोच्यत इति सूचयितुं शङ्कां तावदाह **अभिवृद्धेति** ॥ नदीदृष्टान्तेन तस्य ह्रासो भवति किमिति मृदूक्तिः ।

**(टीका) तात्त्विकातात्त्विकयोगिज्ञानलक्षणं युगपदाह—**

**(मूलम्) ततोऽर्वाक् क्रमेण हसितम् ।**

**(टीका) ऋजुभ्योऽन्येषां योगिनां ज्ञानं ईशात् अन्यत्र क्रमेण किञ्चिन्मात्रहासयुक्तं भवति ।**

**(टिप्पणी)** ततोऽर्वागिति ग्रन्थः मुक्तिपूर्वकाले ऋजुज्ञानस्य हसितत्वोक्त्यर्थतया भासमानं क्रमेण वर्धमानत्वोक्त्या विरुद्धत्वादयुक्तमित्याशङ्क्य तात्त्विकादिज्ञानलक्षणकथनार्थत्वेन व्याचष्टे **तात्त्विकेति** ॥ **युगपदिति** ॥ एकग्रन्थेनेत्यर्थः । 'आमुक्तेरि'त्यत्र मुक्तेः प्रकृतत्वात् 'ततोऽव्ययमि'त्यत्र परामर्शात् 'ततोऽर्वाक्' इत्यत्रापि तत्परामर्शवशेन मुक्तिपूर्वकाले हसितत्वं लक्षणमिति शङ्कां वारयितुम् 'ऋजूनामि'त्यत्र प्रकृतान् ऋजून् परामृश्य **ततः** = ऋजुभ्यः **अर्वाक्** = अर्वाचीनानां **योगिनां ज्ञानं** क्रमेण ऋज्वादिक्रमेण **हसितं** न्यूनविषयम् । ईशे जीवेभ्य इत्यत्र प्रकृतमीशं तच्छब्देन परामृश्य ततः = ईशाद् अर्वाक् = अर्वाचीने ईशादन्यस्मिन् विषये पूर्वोक्तप्रकारेण हसितमित्यर्थो विवक्षित इति व्याचष्टे **ऋजुभ्य इति** ॥

**(टीका) नेदं लक्षणं युक्तम् अन्योन्यमृजुज्ञानाच्च अव्यावृत्तेः । इत्यत आह—**

**(मूलम्) सादि च तात्त्विकेभ्योऽन्यत्र ।**

**(टीका) नैतावदेव लक्षणम् । किं तु ? तात्त्विकयोगिज्ञानमनादि अतात्त्विक-योगिज्ञानं सादीत्यपि गृह्यते । एतेन अनादित्वे सति ईशात् अन्यत्र आलोचनेऽपि हसितं तात्त्विकयोगिज्ञानम्, सादित्वे सति ईशादन्यत्र किञ्चिन्मात्रहासयुक्तमतात्त्विकयोगि-ज्ञानमित्युभयोर्लक्षणं सूचितं भवति । तत्राद्येऽनादित्वेन अतात्त्विकयोगिज्ञाननिवृत्तिः ।**

**ईशादन्यत्रेति ईशविषयेऽनादित्वे सत्यालोचनेऽपि हसितलक्ष्म्यादिज्ञाननिरासः । ऋजुज्ञाननिरासार्थमालोचनेऽपीति । हसितमित्यनेनैव ईशज्ञानव्युदासः । द्वितीये सादित्वग्रहणमृजुतात्त्विकज्ञाननिवृत्त्यर्थम् । किञ्चिन्मात्रहासयुक्तमित्ययोगिज्ञाननिरासः । ईशादन्यत्रेति तत्सम्भवार्थम् । हसितत्वादिग्रहणेनैवेशादिज्ञानेऽप्रसङ्गः ।**

**(टिप्पणी)** सादि चेति ग्रन्थं चकारात्लक्षणान्तरोक्त्यर्थतया भासमानसादित्वमात्रस्य लक्षणत्वायोगादयुक्तमाशङ्क्य हसितत्वमात्रस्य लक्षणत्वायोगात् तल्लक्षणोपपत्त्यर्थं विशेषणकथनं इति व्याख्यातुमाह **नेति** ॥ ऋजुयोगिज्ञानान्यत्वस्य लक्षणविशेषणतया लक्षणाप्रवेशे तत्रातिप्रसङ्गात्, क्रमपदेन तदपेक्षया ह्रासोक्तावपि तात्त्विकातात्त्विकज्ञानसाधारणत्वान्न परस्परव्यावृत्तत्वमिति शङ्कार्थः ।

**(टिप्पणी)** विशेषणसमुच्चयार्थत्वेन चशब्दं व्याचष्टे **नैतावदिति** ॥ पूर्वोक्तहसितत्वमात्रमित्यर्थः । न च सादित्वानादित्वयोर्विशेषणयोरुपादानेऽपि तद्विशिष्टहसितत्वस्य ऋजुव्यतिरिक्तयोगिज्ञानलक्षणत्वाभिधानात् प्रत्येकं च विशेषणद्वयासम्भवेन कथं लक्षणतेत्याशङ्क्याह **एतेनेति** ॥ एकहेलया लक्ष्यनिर्देशेऽपि प्रत्येकविशेषणगर्भलक्षणे प्रत्येकमेव लक्ष्यत्वमिति नोक्तदोष इत्यर्थः । **आलोचनेऽपीति** ॥ क्रमपदाद् विशेषणलाभः । आलोचनसाहित्येऽपीशान्यास्सर्वविषयमित्यर्थः । **किञ्चिन्मात्रहासयुक्तमिति** ॥ सर्वायोगिज्ञानाधिकविषयमित्यर्थः । लक्षणद्वये यथासम्भवं क्रमेण विशेषणप्रयोजनमाह **तत्रेति** ॥ द्वितीयलक्षणे ईशादन्यत्रेत्यस्य लक्षणाप्रविष्टतया न व्यर्थविशेषणतादोष इत्याशयेनाह **ईशादन्यत्रेति** ॥ **तत्सम्भवार्थमिति** ॥ अयोगिज्ञानाधिकविषयत्वमीशरूपमेव विषयमादाय न किन्तु तदन्यमपीति वस्तुगत्या सम्भावितस्य विषयाधिक्यस्य कथनार्थमित्यर्थः । सादित्वेनैवेशज्ञानस्यापि व्यावृत्तिरित्याह **हसितत्वादीति** ॥ न्यूनविषयत्वमात्रस्य हसितत्वरूपत्वेऽयोगिज्ञानेऽतिव्याप्त्यापत्तेः । तात्त्विकज्ञानमात्रापेक्षया तदुक्तौ तु तात्त्विकऋजुज्ञानेऽतिप्रसङ्गेन तद्व्यावृत्त्यर्थं सादित्ववैयर्थ्यापत्तेः । ऋजुज्ञानमात्रापेक्षया तदुक्तौ च ऋजुतात्त्विकज्ञानव्यावृत्त्यर्थमिति ग्रन्थविरोधप्रसङ्गात् । सादित्वेनापि ऋजुज्ञानव्यावृत्तिरित्येवंपरत्वेन ग्रन्थसङ्गतावपि तात्त्विकापेक्षयापि न्यूनविषयतया तात्त्विकज्ञाने लक्षणासम्भवात् सर्वायोगिज्ञानाधिकविषयत्वस्यैव हसितत्वस्य वाच्यत्वात् तेन चेशज्ञानव्यवच्छेदायोगात् हसितत्वमादिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा हसितत्वस्यादिः प्रथमोपात्तमिति षष्ठीतत्पुरुषेण वा हसितत्वादिशब्देन सादित्वस्यैवोक्तिमङ्गीकृत्य सादित्वग्रहणेनैव ऋज्वादिज्ञानवदीशज्ञानेऽप्यप्रसङ्ग इत्येवं व्याख्येयम् ।

इत्याशयः । कादाचित्कवृद्धिसद्भावेनाव्याप्तिशङ्कापरिहारसम्भवेऽपि मुक्तावप्यनुवर्तमानायास्तस्यास्त्यागायोगात् तत्कालीनसत्त्वाभ्युपगमेनाव्याप्तिपरिहारः कृत इति द्रष्टव्यम् । ऋजुज्ञानस्य पूर्वमेव नित्यत्वोक्तेः पुनस्तत इत्यनेन तदभिधानानर्थक्यमित्याशङ्क्य नानेन नित्यत्वं कथ्यते किन्त्वभिवृद्धनद्यादेर्ह्रासदर्शनेन सामान्यतोदृष्टानुमानेन मुक्तौ ह्रासानुमानान्मुक्तिप्राक्कालीनवृद्धेरप्यनुवृत्त्यभावात् तत्कालीनवृद्ध्यभ्युपगमेनाव्याप्तिपरिहारो न सम्भवतीत्याशङ्कापरिहारार्थं ह्रासाभावोऽव्ययशब्देनोच्यत इति सूचयितुं शङ्कां तावदाह **अभिवृद्धेति** ॥ नदीदृष्टान्तेन तस्य ह्रासो भवति किमिति मृदूक्तिः ।

**(टीका) तात्त्विकातात्त्विकयोगिज्ञानलक्षणं युगपदाह—**

**(मूलम्) ततोऽर्वाक् क्रमेण ह्रसितम् ।**

**(टीका) ऋजुभ्योऽन्येषां योगिनां ज्ञानं ईशात् अन्यत्र क्रमेण किञ्चिन्मात्रह्रासयुक्तं भवति ।**

**(टिप्पणी)** ततोऽर्वागिति ग्रन्थः मुक्तिपूर्वकाले ऋजुज्ञानस्य ह्रसितत्वोक्त्यर्थतया भासमानं क्रमेण वर्धमानत्वोक्त्या विरुद्धत्वादयुक्तमित्याशङ्क्य तात्त्विकादिज्ञानलक्षणकथनार्थत्वेन व्याचष्टे **तात्त्विकेति** ॥ **युगपदिति** ॥ एकग्रन्थेनेत्यर्थः । 'आमुक्तेरि'त्यत्र मुक्तेः प्रकृतत्वात् 'ततोऽव्ययमि'त्यत्र परामर्शात् 'ततोऽर्वाक्' इत्यत्रापि तत्परामर्शवशेन मुक्तिपूर्वकाले ह्रसितत्वं लक्षणमिति शङ्कां वारयितुम् 'ऋजूनामि'त्यत्र प्रकृतान् ऋजून् परामृश्य ततः = ऋजुभ्यः **अर्वाक्** = अर्वाचीनानां **योगिनां ज्ञानं** क्रमेण ऋज्वादिक्रमेण **ह्रसितं** न्यूनविषयम् । ईशे जीवेभ्य इत्यत्र प्रकृतमीशं तच्छब्देन परामृश्य ततः = ईशाद् अर्वाक् = अर्वाचीने ईशादन्यस्मिन् विषये पूर्वोक्तप्रकारेण ह्रसितमित्यर्थो विवक्षित इति व्याचष्टे **ऋजुभ्य इति** ॥

**(टीका) नेदं लक्षणं युक्तम् अन्योन्यमृजुज्ञानाच्च अव्यावृत्तेः । इत्यत आह—**

**(मूलम्) सादि च तात्त्विकेभ्योऽन्यत्र ।**

**(टीका) नैतावदेव लक्षणम् । किं तु ? तात्त्विकयोगिज्ञानमनादि अतात्त्विकयोगिज्ञानं सादीत्यपि गृह्यते । एतेन अनादित्वे सति ईशात् अन्यत्र आलोचनेऽपि ह्रसितं तात्त्विकयोगिज्ञानम्, सादित्वे सति ईशादन्यत्र किञ्चिन्मात्रह्रासयुक्तमतात्त्विकयोगिज्ञानमित्युभयोर्लक्षणं सूचितं भवति । तत्राद्येऽनादित्वेन अतात्त्विकयोगिज्ञाननिवृत्तिः ।**

**ईशादन्यत्रेति ईशविषयेऽनादित्वे सत्यालोचनेऽपि हसितलक्ष्म्यादिज्ञाननिरासः । ऋजुज्ञाननिरासार्थमालोचनेऽपीति । हसितमित्यनेनैव ईशज्ञानव्युदासः । द्वितीये सादित्वग्रहणमृजुतात्त्विकज्ञाननिवृत्त्यर्थम् । किञ्चिन्मात्रहासयुक्तमित्ययोगिज्ञाननिरासः । ईशादन्यत्रेति तत्सम्भवार्थम् । हसितत्वादिग्रहणेनैवेशादिज्ञानेऽप्रसङ्गः ।**

**(टिप्पणी)** सादि चेति ग्रन्थं चकाराल्लक्षणान्तरोक्तयर्थतया भासमानसादित्वमात्रस्य लक्षणत्वायोगादयुक्तमाशङ्क्य हसितत्वमात्रस्य लक्षणत्वायोगात् तल्लक्षणोपपत्त्यर्थं विशेषणकथनं इति व्याख्यानुमाह **नेति** ॥ ऋजुयोगिज्ञानान्यन्यस्य लक्षणविशेषणतया लक्षणाप्रवेशे तत्रातिप्रसङ्गात्, क्रमपदेन तदपेक्षया ह्रासोक्तावपि तात्त्विकातात्त्विकज्ञानसाधारणत्वान्न परस्परव्यावृत्तत्वमिति शङ्कार्थः ।

**(टिप्पणी)** विशेषणसमुच्चयार्थत्वेन चशब्दं व्याचष्टे **नैतावदिति** ॥ पूर्वोक्तहसितत्वमात्रमित्यर्थः । न च सादित्वानादित्वयोर्विशेषणयोरुपादानेऽपि तद्विशिष्टहसितत्वस्य ऋजुव्यतिरिक्तयोगिज्ञानलक्षणत्वाभिधानात् प्रत्येकं च विशेषणद्वयासम्भवेन कथं लक्षणत्वेन्याशङ्क्याह **एतेनेति** ॥ एकहेलया लक्ष्यनिर्देशेऽपि प्रत्येकविशेषणगर्भलक्षणे प्रत्येकमेव लक्ष्यत्वमिति नोक्तदोष इत्यर्थः । **आलोचनेऽपीति** ॥ क्रमपदाद् विशेषणलाभः । आलोचनसाहित्येऽपीशान्यासर्वविषयमित्यर्थः । **किञ्चिन्मात्रहासयुक्तमिति** ॥ सर्वायोगिज्ञानाधिकविषयमित्यर्थः । लक्षणद्वये यथासम्भवं क्रमेण विशेषणप्रयोजनमाह **तत्रेति** ॥ द्वितीयलक्षणे ईशादन्यत्रेत्यस्य लक्षणाप्रविष्टतया न व्यर्थविशेषणतादोष इत्याशयेनाह **ईशादन्यत्रेति** ॥ **तत्सम्भवार्थमिति** ॥ अयोगिज्ञानाधिकविषयत्वमीशरूपमेव विषयमादाय न किन्तु तदन्यमपीति वस्तुगत्या सम्भावितस्य विषयाधिक्यस्य कथनार्थमित्यर्थः । सादित्वेनैवेशज्ञानस्यापि व्यावृत्तिरित्याह **हसितत्वादीति** ॥ न्यूनविषयत्वमात्रस्य हसितत्वरूपत्वेऽयोगिज्ञानेऽतिव्याप्त्यापत्तेः । तात्त्विकज्ञानमात्रापेक्षया तदुक्तौ तु तात्त्विकऋजुज्ञानेऽतिप्रसङ्गेन तद्व्यावृत्त्यर्थं सादित्ववैयर्थ्यापत्तेः । ऋजुज्ञानमात्रापेक्षया तदुक्तौ च ऋजुतात्त्विकज्ञानव्यावृत्त्यर्थमिति ग्रन्थविरोधप्रसङ्गात् । सादित्वेनापि ऋजुज्ञानव्यावृत्तिरित्येवंपरत्वेन ग्रन्थसङ्गतावपि तात्त्विकापेक्षयापि न्यूनविषयतया तात्त्विकज्ञाने लक्षणासम्भवात् सर्वायोगिज्ञानाधिकविषयत्वस्यैव हसितत्वस्य वाच्यत्वात् तेन चेशज्ञानव्यवच्छेदायोगात् हसितत्वमादिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा हसितत्वस्यादिः प्रथमोपात्तमिति षष्ठीतत्पुरुषेण वा हसितत्वादिशब्देन सादित्वस्यैवोक्तिमङ्गीकृत्य सादित्वग्रहणेनैव ऋज्वादिज्ञानवदीशज्ञानेऽप्यप्रसङ्ग इत्येवं व्याख्येयम् ।

*अयोगिज्ञानलक्षणम्*

**(टीका) अयोगिज्ञानं किमीश्वरादिज्ञानवदनादिनित्यमेव सदिन्द्रियसन्निकर्षादिना अभिव्यज्यते। उत सादि विनाशि चेति। तत्राह—**

**(मूलम्) अयोगिज्ञानमुत्पत्तिविनाशवत्।**

**(टिप्पणी)** उत्पत्तिविनाशवत्त्वमात्रस्यातिप्रसक्ततयाऽयोगिज्ञानलक्षणत्वायोगात् किमर्थं तदुक्तिरित्याशङ्क्य अतात्विकज्ञानस्य सादित्वेऽपि प्रत्यक्षमात्रजन्यत्वादयोगिज्ञानस्याप्यनादित्वेऽनुमानादिकार्यज्ञानाभावेन उत्तरग्रन्थगतानुमानादिकृतानुप्रमाणविभागानुपपत्तेः तन्निरासाय अयोगिज्ञानस्योत्पत्तिमत्त्वोक्तिः विनाशित्वस्य तु प्रसङ्गादुक्तिरिति सूचयितुमाह **अयोगिज्ञानमिति** ॥ यद्यनाद्येवेन्द्रियसन्निकर्षादिभिर्व्यज्यते तर्ह्युत्तरविभागानुपपत्तिरिति गूढाभिसन्धिना तन्निरासार्थत्वं सूचितम्। विनाशकत्वाभिमतोपन्यासरहितविनाशित्वप्रश्नसमुच्चयेनैव विनाशित्वोक्तेः प्रासङ्गिकत्वं सूचितम्।

**(टीका) तस्य लक्षणमाह—**

**(मूलम्) अल्पम्**

**(टीका) ईशादन्यत्राल्पविषयम्।**

**(टिप्पणी)** अल्पत्वोक्तेः व्यर्थतामाशङ्क्याह **तस्य लक्षणमिति** ॥ योगानपेक्षेशान्यसर्वाविषयमित्यर्थः। आद्येन योगिज्ञानस्य द्वितीयेन लक्ष्मीज्ञानस्य निरासः। यथाश्रुतेऽल्पविषयत्वमात्रस्यातिप्रसक्ततया सर्वापेक्षया चाल्पविषयत्वोक्तौ ईशादन्यत्रेत्यस्य व्यर्थतापत्तेः।

**(टीका) सर्वं चोत्पत्तिमत्। केवलं त्रिविधम्। प्रत्यक्षजमनुमानजमागमजमिति। प्रत्यक्षादीनामवान्तरभेदेन पुनर्भिद्यत इति।**

**(टिप्पणी)** नन्वयोगिज्ञानस्योत्पत्तिमत्त्वेऽपि तस्य प्रत्यक्षमात्रजन्यत्वे पूर्वसूचितविभागोपपत्त्यर्थत्वानुपपत्तिरित्याशङ्कां त्रैविध्योक्त्या निरस्यन्नाह **सर्वं चेति** ॥ उत्पत्तिमद् यत् केवलं तत् त्रिविधमित्युक्तौ उत्पत्तिमतोऽतात्विकयोगिज्ञानस्यापि त्रैविध्यमुक्तमिति भ्रान्तिं वारयितुं विभाजकोपाध्यनादरेणोत्पत्तिमत्केवलत्वाधिकरणव्यक्तीनां त्रैविध्यकथनार्थः सर्वशब्दः इति ध्येयम्। नन्वेवमपि स्वयं केवलस्य त्रैविध्यमनुक्त्वा अनुप्रमाणत्रैविध्यकथने को हेतुरित्याशङ्कां निरस्यन्नुत्तरग्रन्थपातनिकामाह

**प्रत्यक्षजमिति** ॥ प्रत्यक्षादीनामनुप्रमाणानामवान्तरभेदेन तु प्रत्यक्षजमनुमानजमागमजमित्येवं केवलं भिद्यते यत अतोऽनुप्रमाणमात्रविभागमाहेति तुशब्दार्थे पुनःशब्दं द्वितीयमितिकरणं च हेत्वर्थं केवलशब्दानुषङ्गं वाऽङ्गीकृत्योत्तरग्रन्थैकवाक्यतया व्याख्येयम् । पूर्वग्रन्थैकवाक्यत्वे प्रत्यक्षादीनामित्यस्यानर्थक्यात् केवलत्रैविध्यानुक्तौ च हेत्वनुपन्यासेन मूलस्य न्यूनताशङ्काया अपरिहाराच्चैवं व्याख्यातम् । केवलावान्तरभेदस्यानुप्रमाणभेदायत्ततयाऽनुप्रमाणत्रैविध्यकथनेनैव सुज्ञानतया न पृथगुक्तिरिति शङ्कानिरासाशयः ।

### *अनुप्रमाणविभागः*

**(टीका) अनुप्रमाणविभागमाह—**

**(मूलम्) अनुप्रमाणं त्रिविधम् ।**

**(टीका) तिस्रो विधा उद्दिशति । न्यूनाधिकसङ्ख्यान्यतमान्तर्भावाभावज्ञापनार्थोऽयं विभागः ।**

**(टिप्पणी)** अनुप्रमाणविभागानन्तरं प्रत्यक्षादिस्वरूपमात्रकथनमनुपयुक्तमित्याशङ्क्य नानेन स्वरूपमात्रं कथ्यते किन्तु विभाजकोपाधिरूपविधा इत्याह **तिस्र इति** ॥ प्रत्यक्षानुमानागमरूपा विधा इति मूलार्थः । नन्वनुप्रमाणविभागोक्तेरेव किं प्रयोजनं येन तदुपपत्त्यर्थं प्रागुत्पत्त्यादिमत्वोक्तिरित्याशङ्क्याह **न्यूनेति** ॥ अनुप्रमाणविभाजकोपाधौ न्यूनाधिकसङ्ख्ययोरन्यतमस्यान्यूनसङ्ख्याया द्वित्वादिरूपाया अन्तर्भावस्य सत्ताया अनुप्रमाणविभाजकोपाधित्वावच्छिन्नपरिच्छेदकत्वरूपान्तरङ्गधर्मावच्छेदेन विद्यमानताया अभावस्य, तादृश्याश्चाधिकसङ्ख्यायाश्चतुष्ट्वादिरूपाया अर्थापत्त्यादेरनुमानाद्यन्तर्भावेन हेतुना अर्थात् पूर्वोक्तरूपेणाभावस्य ज्ञापनार्थो विभाग इत्येवमर्थवैरूप्येऽपि शब्दसारूप्यात् षष्ठीतत्पुरुषतृतीयातत्पुरुषरूपान्तर्भावाभावशब्दैकशेषमङ्गीकृत्य व्याख्येयम् । यद्वा न्यूनाधिकसङ्ख्ययोरन्यतमस्या न्यूनसङ्ख्याया अन्तर्भावेन त्रित्वान्तर्गतत्वेन त्रित्वाधिकरणे वस्तुगत्या सत्वेन हेतुना पूर्वोक्तधर्मावच्छेदेनाभावस्याधिकसङ्ख्यायाश्च पूर्वोक्तहेतुना तद्धर्मावच्छेदेनैवाभावस्य ज्ञापनार्थं इत्येवान्तर्भावशब्दस्यार्थभेदेऽपि तृतीयातत्पुरुषमात्रमङ्गीकृत्य व्याख्येयम् । न्यूनाधिकसङ्ख्ययोरुभयोरन्यतमस्या न्यूनसङ्ख्याया अभावस्य अधिकसङ्ख्यायाश्चार्थापत्तेरनुमानान्तर्भावेनाभावस्य ज्ञापनार्थं इत्यधिकसङ्ख्याभावमात्रेऽन्तर्भावो हेतुरिति ज्ञातव्यः । न्यूनसङ्ख्यस्याभावोऽधिकसङ्ख्यस्यान्तर्भाव इत्यपि केचित् । अत्र प्रथमव्याख्यानेऽन्तरङ्गवाच्यन्तःशब्देन सङ्ख्यागतानुप्रमाणविभाजकोपाधित्वावच्छिन्नतदुणाधिपरिच्छेदकत्वरूपान्तरङ्गधर्म-

वाचिनाऽनुप्रमाणविभाजकोपाधित्वाधिकरणे वस्तुगत्या द्वित्वस्य सत्वात् पदार्थान्तरमादाय चतुष्ट्वादेरपि सम्भवात् कथं न्यूनाधिकसङ्ख्याभावो विभाजकोपाधाविति दूषणं परिहृतम् । द्वित्वस्य सत्वेऽप्युपाधित्रयापरिच्छेदकतयोपाधित्वावच्छिन्नापरिच्छेदकत्वात् । चतुष्ट्वादिसद्भावेऽपि तस्याधिकपरिच्छेदकतया तन्मात्रपरिच्छेदकत्वाभावादित्याद्यूह्यम् । न्यूनाधिकसङ्ख्ययोरुभयोरभावेऽपि न्यूनैवाधिकैव वा सङ्ख्या भविष्यतीति व्यासज्यप्रतियोगिताकाभावाभ्युपगमेन शङ्कां निरसितुमभावस्य प्रत्येकप्रतियोगिताकत्वविवक्षयाऽन्यतमशब्दप्रयोगः । उत्तरत्र क्रियमाणस्यार्थापत्त्याद्यन्तर्भावसाधनस्याप्रतिज्ञातविषयत्वादसङ्गतिशङ्कानिरासायात्राधिकसङ्ख्याभावज्ञापनं तदुपयुक्तान्तर्भावसाधनसङ्गत्यै कृतमिति तज्ज्ञानस्यापि प्रयोजनं सूचयितुं मूलारूढान्तर्भावाख्यहेतूपन्यासः ।

**(मूलम्) प्रत्यक्षमनुमानमागम इति ।**

**(टीका) प्रायेणासन्नाव्यवहितवर्तमानकतिपयार्थग्राहकं प्रत्यक्षम्, अनासन्नातीतानागतव्यवहितार्थगोचरमनुमानम्, स्वातन्त्र्येणाशेषार्थविषय आगम इति अर्थग्रहणक्रमेणोद्देशः ।**

**(टिप्पणी)** प्रत्यक्षादिविधोद्देशानुसारेण लक्षणनियमेऽप्युद्देश एव किं नियामकमित्याशङ्क्याह **प्रायेण इति** ॥ स्मृत्यतात्विकयोगिज्ञानयोरनासन्नादिविषयत्वात् प्रायेणेत्युक्तम् । चक्षुरादिनाऽव्यवहितत्वादौ सत्यपि दूरस्थकेशादिप्रत्यक्षानुदयात्, सन्निहितत्वादौ सत्यपि पटादिव्यवहितशरीरावयवादर्शनात्, सन्निहिताव्यवहितत्वादेर्ज्ञानोत्पत्तिक्षणत्वाभिमतकाले सत्त्वेऽपि पूर्वकाले वर्तमानतां विना ज्ञानानुदयात्, सन्निहिताव्यवहितवर्तमानेष्वपि बहुष्वर्थेषु व्यापाराभावेन सम्भवद्व्यापारेष्वेव ज्ञानोदयात् सफलविशेषणापेक्षार्थविषयस्य प्रत्यक्षस्याल्पविषयत्वाद् विषयगतासन्नताद्यनपेक्षस्य आसन्नानासन्नादिविषयस्यानुमानस्य ततोऽप्यधिकविषयत्वात् स्वर्गादिसाधनतायां वेदोपजीव्यनुमानसम्भवेऽपि प्रमाणान्तरानुपजीवनेन तद्विषयत्वाभावात् तदनुपजीवनेनागमस्यानुमानादप्यधिकविषयत्वात् लोके च प्रथममल्पज्ञानोपायक्रमेणोपदेशदर्शनात् विधाश्रयस्यार्थतारतम्यक्रमेण विधोद्देश इत्यर्थः ।

**(टीका) प्रत्यक्षमेकमेवेति चार्वाकः । तस्येष्टानिष्टसाधनज्ञानाभावाज्जीवनमेवानुपपन्नम् ।**

**(टिप्पणी)** अर्थापत्त्यादेरन्तर्भविनाधिकसङ्ख्याभावे साधिते न्यूनतामपि परिहर्तुं स्वयं समर्था न वेति शिष्यबुद्धिपरीक्षार्थमुपेक्षितन्यूनतापरिहारं तत्तन्मतोद्भावनपुरस्सरं स्वयमाह **प्रत्यक्षमिति** ॥ प्रत्यक्षत्वातिरिक्ते

१. इदं पदं अधिकं इति भाति ।

प्रमाणविभाजकोपाधित्वं नास्तीत्यर्थः । दूषयति **तस्येति** ॥ स्तनपानादौ जीवनोपाये प्रवृत्तिहेतुभूतेष्टसाधनताज्ञानं विना तदनुपपत्तेः साधनत्वस्य चानेकाप्रत्यक्षपदार्थघटितत्वेन तत्प्रत्यक्षानुपपत्तेः, अन्यस्य च ज्ञानोपायस्यानभ्युपगमात् । वस्तुतः साधनत्वाश्रयज्ञानस्य प्रवृत्तिहेतुत्वाभ्युपगमेऽपि स्तनपानादेरसिद्धतया प्रत्यक्षायोगात् तत्र प्रवृत्त्यनुपपत्तेस्तदुद्देशेन सिद्धेः । शरीरादौ पूर्वोक्तज्ञानस्य प्रवर्तकत्वे साधनताभ्रमात् प्रवृत्त्यनुपपत्तेर्वस्तुमात्रज्ञानस्य प्रवर्तकत्वे विषभक्षणादावपि प्रवृत्तिप्रसङ्गात् । अनिष्टसाधनताज्ञानप्रतिबन्धकत्वतदभावहेतुत्वाभ्युपगमे पूर्वोक्त-मर्यादयाऽनिष्टसाधनत्वज्ञानासम्भवेन प्रतिबन्धकाभावस्य विद्यमानतया वस्तुमात्रविषयादिप्रत्यक्षेण प्रवृत्त्यापत्त्या मरणप्रसङ्गेन जीवनानुपपत्तिरित्यर्थः । जीवनादृष्टोद्बोधितसंस्कारेणेष्टसाधनतास्मरणादेव प्रवृत्तिर्भविष्यतीति शङ्कानिरासाय तस्येत्युक्तम् । प्रत्यक्षमात्रप्रामाण्यवादिनस्तव मते वैदिककर्माभावेनादृष्टाभावादात्मनश्चानादित्वाभावान्न स्मृत्युपपत्तिरिति भावः । यदा जीवनमेवानुपपन्नं तदा प्रत्यक्षमात्रप्रामाण्यार्थमयोग्योपाधिशङ्कया व्यभिचारसंशयेनाङ्गुल्यग्रे करियूथशतमित्यादावर्थविसंवादेन च शब्दानुमानप्रामाण्यसाधनमनुमानाधीनं सुतरामनुपपन्नमिति न तन्निरासे यतितव्यमित्येवकारेण सूचितम् ।

**(टीका) न हि प्रत्यक्षं तज्ज्ञानोपायः।**

**(टिप्पणी)** ननु स्वरूपसम्बन्धविशेषात्मकस्य साधनत्वस्य स्वरूपग्रहणे ग्रहणसम्भवान्न जीवनानुपपत्तिरित्याशङ्क्याह **नहीति** ॥ दण्डादिस्वरूपग्रहणेऽपि कारणत्वाग्रहेणानन्यथासिद्धत्वा-देर्व्यञ्जकस्यावश्यकत्वात् तस्य च पूर्ववद् ज्ञानायोगात्, अन्वयव्यतिरेकज्ञानमात्रस्य सहकारि-त्वाभ्युपगमेऽपि वा तदा कार्यस्य सम्बन्धिनोऽसत्त्वेन सम्बन्धिकार्यमविषयीकुर्वत् प्रत्यक्षं न तन्निरूपितस्वरूपसम्बन्धात्मककारणत्वं विषयीकर्तुं समर्थमिति नेन्द्रियादेस्तज्ज्ञानोपायता युक्तेत्यर्थः ।

**(टीका) प्रत्यक्षानुमाने एवेति कणादः सौगताश्च।**

**(टिप्पणी)** एकत्वमादाय न्यूनताभावेऽपि द्वित्वमादाय तद् भविष्यतीति काणादादिमतं निराकर्तुमाह **प्रत्यक्षानुमाने इति** ॥ अर्थः पूर्ववत् । इह प्रत्यक्षत्वानुमानत्वातिरिक्तशब्दत्वे प्रमाणविभाजको-पाधित्वाभावस्य त्रेधा सम्भवः । शब्दस्यार्थेन सह संयोगाद्यभावात्, विशेषणतायाश्चातिप्रसक्तत्वात्, वाच्यवाचकभावस्योभयनिष्ठतया पदार्थवत् पदस्यापि भानापत्तिरित्यादियुक्त्या शब्दार्थसम्बन्धस्याभावेन ज्ञानाजनकत्वात्, ज्ञानजनकत्वेऽपि वा अङ्गुल्यग्र इत्यादौ विसंवाददर्शनान्यत्रापि तदनुमानेन ज्ञाने याथार्थ्यविरहात्, प्रमाजनकत्वेऽपि वा घटमानय इत्यादावाकाङ्क्षादिमत्पदज्ञानानन्तरं जायमानस्य ज्ञानस्य 'एतानि पदानि तात्पर्यविषयस्वसंस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वात्, एते पदार्था वा

वाचिनाऽनुप्रमाणविभाजकोपाधित्वाधिकरणे वस्तुगत्या द्वित्वस्य सत्वात् पदार्थान्तरमादाय चतुष्ट्वादेरपि सम्भवात् कथं न्यूनाधिकसङ्ख्याभावो विभाजकोपाधाविति दूषणं परिहृतम् । द्वित्वस्य सत्वेऽप्युपाधित्रयापरिच्छेदकतयोपाधित्वावच्छिन्नापरिच्छेदकत्वात् । चतुष्ट्वादिसद्भावेऽपि तस्याधिकपरिच्छेदकतया तन्मात्रपरिच्छेदकत्वाभावादित्याद्यूह्यम् । न्यूनाधिकसङ्ख्ययोरुभयोरभावेऽपि न्यूनैवाधिकैव वा सङ्ख्या भविष्यतीति व्यासज्यप्रतियोगिताकाभावाभ्युपगमेन शङ्कां निरसितुमभावस्य प्रत्येकप्रतियोगिताकत्वविवक्षयाऽन्यतमशब्दप्रयोगः । उत्तरत्र क्रियमाणस्यार्थापत्त्याद्यन्तर्भावसाधनस्या-प्रतिज्ञातविषयत्वादसङ्गतिशङ्कानिरासायात्राधिकसङ्ख्याभावज्ञापनं तदुपयुक्तान्तर्भावसाधनसङ्गत्यै कृतमिति तज्ज्ञानस्यापि प्रयोजनं सूचयितुं मूलारूढान्तर्भावाख्यहेतूपन्यासः ।

**(मूलम्) प्रत्यक्षमनुमानमागम इति ।**

**(टीका) प्रायेणासन्नाव्यवहितवर्तमानकतिपयार्थग्राहकं प्रत्यक्षम्, अनासन्नातीता-नागतव्यवहितार्थगोचरमनुमानम्, स्वातन्त्र्येणाशेषार्थविषय आगम इति अर्थग्रहण-क्रमेणोद्देशः ।**

**(टिप्पणी)** प्रत्यक्षादिविधोद्देशानुसारेण लक्षणनियमेऽप्युद्देश एव किं नियामकमित्याशङ्क्याह **प्रायेण इति** ॥ स्मृत्यतात्विकयोगिज्ञानयोरनासन्नादिविषयत्वात् प्रायेणेत्युक्तम् । चक्षुरादिनाऽव्यवहितत्वादौ सत्यपि दूरस्थकेशादिप्रत्यक्षानुदयात्, सन्निहितत्वादौ सत्यपि पटादिव्यवहितशरीरावयवादर्शनात्, सन्निहिताव्यवहितत्वादेर्ज्ञानोत्पत्तिक्षणत्वाभिमतकाले सत्त्वेऽपि पूर्वकाले वर्तमानतां विना ज्ञानानुदयात्, सन्निहिताव्यवहितवर्तमानेष्वपि बहुष्वर्थेषु व्यापाराभावेन सम्भवद्व्यापारेष्वेव ज्ञानोदयात् सफलविशेषणा-पेक्षार्थविषयस्य प्रत्यक्षस्याल्पविषयत्वाद् विषयगतासन्नताद्यनपेक्षस्य आसन्नानासन्नादिविषयस्यानु-मानस्य ततोऽप्यधिकविषयत्वात् स्वर्गादिसाधनतायां वेदोपजीव्यनुमानसम्भवेऽपि प्रमाणान्तरानुपजीवनेन तद्विषयत्वाभावात् तदनुपजीवनेनागमस्यानुमानादप्यधिकविषयत्वात् लोके च प्रथममल्पज्ञानोपाय-क्रमेणोपदेशदर्शनात् विधाश्रयस्यार्थतारतम्यक्रमेण विधोद्देश इत्यर्थः ।

**(टीका) प्रत्यक्षमेकमेवेति चार्वाकः । तस्येष्टानिष्टसाधनज्ञानाभावाज्जीवनमेवा-नुपपन्नम् ।**

**(टिप्पणी)** अर्थापत्त्यादेरन्तर्भावेनाधिकसङ्ख्याभावे साधिते न्यूनतामपि परिहर्तुं स्वयं समर्था न वेति शिष्यबुद्धिपरीक्षार्थमुपेक्षितन्यूनतापरिहारं तत्तन्मतोद्भावनपुरस्सरं स्वयमाह **प्रत्यक्षमिति** ॥ प्रत्यक्षत्वातिरिक्ते

१. इदं पदं अधिकं इति भाति ।

प्रमाणविभाजकोपाधित्वं नास्तीत्यर्थः । दूषयति **तस्येति** ॥ स्तनपानादौ जीवनोपाये प्रवृत्तिहेतुभूतेष्टसाधनताज्ञानं विना तदनुपपत्तेः साधनत्वस्य चानेकाप्रत्यक्षपदार्थघटितत्वेन तत्प्रत्यक्षानुपपत्तेः, अन्यस्य च ज्ञानोपायस्यानभ्युपगमात् । वस्तुतः साधनत्वाश्रयज्ञानस्य प्रवृत्तिहेतुत्वाभ्युपगमेऽपि स्तनपानादेरसिद्धतया प्रत्यक्षायोगात् तत्र प्रवृत्त्यनुपपत्तेस्तदुद्देशेन सिद्धेः । शरीरादौ पूर्वोक्तज्ञानस्य प्रवर्तकत्वे साधनताभ्रमात् प्रवृत्त्यनुपपत्तेर्वस्तुमात्रज्ञानस्य प्रवर्तकत्वे विषभक्षणादावपि प्रवृत्तिप्रसङ्गात् । अनिष्टसाधनताज्ञानप्रतिबन्धकत्वनदभावहेतुत्वाभ्युपगमे पूर्वोक्त-मर्यादयाऽनिष्टसाधनत्वज्ञानासम्भवेन प्रतिबन्धकाभावस्य विद्यमानतया वस्तुमात्रविषयाद्विप्रत्यक्षेण प्रवृत्त्यापत्त्या मरणप्रसङ्गेन जीवनानुपपत्तिरित्यर्थः । जीवनादृष्टोद्बोधितसंस्कारेणेष्टसाधनतास्मरणादेव प्रवृत्तिर्भविष्यतीति शङ्कानिरासाय तस्येत्युक्तम् । प्रत्यक्षमात्रप्रामाण्यवादिनस्तव मते वैदिककर्माभावेनादृष्टाभावादात्मनश्चानादित्वाभावाच्च स्मृत्युपपत्तिरिति भावः । यदा जीवनमेवानुपपन्नं तदा प्रत्यक्षमात्रप्रामाण्यार्थमयोग्योपाधिशङ्कया व्यभिचारसंशयेनाङ्गुल्यग्रे करियूथशतमित्यादावर्थविसंवादेन च शब्दानुमानप्रामाण्यसाधनमनुमानाधीनं सुतरामनुपपन्नमिति न तन्निरासे यतितव्यमित्येवकारेण सूचितम् ।

### (टीका) न हि प्रत्यक्षं तज्ज्ञानोपायः।

**(टिप्पणी)** ननु स्वरूपसम्बन्धविशेषात्मकस्य साधनत्वस्य स्वरूपग्रहणे ग्रहणसम्भवान्न जीवनानुपपत्तिरित्याशङ्क्याह **नहीति** ॥ दण्डादिस्वरूपग्रहणेऽपि कारणत्वाग्रहेणानन्यथासिद्धत्वा-देर्व्यञ्जकस्यावश्यकत्वात् तस्य च पूर्ववद् ज्ञानायोगात्, अन्वयव्यतिरेकज्ञानमात्रस्य सहकारि-त्वाभ्युपगमेऽपि वा तदा कार्यस्य सम्बन्धिनोऽसत्त्वेन सम्बन्धिकार्यमविषयीकुर्वत् प्रत्यक्षं न तन्निरूपितस्वरूपसम्बन्धात्मककारणत्वं विषयीकर्तुं समर्थमिति नेन्द्रियादेस्तज्ज्ञानोपायता युक्तेत्यर्थः ।

### (टीका) प्रत्यक्षानुमाने एवेति कणादः सौगताश्च।

**(टिप्पणी)** एकत्वमादाय न्यूनताभावेऽपि द्वित्वमादाय तद् भविष्यतीति काणादादिमतं निराकर्तुमाह **प्रत्यक्षानुमाने इति** ॥ अर्थः पूर्ववत् । इह प्रत्यक्षत्वानुमानत्वातिरिक्तशब्दत्वे प्रमाणविभाजको-पाधित्वाभावस्य त्रेधा सम्भवः । शब्दस्यार्थेन सह संयोगाद्यभावात्, विशेषणतायाश्चातिप्रसक्तत्वात्, वाच्यवाचकभावस्योभयनिष्ठतया पदार्थवत् पदस्यापि भानापत्तिरित्यादियुक्त्या शब्दार्थसम्बन्धस्याभावेन ज्ञानाजनकत्वात्, ज्ञानजनकत्वेऽपि वा अङ्गुल्यग्र इत्यादौ विसंवाददर्शनेनान्यत्रापि तदनुमानेन ज्ञाने याथार्थ्यविरहात्, प्रमाजनकत्वेऽपि वा घटमानय इत्यादावाकाङ्क्षादिमत्पदज्ञानानन्तरं जायमानस्य ज्ञानस्य 'एतानि पदानि तात्पर्यविषयस्वसंस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वात्, एते पदार्था वा

तात्पर्यविषयस्वसंसर्गवन्त आकाङ्क्षादिमत्पदस्मारितत्वात्' इत्येवमनुमानेन वक्तृज्ञानावच्छेदकतया स्वातन्त्र्येण वा संसर्गावगाहिनः प्रमारूपज्ञानस्य' पदेभ्यः सम्भवात् पृथक् प्रमाणत्वाभावादिति ।

**(टीका) तेषां किमागमो न बोधकः । बोधकोऽपि वा न यथार्थः । यथार्थोऽपि वाऽन्यत्रान्तर्भूतः । पक्षत्रयमप्यनुभवविरुद्धमिति ।**

**(टिप्पणी)** तदेतत् पक्षत्रयमुद्भावयति **तेषामिति** ॥ एकग्रन्थेनैव दूषयति **पक्षत्रयमपीति** ॥ पद-पदार्थयोः सम्बन्धान्तराभावेऽपि पदनिष्ठाया अर्थविषयाया वाचकत्वाख्याया शक्तेरुभयसम्बन्धिकत्वेन सम्बन्धत्वात् । उभयसम्बन्धिकत्वेऽप्यन्वितरूपार्थविषयत्वेन यद्विषयतया ज्ञाता सोपयुज्यते, तद्विषयकज्ञानजनकत्वनियमेनातिप्रसङ्गाभावात् । ज्ञानसामग्रीसद्भावेन जायमानस्य ज्ञानस्यापलापे त्वदुपेदशेनेदं जानामीत्याद्यनुभवविरोधात् । क्वचिद् विसंवादेन तु सर्वत्र तदनुमाने प्रत्यक्षानुमानयो-रप्यप्रामाण्यापत्तेः । प्रवृत्तिसंवादादिना स्वतो वा प्रामाण्यज्ञानेन तु विरोधेन प्रत्यक्षादौ सर्वत्राप्रामाण्यानुमानस्य बाधे शाब्दज्ञानाप्रामाण्यानुमानस्यापि त्वदुपदेशाज्जातं ज्ञानं यथार्थमेवेत्यनुभवेन विरोधात् । अनुमानविधया पदानां बोधकत्वे तु तवानुमितेर्व्यापकतावच्छेदकप्रकारकत्वेन तात्पर्य-विषयत्वेन संसर्गभानेऽपि घटे कर्मत्वान्वयस्य कर्मीभूतस्य घटस्यानयनसंसर्गस्य वाऽनुभवात् सिद्धेः । चैत्रो दण्डीत्यादौ दण्डचैत्रसंसर्गज्ञानस्यानुमानात् सम्भवेऽपि अनुमितौ दण्डादेर्विशेषणत्वादिना भानाभावात् शब्दश्रवणानन्तरं च दण्डविशेषणकचैत्रविशेष्यकज्ञानानुभवेन पृथक्प्रमाणत्वापलापे तद्विरोधात् । पदानां चान्वितशक्ततया पदजन्यपदार्थज्ञाने सत्यपि संसर्गज्ञानं नेत्यस्यानुभवसिद्धान्तिविषयकज्ञानविरोधात् । त्वदभिमतपदार्थमात्रशक्तिपक्षेऽपि अनुभवविरुद्धव्याप्त्यादिप्रतिसन्धानकृतविलम्बापत्त्या पदेभ्यः पदार्थोपस्थितौ मानससंसर्गबोधेनैवोपपत्तेः पृथक्प्रमाणत्वाभावस्य वक्तुमौचित्यात् । नेदं साक्षात्करोमि किन्त्वाप्तवाक्यात् प्रत्येमीत्यनुव्यवसायविरोधेन तु संसर्गबोधस्य मानसत्वानभ्युपगमे नेदमनुमिनोमि किन्तु त्वदुपेदशात् प्रत्येमीत्यनुभवविरोधस्यानुमानिकसंसर्गबोधाभ्युपगमेऽपि तुल्यत्वान्न पक्षत्रयमपि युक्तमित्याशयः ।

**(टीका) अर्थं प्रति स्थितमक्षं प्रत्यक्षम् । प्रमाणान्तरानुसरणेनैवार्थप्रमापकमनुमानम् । सम्यगतीन्द्रियार्थावगमक आगम इति संज्ञानिरुक्त्यैव लक्षणसिद्धौ प्रत्यक्षे तस्यैव स्फुटीकरणार्थं अनुमानादौ शृङ्गग्राहिकया तज्ज्ञापनार्थं च पुनर्लक्षणारम्भः ।**

**(टिप्पणी)** ननु प्रत्यक्षादिपदनिमित्तासत्त्वे तदनुपपत्तिः, तत्सत्वे तस्यैव लक्षणत्वसम्भवात् किं प्रत्यक्षादिलक्षणकथनेनेत्याशङ्क्याह **अर्थं प्रतीति** ॥ अर्थसन्निकृष्टेन्द्रियत्वरूपस्यार्थेन्द्रियसन्निकर्षस्य वा

प्रत्यक्षपदप्रवृत्तिनिमित्तस्य, व्याप्तिग्राहकप्रमाणानुसारेण प्रमापकत्वस्य तत्तदनुमित्युपहितव्याप्तिज्ञान-विषयतत्तत्साध्यनिरूपितव्याप्तिमत्त्वरूपस्यानुमानपदप्रवृत्तिनिमित्तस्य, सम्यगतीन्द्रियार्थावगमकत्व-स्येन्द्रियाजन्यव्याप्तिज्ञानानपेक्षप्रमाजनकशब्दत्वरूपस्यागमपदप्रवृत्तिनिमित्तस्य, प्रत्यक्षादिसंज्ञाव्युत्पत्ति-बलादेवावगतस्य लक्षणत्वज्ञानेऽपि प्रत्यक्षपदवाच्यत्वं लक्ष्यतावच्छेदकमादाय प्रत्यक्षपदप्रवृत्तिनिमित्तस्य दुष्टेऽतिप्रसक्ततया निर्दोषत्वविशेषणेनानतिप्रसक्तस्येतरव्यावर्तकत्वकथनार्थमनुमानादिपदप्रवृत्तिनिमित्तं च लक्ष्यतावच्छेदकत्वेनादाय शृङ्गस्थानीयनिर्दोषोपपत्तित्वादिरूपकथनेनेतर-व्यावृत्तस्यानुमानादेर्ज्ञापनार्थं पुनर्लक्षणोक्तिरित्यर्थः ।

### *प्रत्यक्षप्रमाणलक्षणम्*

**(टीका) तत्र प्रत्यक्षलक्षणमाह—**

## (मूलम्) निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् ।

**निर्दोषत्वमर्थेन्द्रिययोर्विशेषणम् । अर्थग्रहणेनाऽकाशादीनां चक्षुरादिसन्निकर्ष-व्युदासः । अत्र तत्तदिन्द्रियविषयोऽर्थ उच्यते । तन्निर्दोषत्वग्रहणेन अतिसामीप्यादि-दोषयुक्तार्थानामिन्द्रियसन्निकर्षनिरासः । इन्द्रियग्रहणेन अर्थानामेवान्योन्यसन्निकर्ष-निरासः । तन्निर्दोषत्वग्रहणं मनोऽनधिष्ठितत्वादिदोषवदिन्द्रियाणामर्थसन्निकर्षव्यावृ-त्त्यर्थम् । सन्निकर्ष इतीन्द्रियादिमात्रव्युदासः । सर्वेण प्रमाणान्तरव्युदासः ।**

**(टिप्पणी)** प्रत्यक्षादिक्रमेण लक्षणकथन उद्देशस्य नियामकत्वं सूचयन्नाह **तत्रेति** ॥ उद्दिष्टेष्वित्यर्थः । रजनादिभ्रमजनकयोरर्थेन्द्रिययोर्दुष्टत्वेऽपि सन्निकर्षमात्रस्यादुष्टतयाऽतिप्रसङ्गमाशङ्क्याह **निर्दोषत्वमिति** ॥ अर्थत्वस्य केवलान्वयितयाऽव्यावर्तकत्वेनानर्थक्यमाशङ्क्य इन्द्रियग्रहणयोग्यत्वार्थक-त्वेन व्यतिरेकितया आकाशादिसन्निकर्षव्यावृत्त्यर्थत्वेन सार्थक्यमाह **अर्थग्रहणेनेति** ॥ इतरविशेषणानां कृत्यमाह **तन्निर्दोषत्वग्रहणेनेत्यादिना** ॥ **तन्निर्दोषत्वग्रहणमिति** ॥ यद्यप्यनवधानादिदशायां प्रमायोग्यताऽस्त्येव । तथापि सतोरपीत्यादिनाऽनुप्रमाणलक्षणेन प्रमोपहितस्यैव लक्ष्यताभिधानात् सर्वविशेषणसार्थक्यं द्रष्टव्यम् । एवं च निर्दोषताविशेषणेनानतिप्रसक्तस्य प्रत्यक्षपदप्रवृत्तिनिमित्तस्य व्यावर्तकता युक्तेति स्फुटीकरणस्वरूपमाह **सर्वेणेति** ॥

*अनुमानलक्षणम्*

(टीका) अनुमानलक्षणमाह—

**(मूलम्) निर्दोषोपपत्तिरनुमा**

उपपत्तिरिति लिङ्गमुच्यते। साहचर्यबलेनार्थगमकं लिङ्गम्।

**(टिप्पणी)** निर्दोषा उपपत्तिर्यस्या जनिका साऽनुमेत्यानुमितिलक्षणकथनार्थत्वेनोत्तरग्रन्थस्य प्रतिभानादनुप्रमाणलक्षणप्रकरणे च तस्यासङ्गतत्वेनायुक्तत्वमाशङ्क्याह **अनुमानमिति** ॥ करणव्युत्पन्नोऽनुमाशब्द इत्याशयः। लोके उपपत्तिशब्दस्य युक्त्याख्यतर्के प्रयोगात् तस्यैवानुमानत्वे इतरेषामनुमानानां प्रमाणान्तरतापत्तिः, तेषामपि लक्ष्यत्वेऽव्याप्तिरित्याशङ्क्याह **उपपत्तिरिति** ॥ ननु लिङ्गपदस्य व्याप्तिपक्षधर्मतावत्परत्वे निर्दोषत्वान्तर्गतासिद्धिराहित्यवैयर्थ्यं तदतिरिक्तपरत्वे तु पूरादेर्व्यधिकरणस्यापि गमकतया प्रमाणान्तरत्वापत्तिपरिहाराय अनुमानत्वे तस्यापि लक्ष्यत्वेऽव्याप्तिरित्याशङ्क्याह **साहचर्यस्येति** ॥ साहचर्यपदस्य नियतसामानाधिकरण्यपरत्वे निर्दोषत्वान्तर्गततद्वैयर्थ्यात् तदतिरिक्तपरत्वे तु व्याप्त्यादिरहितरूपाभासव्युदासार्थनिर्दोषत्वोक्तिवैयर्थ्यात्। तस्या हेत्वाभाससामान्यलक्षणपरतया व्याप्तिरहितातिरिक्ताभासनिरासोक्त्यर्थत्वेनाविरोधेऽपि व्याप्तिरुपपत्तिमूलमित्येतद्ग्रन्थाख्यानस्थया किन्नाम निर्दोषत्वान्तर्गतव्याप्तीत्यन्तयोक्त्या विरोधात्। लक्षणस्थनिर्दोषत्वान्तर्गतत्वमनादृत्य वास्तविकनिर्दोषत्वान्तर्गतत्वाभिप्रायकत्वेन विरोधपरिहारे तु पूरादेर्व्यधिकरणस्य प्रमाणान्तरतानिरासायानुमानत्वेन लक्ष्यत्वेनाव्याप्तेः अविनाभावं साध्यत्वेनाभिमतस्थितिप्रयोजकस्थितिकत्वरूपं साहचर्यशब्दार्थमादाय साहचर्यवत्तया भासमानत्वे सत्यनुमितिप्रयोजकत्वमित्यर्थः कार्यः। एवं च गन्धप्रागभावावच्छिन्न इत्यादौ पृथिवीत्वहेतावनुमितिस्वरूपयोग्यत्वे सति साहचर्यवत्तया भासमानत्वसत्त्वात् सत्प्रतिपक्षेऽप्येवंभावात्।

(टीका) निर्दोषग्रहणमनुमानाभासव्युदासार्थम्। व्याप्त्याद्यनुमानलक्षणरहितोऽनुमानवदवभासमानोऽनुमानाभासः। उपपत्तिग्रहणं प्रत्यक्षादिव्यावृत्त्यर्थम्।

**(टिप्पणी)** व्याप्यत्वासिद्धादावपि भ्रमसम्भवाद् दोषाज्ञानेनानुमितिसम्भवेन तत्प्रयोजकत्वसम्भवादतिव्याप्तिवारणाय निर्दोषत्वग्रहणमित्याह **निर्दोषेति** ॥ नन्वनुमानतया भासमानस्य सदनुमानेऽपि सत्त्वाद् तद्व्यावृत्तिरयुक्तेत्याशङ्क्याह **व्याप्त्यादीति** ॥ धूमादेरन्यत्रासिद्ध्यादिसत्त्वेऽपि पर्वतादौ वह्निसाधकत्वेन

दोषीभूतासिद्धयाद्यभावस्य लक्षणप्रवेशात् प्रत्यक्षादौ विद्यमानस्याप्यसिद्ध्यादेः प्रमाप्रतिबन्धकत्वाभावेन दोषत्वाभावादतिव्याप्तिनिरासायोपपत्तिग्रहणमित्याशयेनाह **उपपत्तिग्रहणमिति** ॥

**(टीका) उपपत्तिश्च यथार्थतो ज्ञातैवार्थं बोधयति। अन्यथाऽतिप्रसङ्गात्।**

**(टिप्पणी)** ननु प्रयोजकत्वरूपगमकत्वं नानुमितिजनकत्वं तज्जनकज्ञानजनकत्वं वा । अतीत-धूमादेर्ज्ञानादप्यनुमितेरित्याशङ्क्याह **उपपत्तिश्चेति** ॥ **यथार्थत इति** ॥ गमकतोपयुक्तरूपवत्तयेत्यर्थः । येन यत्र यत्पक्षधर्मताव्यतिरेकनिश्चयः प्रतिबन्धको धूमादौ तत्र तन्निश्चयापेक्षा । यत्र तु न प्रतिबन्धकः पूरादौ तत्राविनाभावज्ञानमात्रादप्यनुमितिरिति, न व्याप्तिपक्षधर्मताविशिष्टज्ञाननियम इति सूचितम् । **अतिप्रसङ्गादिति** ॥ अज्ञानादपि धूमादेरनुमित्यापत्तेरित्यर्थः । एवं चानुमितिजनकज्ञानविषयत्वं प्रयोजकमिति भावः ।

## *अनुमानविभागः*

**(टीका) त्रिविधमनुमानम्। केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकीति केचित्।**

**(टिप्पणी)** धूमादौ पक्षधर्मताज्ञानापेक्षणेऽपि पूरादावविनाभावज्ञानमात्रादेवानुमितिजनकत्वं, कस्यचित् सपक्षवृत्तित्वादिसापेक्षत्वेऽपि कस्यचित् तन्निरपेक्षमनुमितिजनकत्वं प्रतिवन्द्या समर्थयितुं कस्य कुत्रापेक्षेति प्रतिवन्दीविवेचनाय परसिद्धमनुमानविभागमाह **त्रिविधमिति** ॥ ता विधा उद्दिशति **केवलान्वयीति** ॥

**(टीका) साध्यधर्मवान् धर्मी पक्षः। साध्यसमानधर्मवान् धर्मी सपक्षः। साध्य-तत्समानधर्मरहितो धर्मी विपक्षः। साध्यत्वाकारमन्तरेण स एव धर्मः साध्यसमानधर्मः।**

**(टिप्पणी)** केवलान्वय्यादिप्रविष्टपक्षव्यापकत्वादेः पक्षादिज्ञानापेक्षतयोपोद्घातत्वेन पक्षादिलक्षणमाह **साध्यधर्मवानित्यादिना** ॥ सिषाधयिषितत्वरहितं यद् व्यापकत्वाभिमतं तद्वत्त्वनिश्चयाविषय इत्यर्थः । तेन प्रमाणसम्प्लवे साध्यत्वनिश्चयेऽपि तत्र सिषाधयिषाविषयत्वराहित्य-रूपविशेषणाभावाल्लक्षणसम्भवः । ह्रदादेः पक्षत्वेऽपि न दोषः । परैर्बाधकप्रमाणाभावस्य पक्षान्तर्भावानङ्गी-कारात् । तद्व्यावृत्तलक्षणस्योद्देश्यत्वे तु व्यापकत्वाभिमताभाववत्तयाऽनिश्चितत्वमप्यस्तु विशेषणम् । **साध्यसमानेति** ॥ व्यापकत्वाभिमतवत्तया निश्चितत्वमित्यर्थः । **साध्यतत्समानेति** ॥ व्यापकतावच्छेदकावच्छिन्नाभाववत्तया निश्चितत्वमित्यर्थः । पक्षातिरिक्त एव दृष्टान्त इति मतेन

सपक्षलक्षणं सूचयितुमाह **साध्यत्वाकारमिति ॥** साध्यत्वाकारो हि पक्षातिरिक्तवृत्तितया अनिश्चितत्वे सति सिषाधयिषाविरहविशिष्टपक्षनिष्ठत्वनिश्चयविषयत्वस्याभावः । तद्रहितो यो व्यापकत्वाभिमतो धर्मः तद्वत्त्वं सिषाधयिषितनिश्चितसाध्यवति पक्षेऽस्तीति पक्षव्यावृत्तसपक्षलक्षणमिदमिति भावः ।

**(टीका) पक्षव्यापकं सपक्षवृत्ति अविद्यमानविपक्षं केवलान्वयि । तद् द्विविधम् । सपक्षव्यापकं तदेकदेशवृत्तीति । तद्यथा, धर्माधर्मौ कस्यचित् प्रत्यक्षौ प्रमेयत्वात्, गुणत्वादिति । पक्षव्यापकमविद्यमानसपक्षं विपक्षात् व्यावृत्तं केवलव्यतिरेकि । तद्यथा, ईश्वरः सर्वज्ञः सर्वकर्तृत्वादिति । पक्षव्यापकं सपक्षवृत्ति विपक्षात् व्यावृत्तमन्वयव्यतिरेकि पूर्ववत् सपक्षतदेकदेशवृत्तिभेदात् द्विविधम् । तद्यथा, जीवो नित्यः नाशकारणशून्यत्वात्, चेतनत्वादिति ।**

**(टिप्पणी)** प्रतिबन्दीविषयं विवेचयति **पक्षव्यापकमित्यादिना ॥** शब्दोऽभिधेयः मूर्तत्वाद् वर्णात्मकत्वादित्येतद्वारणाय पूर्वो भागः । सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिवारणाय द्वितीयः । तत्र निश्चितसाध्यवतोऽभावात् तद्व्यावृत्तिः । धूमादिवारणाय तृतीयः । तदर्थस्त्वत्यन्ताभावाप्रतियोगि-साध्यकत्वम् । लक्षणकथनेनैव तत्तद्गमकत्वोपयुक्तरूपज्ञानेन प्रतिबन्दीविषयविवेकसिद्धावपि केवलान्वय्यन्वयव्यतिरेकिणोः अवान्तरवैलक्षण्येऽपि तत्त्वाविघातवद् धूमपूरादेरप्यनुमानत्वाविघात इति प्रतिबन्द्यन्तरं वक्तुं तद् द्विविधमित्यादिना तद्भेदोक्तिः । व्यतिरेकिलक्षणे पृथिवी इतरभिन्ना द्रव्यत्वादित्यस्य पृथिवी अनित्या पृथिवीत्वादित्यसाधारणस्य पृथिवी इतरभिन्ना गुरुत्वादित्यस्य च वारणाय पक्षेत्यादिविशेषणानि । अन्वयव्यतिरेकिलक्षणे च वाङ्मनसे अनित्ये कृतकत्वादित्यस्य केवलव्यतिरेकिकेवलान्वयिनोश्च वारणाय विशेषणानि । सर्वत्र पक्षव्यापकत्वं पक्षतावच्छेदकव्यापकत्वं बोध्यम् ।

**(टीका) सर्वत्र निर्दोषत्वानुवृत्तेर्न बाधितादौ प्रसङ्गः ।**

**(टिप्पणी)** ननु गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यत्र सत्प्रतिपक्षदशाके च कृतकत्वादौ सत्प्रतिपक्षदशाकयोश्च केवलान्वयिकेवलव्यतिरेकिणोः पूर्वोक्ततत्तल्लक्षणसत्वेन सत्केवलान्वयित्वाद्यापत्तिरित्याशङ्क्याह **सर्वत्रेति ॥** मूलकारोक्तस्य निर्दोषत्वान्तर्गतस्याबाधितत्वादेरनुवृत्तेः अनुगतेः पराभिप्रेततया नातिप्रसङ्ग इत्यर्थः ।

नन्वेषां लक्षणानां स्वसम्मततया मूलकारोक्तनिर्दोषत्वानुवृत्तिर्विवक्षिता । व्यतिरेक्यनभ्युपगमात् । मूलकारोक्तस्य स्वोक्तलक्षणादौ भिन्नवक्तृकत्वेनानुवृत्त्ययोगाच्च । परमते व्यतिरेकिणि साध्याप्रसिद्धा-वप्रसिद्धविशेषणता तत्प्रसिद्धौ साध्यवति हेतोर्ज्ञानेऽन्वयित्वमज्ञाने असाधारण्यं विरुद्धहेत्वाभासत्वं च स्यात् । यस्मिन् सत्यवश्यमनुमितिप्रतिबन्धः स खलु परस्याभासोऽभिमतः । न च विरुद्धस्य सकलसाध्याधिकरणनिष्ठाभावप्रतियोगित्वज्ञानेन हेतुसाध्यसामानाधिकरण्यज्ञानप्रतिबन्धेऽपि साध्याभावे साधनाभावसामानाधिकरण्यज्ञानस्य अनुमितिजनकत्वेनाभिमतस्याक्षतिरविरोधात्, तथाच व्यतिरेक-व्याप्तेर्गमकत्वेन तज्ज्ञानमादाय विरुद्धस्यापि गमकत्वसम्भवात् न तत्सत्त्वेऽनुमितिप्रतिबन्धः । अन्वयव्याप्तेरेव गमकत्वे तु तज्ज्ञाने पूर्वोक्तरीत्या विरोधित्वेन हेत्वाभासतोपपत्तिः । व्यतिरेकव्याप्त्युपन्यासस्तु प्रागेव उपाधेः साक्षाद्दूषणत्वेऽपि दूषणभूतसत्प्रतिपक्षाद्युपायत्वेन उपन्यासवत् अन्वयव्याप्तिज्ञानोपायत्वेन अन्वयव्यतिरेकिणि तु व्यभिचारशङ्कानिवर्तकत्वेनोपपन्नः । यदि तु स्वसम्मतत्वेन व्याख्यायते तदा व्यतिरेकव्याप्तेरनङ्गत्वादिति सुधाविरोधः । व्यतिरेकी नानुमानं पञ्चरूपतावैधुर्यादित्येतत् परिशेषानुमानादिष्वनैकान्तिकमित्यनेन व्यतिरेकिसमर्थनं तु सुधास्थं व्यतिरेकव्याप्तेरन्वयव्याप्तिग्राहकतयोपयोग इत्येवं परतया नेयमिति दिक् ।

**(टीका) तत्पुनर्द्विविधम् । दृष्टं सामान्यतोदृष्टं चेति । प्रत्यक्षयोग्यार्थानुमापकं दृष्टम् । यथा, धूमोऽग्नेः । प्रत्यक्षायोग्यार्थानुमापकं सामान्यतो दृष्टम् । यथा, रूपादिज्ञानं चक्षुरादेः ।**

**(टिप्पणी)** पूर्वोक्तस्य त्रैविध्यस्य स्वानभिमतत्वं सूचयितुमाह **तत्पुनर्द्विविधमिति** ॥ पूर्वमपि केवलान्वय्यन्वयव्यतिरेकिभेदेन द्विविधं दृष्टादिभेदेनापि द्विविधमिति पुनःशब्देन प्रतीतेः त्रैविध्यस्य स्वानभिमतत्वसूचनोपपत्तिः । यद्वा वैलक्षण्यार्थकपुनःशब्देन पूर्वपक्षनिरासेन द्वैविध्यपरिग्रहात् तदुपपत्तिः । धूमरूपादिज्ञानयोरुभयोरपि दृष्टत्वात् कथं भेद इत्याशङ्क्याह **प्रत्यक्षयोग्येति** ॥ रूपादिज्ञानत्वेन विशेषतोऽपि दृष्टत्वात् कथं सामान्यतो दृष्टत्वमित्याशङ्क्याह **प्रत्यक्षायोग्येति** ॥

**(टीका) पुनस्त्रिविधम् । कारणानुमानं कार्यानुमानं सामान्यानुमानमिति । कारणं कार्यस्यानुमानमाद्यम् । यथा, विशिष्टमेघोन्नतिर्वृष्टेः । कार्यं कारणस्यानुमानं द्वितीयम् । यथा, धूमोऽग्नेः । अकार्यकारणमकारणकार्यस्यानुमानं तृतीयम् । यथा, रसो रूपस्येति ।**

(**टिप्पणी**) विभागान्तरेणापि प्राथमिकत्रैविध्यस्यानभिमतत्वं सूचयितुमाह **पुनरिति** ॥ कारणमनुमानं कार्यमनुमानं, सामान्यमकार्यकारणमनुमानमित्येवं त्रिविधं न च अन्यथेति तुशब्दार्थकः पुनःशब्दः । उदाहरति **कारणमित्यादिना** ॥

*आगमलक्षणम्*

**(टीका) आगमलक्षणमाह—**

**(मूलम्) निर्दोषः शब्द आगमः ।**

**अज्ञानविपर्ययसंशयप्रमादविप्रलम्भादिपुरुषदोषपूर्वकत्वाभावो निर्दोषत्वम् ।**

(**टिप्पणी**) निर्दोष इत्यस्य आगमस्वरूपमात्रकथनार्थत्वप्रतीतेः शृङ्गस्थानीयधर्मानुक्त्या शृङ्गग्राहिकयेति पूर्वोक्तविरोधमाशङ्क्याह **आगमेति** ॥ लक्ष्यते इतरव्यावृत्ततया बोध्यतेऽनेनेति लक्षणं व्यावर्तको धर्मः । धर्मतात्पर्यकोऽयं निर्देश इति भावः । अप्रमाणवाक्येऽप्यसाधुत्वाख्यदोषाभावसत्त्वात् पुरुषदोषाज्ञानादिविवक्षायां त्वेकैकदोषाभावस्याप्रमाणेऽपि सत्त्वात् सकलदोषाभावकूटस्य च इतरदोषरहितेऽज्ञानपूर्वके शुकवाक्ये संवादिनि, इतरदोषरहिते संशयपूर्वके च प्रमाणवाक्ये, विपर्यये सत्यपि विप्रलिप्सया प्रयुक्ते इतरदोषरहिते वाक्ये, इतरदोषाभावेऽपि प्रमादोक्ते प्रमाणवाक्ये, इतरदोषाभावे कारणताल्वाद्यपाटवादुक्ते प्रमाणवाक्ये चाभावेनाव्याप्तेः कथं निर्दोषत्वस्य लक्षणप्रवेश इत्याशङ्क्याह **अज्ञानेति** ॥ पुरुषनिष्ठत्वोक्त्या असाधुत्वप्रयुक्तपूर्वोक्तदोषनिरासाद् दोषोक्त्या च दोषीभूताज्ञानाद्य-भावस्योक्तेर्दोषत्वस्य च फलबलकल्प्यत्वात् । पूर्वोक्ते च सर्वत्र भ्रमाभावेन दोषत्वाभावात् । विपर्यये च विप्रलिप्सया उत्तेजकत्वात्, अभावकूटस्य सत्वेन नाव्याप्तिरतिव्याप्तिर्वेत्यर्थः । अज्ञानादेर्दोषत्वं पूर्वोक्ते विसंवादिनि विप्रलिप्साविपर्यययोश्चैकैकमात्रसत्वे भ्रमप्रयोजकतया प्रसिद्धम् । न च सर्वत्र दोषाभावस्य हेतुत्वोक्तेरुत्पत्तिस्वतस्त्वविरोधः । दोषाभावापेक्षणेऽपि वेदादेरपौरुषेयत्वविरोधाभावेन भावकारणा-नपेक्षत्वस्यैव सत्त्वेन स्वतस्त्वरूपतायां बाधकाभावात् ।

*शब्दादिस्वरूपनिरूपणम्*

**(टीका) शब्दो वाक्यात्मा । विभक्त्यन्ता वर्णाः पदम् । आकाङ्क्षायोग्यतासन्निधि-मन्ति पदानि वाक्यम् । श्रोतुराकाङ्क्षितार्थाभिधायकत्वं पूर्वपदसञ्जाताकाङ्क्षापूरकत्वं वा आकाङ्क्षावत्त्वम् । तेन विरक्तं प्रति वाणिज्योपदेशस्य, गौरश्वः पुरुषो हस्तीत्यादेश्च अवाक्यत्वं भवति ।**

(टिप्पणी) नन्वेवमपि निर्दोषे घटप्रातिपदिकमात्रेऽतिव्याप्तिरित्याशङ्क्याह **शब्द इति** ॥ आकाङ्क्षामत्तिमत्त्वमित्यर्थः । प्रसङ्गाल्लोकव्यवहारोपयुक्तवाक्यादिलक्षणं वक्तुं वाक्यान्तर्गतपदस्य लोकव्यवहारोपयुक्तं धर्ममाह **विभक्तीति** ॥ वाक्यस्यापि लोकव्यवहारोपयुक्तं धर्ममाह **आकाङ्क्षेति** ॥ आकाङ्क्षाया लोकव्यवहारोपयुक्तमागमलक्षणान्तर्गत्युपयुक्तं च लक्षणमाह **श्रोतुरिति** ॥ तत्तद्रूपावच्छिन्नपदप्रयोज्यजिज्ञासाविषयत्वयोग्यज्ञानजनकतावच्छेदकरूपमाकाङ्क्षेति द्वितीयभागार्थः । गामानयेत्यत्र कारकपदत्वरूपावच्छिन्नगोपदप्रयोज्या जिज्ञासा क्रियान्वयज्ञानेच्छा तद्विषयत्वयोग्यं क्रियान्वयज्ञानं तज्जनकतावच्छेदकं क्रियापदत्वं कारकपदेन सहाकाङ्क्षा । एवं कारकपदे करकपदत्वमित्यादि । एवं पचतीत्यत्र लट्त्वलत्वरूपभेदेन कर्तृविशेषणकृतिवर्तमानत्वयोरन्वयेऽपि आकाङ्क्षा सुसम्पादा । कर्त्रेकत्वयोरपि भावकर्मविहितलत्वैकवचनत्वरूपभेदेन सा सुम्पादेति द्रष्टव्यम् । इयं च ज्ञातैव प्रयोजिका । अत एव उभौ हत इत्यादौ क्रियापदत्वाज्ञाने नान्वयधीः तज्ज्ञाने च भवतीत्यनुभवसिद्धम् । लोकोपयुक्तवाक्यलक्षणान्तर्गतपूर्वभागरूपाकाङ्क्षाव्यवच्छेद्यम् आगमलक्षणान्तर्गतवाक्यप्रविष्टद्वितीयभागरूपाकाङ्क्षाव्यवच्छेद्यं चाह **तेनेति** ॥

**(टीका) सन्निहितार्थाभिधायकत्वं अविलम्बेनोच्चरितत्वं वा सन्निहितत्वम् । तेन चोलेषु वर्तमानं तृषितं प्रति 'सन्ति सुरसरिति शीतलानि जलानि', इत्युपदेशस्य विलम्बेनोच्चरितपदानां च वाक्यत्वनिरासः।**

(टिप्पणी) आकाङ्क्षावन् क्रमेणासत्तिलक्षणमप्याह **सन्निहितेति** ॥ निष्फलान्वयबोधविरोधिव्यवधानरहितवक्तृव्यापारविषयत्वमित्यर्थः । वक्तृव्यापारश्चाभिप्रायो लिपिरुच्चारणं वा । तद्विषयत्वं च पदेषु तत्रतत्र अस्त्येव । एवं च गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ व्यवधानेऽपीष्टान्वयबोधविरोधित्वाभावादासत्तिरस्त्येव । वेदे च ज्योतिष्टोमप्रकरणगतस्य द्वादशाहीनस्येत्यादेर्द्वादशाहप्रयोगविधिना सहान्वयबोधविरोधिव्यवधानेऽपि न तन्निष्फलं व्यवधानम् । तत्क्रमेण पाठस्यादृष्टार्थत्वात् । अत्र च मध्ये पदान्तराध्याहारादिसंशये नान्वयबोध इति ज्ञातैवासत्तिर्हेतुरिति द्रष्टव्यम् । आकाङ्क्षालक्षणवदेव क्रमेण व्यवच्छेद्यमाह **तेनेति** ॥

**(टीका) अन्योन्यान्वययोग्यतावद् अर्थाभिधायकत्वं योग्यतावत्त्वम् । तथाच 'अग्निना सिञ्चेत्' इत्यादेर्वाक्यत्वनिरासः । निर्दोष इत्यागमाभासनिवृत्तिः । शब्द इति प्रत्यक्षादिव्युदासः। आगमश्च सम्यग्ज्ञात एव बोधकः। अन्यथाऽतिप्रसङ्गात्।**

**(टिप्पणी)** लोकोपयुक्तवाक्यलक्षणप्रविष्टां योग्यतामाह **अन्योन्येति** ॥ अन्योन्यान्वयप्रयोजकरूप-वदर्थकत्वमित्यर्थः । न त्वागमलक्षणान्तर्गतनिर्दोषत्वेनैवायोग्यनिरासाद् अनाप्तोक्ते पयसा सिञ्चती-त्यत्रातिप्रसक्तत्वाच्चेति ज्ञेयम् । आगमलक्षणे यथासम्भवं विशेषणप्रयोजनमाह **निर्दोष इति** ॥ नन्विन्द्रियाजन्यव्याप्तिज्ञानानपेक्षप्रमाजनकशब्दरूपस्यागमस्यात्र लक्ष्यत्वादाकाङ्क्षादिमच्छब्दसत्वेऽपि तदज्ञाने प्रमानुदयाद् असत्यपि च तज्ज्ञानोदयात् कथं लक्षणसङ्गतिरित्याशङ्क्याह **आगमश्चेति** ॥ अतिप्रसङ्गः शङ्कास्थल एव । एवं च पूर्वोक्तप्रमाजनकज्ञानविषयशब्दत्वेनैव प्रमाणत्वमिति भावः ।

*आगमविभागः*

**(टीका) स द्विविधः । नित्योऽनित्यश्च । नित्यो वेदः । अनित्यः पुराणादिः । वर्णानां च सर्वत्र नित्यत्वेऽपि प्रबन्धविशेषस्य नित्यत्वानित्यत्वाभ्यामयं विभागः ।**

**(टिप्पणी)** नन्वेवमपि नाकाङ्क्षादिमत्त्वमात्रबोधात् प्रमासम्भव आप्तोक्तत्वज्ञानस्यापि हेतुत्वादित्याशङ्कां परिहर्तुमागमद्वैविध्यमाह **स इति** ॥ एवं च अपौरुषेयवेद एव व्यभिचारान्न तज्ज्ञानं हेतुरिति भावः । ननु वर्णानित्यत्वे सर्वस्याप्यागमस्यानित्यत्वं वर्णनित्यत्वे तु सर्वस्यापि नित्यत्वमिति कुतो द्वैविध्यमित्यत आह **वर्णानामिति** ॥ वस्तुगत्या वर्णानां नित्यत्वेऽपि वेदे आनुपूर्वीविशेषस्य सर्वदैकरूप्याख्यनैयत्यरूपनित्यत्वेन पुराणादौ तद्विपरीताख्यानित्यत्वेन नित्यानित्यभेदोक्तिरित्यर्थः । बुद्धागमादितुल्यतापरिहाराय 'श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चान्या वाचः' इति श्रुत्या वेदस्य नित्यत्वावगतेर्वर्णनित्यत्वमात्रस्य तु स्मृत्यादावपि सत्वादानुपूर्व्याश्चोच्चारणघटिताया नित्यत्वायोगात् प्रतिसर्गमनन्तानुपूर्व्यादिकल्पने गौरवान्नियतानुपूर्वीकत्वसिद्धिः । स्मृत्यादौ त्वनित्यत्वोक्तेर्वर्णनित्यत्व-स्यायोगात् क्रमानित्यत्वस्य च वेदेऽपि सत्वादनियतानुपूर्वीकत्वरूपानित्यत्वसिद्धिरिति द्रष्टव्यम् ।

**(टीका) वर्णाश्च भेदकाभावात् सर्वगता एवेति ।**

**(टिप्पणी)** नन्वेवं वर्णानामनित्यत्वेऽपि पूर्वोक्तयुक्त्याऽऽनुपूर्वीनैयत्यसिद्धेः किमर्थं वर्णनित्यत्वा-भ्युपगम इत्याशङ्क्याह **वर्णाश्चेति** ॥ **सर्वगता इति** । सर्वस्मिन् काले देशे च वर्तमाना इत्यर्थः । तेन नित्यत्वात् कालकृतक्रमाभावेऽपि देशकृतो भविष्यतीति शङ्का परिहृता । सोऽयं गकार इत्यादिप्रत्यभिज्ञाया एकैकगकारादिसिद्धेः । तारत्वादेर्जातित्वे सङ्करात्, नानात्वेऽनुगतव्यवहारायोगात् । सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वादिनाऽनुगमे प्रतिबन्धकत्वानुगतगकारादेव अनुगमसम्भवे जातिवैयर्थ्यात् । उपाधिरूपस्य च तस्य कालभेदेनैकस्मिन्नपि सम्भवादेककालेऽपि व्यापके वर्णे प्रदेशभेदेन गगने विहगतदभावयोरिव सम्भवाद् भेदकाभावेन वर्णा नित्या व्यापकाश्चेति वस्तुस्थितिरिति भावः ।

**(टीका) ननु कथं त्रीण्येव प्रमाणानि। अर्थापत्त्युपमानयोरपि पृथक्प्रमाणत्वात् इत्यत आह—**

**(मूलम्) अर्थापत्त्युपमे अनुमाविशेषः।**

**अनुपपद्यमानप्रमितिः = अर्थापत्तिः।**

**(टिप्पणी)** अनुप्रमाणत्रैविध्योक्त्या न्यूनाधिकसङ्ख्याव्यवच्छेदे प्रतिज्ञाते जिज्ञासितविधोक्तौ पर्यवसितायामवसरेण तत्साधनार्थत्वं लिङ्गविशेष इत्यन्तस्योत्तरग्रन्थस्य दर्शयन्नुत्तरग्रन्थस्य पातनिकामाह **ननु कथमिति** ॥ आञ्जस्येन केवलवाच्युपमादिपदसमभिव्याहारेणार्थापत्तिशब्दस्यापि केवलपरताप्रतिभानात् प्रतिज्ञातानुप्रमाणाधिकसङ्ख्याव्यवच्छेदसाधनानुपयोगमाशङ्क्यार्थापत्तिशब्दं तावदनुप्रमाणपरतया व्याचष्टे **अनुपपद्यमानेति** ॥ कल्पनीयत्वाभिमतव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिसङ्ख्याव्यवच्छेदसाधनानुपयोगमाशङ्क्यार्थापत्तिशब्दं [1].... प्रतियोगित्वेन प्रमेत्यर्थः। तेन वस्तुगत्याऽनुपपद्यमानस्य ज्ञाने उपपद्यमानस्यैव वा भ्रमे नातिप्रसङ्गः।

**(टीका) सा द्विविधा, श्रुतार्थापत्तिर्दृष्टार्थापत्तिश्चेति। तत्राद्या यथा, 'जीवंश्चैत्रो गृहे नास्ति' इति श्रुतवतो जीवतो गृहाभावप्रमितिः। द्वितीया यथा, जीवतो गृहाभावं दृष्टवतस्तत्प्रमितिरिति। तया बहिर्भावप्रमा भवतीति सा अनुमाने अन्तर्भवति।**

**(टिप्पणी)** ननूपपादकस्य कल्पनीयत्वाभिमतचैत्रबहिःसत्वादेरज्ञाने निरूपकाज्ञानादनुपपत्तिज्ञानासम्भवः, तज्ज्ञाने किं प्रमाणफलमित्याशङ्क्य सामान्येनैव बहिःसत्वादिना ज्ञानेनाप्युपपत्तिज्ञानान्नासम्भवः, चैत्रादिनिष्ठतया ज्ञानं फलमित्येव लक्षणफलयोः सर्वार्थापत्तिसाधारण्यं दर्शयितुं तद्विभागं वक्तुमाह **सा द्विविधेति** ॥ गृहेऽभावं दृष्टवत इति तदभावप्रत्यक्षप्रमितिरित्यर्थः। **तयेति**। चैत्रस्येति शेषः। तथाच विशेषज्ञानं फलमित्युक्तं भवति। एवं परमतमुक्त्वा अर्थापत्तिशब्दसामानाधिकरण्येनानुमाशब्दस्याप्यनुप्रमाणपरतां सूचयन्नाह **सेति** ॥ सा बहिर्भावप्रमा यतोऽनुमाने अनुमितौ अन्तर्भवति अतस्तत्साधारणतया अभिप्रेताया अर्थापत्तेरपि तदन्तर्भाव इत्यर्थः। यद्वा सेत्यनेन व्यवहितार्थापत्तिपरामर्शः। व्यतिरेकसहचाररूपानुपपत्तेरनुमानत्वाभावेऽप्यनुमानाङ्गान्वयव्याप्तिज्ञानोपायतया अन्तर्भाव उक्तः। अथवा मूलस्थार्थापत्त्यादिशब्दानां फलपरत्वेऽपि टीकाकारैः परसिद्धार्थापत्त्यादिकरणमात्रस्वरूपमेवानुपपद्यमानेत्यादिना कथ्यते। न च अर्थापत्त्यादिशब्दव्याख्यानं क्रियते तथाच

1. अत्र मातृकायां रिक्तत्वमनुभूयते। तेन न पूर्णसङ्गतिः।

फलस्यानुमितिरूपत्वे उक्ते तत्करणं न पृथगित्यस्य सिद्धेः प्रतिज्ञातार्थसाधनोपयोगः स्पष्ट एव । तथाच सा इत्यस्य बहिर्भावप्रमेत्यर्थः, अनुमानं चानुमितिरेव । उपमानेऽप्येवमेव योज्यमिति द्रष्टव्यम् ।

**(टीका) विमतो बहिरस्ति जीवनवत्त्वे सति गृहेऽसत्वात् यथाऽहम्' इति प्रयोगसम्भवात् ।**

**(टिप्पणी)** ननु चैत्रस्यासन्निकृष्टतया तन्निष्ठलिङ्गज्ञानासम्भवे कथमनुमानेनान्यथासिद्धिरित्याशङ्क्याह **विमत इति** ॥ गेहे चैत्राभावस्य शब्देन प्रत्यक्षेण वा ज्ञाने चैत्रस्यापि तत्प्रतियोगित्वरूपासत्त्वज्ञानसम्भवान्नासिद्धिः । न च प्रतियोगित्वस्य संसर्गमर्यादया भानेऽपि हेतुतावच्छेदकेन रूपेणानुपस्थितेः कथमनुमानावतार इति वाच्यम् । तेन रूपेणोपस्थितावनुमानप्रवृत्तेः । न च यत्र संसर्गमर्यादयैव भानं तत्रैवार्थापत्तेः पार्थक्यम् । तद्रूपोपस्थितिं विना पूर्वोक्तव्यतिरेकप्रतियोगित्वस्यानुपपद्यमानत्वस्याज्ञानेऽर्थापत्तेरप्यनवताराभ्युपगमादिति सम्भवादित्यनेन सूचितम् । अनेनैवार्थापत्तिपक्षेषु सर्वेष्वप्यनुमानसम्भवः सूचितः ।

### *उपमानलक्षणम्*

**(टीका) सादृश्यप्रमासाधनमुपमानम् । तत् त्रिविधम् । गृह्यमाणे स्मर्यमाणप्रतियोगिकसादृश्यप्रमासाधनम् । यथा, गां दृष्ट्वा वनं गतस्य गृह्यमाणगवये स्मर्यमाणगोसादृश्यप्रमाणं 'गोसदृशोऽयं गवयः' इति । गृह्यमाणप्रतियोगिकस्मर्यमाणगतसादृश्यप्रमासाधनं स्मर्यमाणप्रतियोगिकगृह्यमाणगतसादृश्यज्ञानम् । 'गोसदृशोऽयं गवयः, तस्मात् गवयसदृशोऽसौ गौः' इति । निर्दोषवाक्यं सादृश्यप्रमासाधनं यथा, 'यथा गौर्गवयस्तथा' इति । तदेतत् त्रयं क्रमेण प्रत्यक्षाद्यन्तर्भूतम् । विमतो गौः गवयसदृशः गवयगतसादृश्यप्रतियोगित्वात् यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः यथा यमो यमान्तरेण' इति प्रयोगसम्भवात् ।**

**(टिप्पणी)** वादिभेदेन नानाविधस्य सर्वस्याप्युपमानस्यानुमानादावन्तर्भावोक्तिमवतारयितुं तन्मतसिद्धोपमानस्वरूपतद्विभागप्रदर्शनपूर्वकं यथासम्भवमन्यत्राप्यन्तर्भावं सूचयितुमाह **सादृश्येति** ॥ अत्र मध्यमप्रकारकस्य शबरस्वाम्यभिमतस्योपमानप्रकारस्यानुमानान्तर्भावस्य मूलकारोक्तस्य प्रयोगदर्शनेनोपपादनेऽपि इतरयोः स्वोक्तप्रत्यक्षाद्यन्तर्भावहेत्वनभिधानेन तदेतत् त्रयमित्यादि प्रतिज्ञासिद्धिमाशङ्क्य

प्रकारकथनावसर एव गृह्यमाणनिर्दोषवाक्यशब्दान्तर्भावोपपादकौ प्रयुक्तौ । प्रथमोदाहरणे इतिकरणेन फलाभिनयः । द्वितीये करणफलयोः तृतीये करणस्य च अभिनयः । तत्र प्रथमद्वितीययोः कीदृशप्रमेत्यपेक्षायामाहेति ग्रन्थावतरणं द्रष्टव्यम् । **प्रयोगसम्भवादिति** ॥ न च गोरसन्निकर्षात् कथं तत्र प्रतियोगित्वग्रह इति वाच्यम् । गवयनिष्ठसादृश्यज्ञाने गोरपि तत्प्रतियोगित्वेन भानात् । न च संसर्गमर्यादया भानेऽपि हेतुतावच्छेदकरूपेणानुपस्थितिः । प्रमाणान्तरत्वे कल्पनागौरवेण तेन रूपेणोपस्थितावेव गवयप्रतियोगिकसादृश्यज्ञानस्योचितत्वात् । न चैवमपि प्रथमसाध्याप्रसिद्धिः । गवयः किञ्चिन्निष्ठ-सादृश्यप्रतियोगीति सामान्यतोदृष्टात् तत्सिद्धिसम्भवादिति सम्भवपदेन सूचितम् ।

### *उपमाननिरूपणम्*

**(टीका) अकृतसमयसंज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञाप्रत्यक्षम् उपमानम् । संज्ञासञ्ज्ञिसम्बन्धप्रमितिस्तत्फलमित्यन्ये । तत्रातिदेशवाक्यार्थस्त्रिविधः । साधर्म्यं वैधर्म्यं धर्ममात्रं चेति । तद्भेदात्तत्प्रतिसन्धानात्मकमुपमानमपि त्रिधा भिद्यते । तत्र साधर्म्योपमानं यथा, 'यथा गौर्गवयस्तथा' इति श्रुतातिदेशवाक्यस्य नागरिकस्य वनं गतस्य गोसदृशं गवयमवलोकयतोऽव्युत्पन्नगवयपदस्मरणवतः 'अयमसौ गोसदृशः य आप्तेनोपदिष्टः' इति प्रतिसन्धानं, तेन तस्य गवयपदार्थत्वप्रमा । वैधर्म्योपमानं यथा, 'गवादिवत् द्विशफो न भवत्यश्वः' इत्यतिदेशवाक्यं श्रुतवतः अश्वं पश्यतः अश्वपदं स्मरतः 'अयमसौ गवादिविसदृशः' इति प्रतिसन्धानम्, तस्य तेनाश्वपदार्थत्वप्रमितिः । धर्ममात्रोपमानं यथा, 'दीर्घग्रीवत्वादिमान् पशुरुष्ट्रः' इत्यतिदेशवाक्यं श्रुतवतः क्रमेलकं पश्यत उष्ट्रपदस्मृतिमतः 'अयमसौ तद्धर्मा' इति प्रतिसन्धानम्, तेनोष्ट्रपदव्युत्पत्तिरिति ।**

**(टिप्पणी)** जयन्तप्रभृतीनां मतमाह **अकृतेति** ॥ वाक्यजन्यप्राथमिकज्ञाननिरासाय **प्रत्यभिज्ञेति** ॥ फलायोगव्यवच्छिन्नस्यैव प्रामाण्यमिति मते सहायान्तम् । अन्यथा सहकारिमात्रकथनम् । नन्वतिदेशवाक्यार्थज्ञानस्योपमानत्वप्रसिद्धेः कथमगृहीतशक्तिकपदसमभिव्याहृतवाक्यार्थज्ञानस्योपमान-त्वोक्तिरित्याशङ्क्य सादृश्यप्रतिपादकवाक्यार्थज्ञानत्वस्य सर्वसाधारण्यायोगात् तस्यैवार्थः पूर्वोक्तरीत्योक्त इति वक्तुं सर्वप्रकारोपमानस्य च अनुमाने अन्तर्भावं वक्तुम् अतिदेशवाक्यार्थत्रैविध्यकथनेनोपमान-त्रैविध्यकथनपूर्वमन्तर्भावमाह **तत्रेत्यादिना** ॥ द्वितीयतृतीयोदाहरणयोरतिदेशवाक्यशब्दः पूर्वोक्तार्थको द्रष्टव्यः। गोसदृशत्वादिति सदृशविशेषत्वादित्यर्थः । अतो न अश्वादौ व्यभिचारः । अत्रापि गवयशब्दः गवाच्यक इति सामान्यतः साध्यप्रसिद्धिं सम्भवशब्देन, प्रभृत्यर्थेतिकरणेनोत्तरप्रकारद्वयेऽनुमानं च सूचयति ।

**(टीका) तदेतत् त्रयमप्यनुमान एवान्तर्भूतम् । विमतो गवयशब्दवाच्यः अगोत्वे सति गोसदृशत्वात् व्यतिरेकेण घटवदिति प्रयोगसम्भवात् । अतो न विभागानुपपत्तिः । अत्रोपमानद्वयस्यान्तर्भावानुक्तिः अतिस्फुटप्रतिभासत्वात्, आगमान्तर्भूतत्वे विवादाभावाच्चेति ।**

**(टिप्पणी)** अन्तर्भावोक्तेः पराभिमताधिक्यनिरासार्थत्वद्वारा विभागसमर्थनार्थत्वमुपसंहरति **अत इति** ॥ ननु मूलकृता प्रत्यक्षागमान्तर्भूतोपमानान्तर्भावानुक्तौ किं बीजमित्याशङ्क्य स्फुटत्वं द्वितीयमेव वाक्यशब्देन अविवादस्योक्तत्वात् तमपि बीजमाह **अत्रेति** ॥

**(टीका) प्रयोगप्रकारवैचित्र्यात् कथमनुमानत्वमित्यत उक्तम् अनुमाविशेष इति ॥ यथा खल्वन्वयिनो व्यतिरेकिणश्च प्रयोगप्रकारवैचित्र्येऽपि नानुमानाद् बहिर्भावः अनुमानविशेषत्वात् अपेक्षितसाधर्म्यसद्भावाच्च तथाऽत्रापीति ।**

**(टिप्पणी)** ननु त्वया व्यतिरेकव्याप्तेर्गमकत्वानभ्युपगमात् प्रथमानुमानेऽपि यत्तद्भ्यां तत्रैव पर्यवसानात् कथमन्तर्भावोक्तिरित्याशङ्कानिरासार्थत्वेन विशेषशब्दं व्याचष्टे **प्रयोगेति** ॥ एतत् प्रतिबन्द्योपपादयति **यथेति** ॥ **अपेक्षितेति** ॥ व्यभिचारज्ञानविरोधिज्ञानविषयत्वेनेत्यर्थः । **तथाऽत्रापीति** ॥ मन्मतेऽप्यन्वयव्याप्तिज्ञानोपयुक्तव्यतिरेकव्याप्तिप्रदर्शकोदाहरणभेदमात्रं न त्वन्वयव्याप्तिभङ्ग इत्यर्थः ।

**(टीका) एतेनोपमानस्यार्थविशेषनिष्ठतया पार्थक्यशङ्काऽपि परास्ता । तादृशसम्प्रतिपन्नानुमानवदेव तदुपपत्तेः । अनेनैव 'न च केवलतर्केण' इत्यादिपृथगुक्तेर्गतिश्चोक्ता भवति ।**

**(टिप्पणी)** नन्वेवमपि गवयत्वप्रवृत्तिनिमित्तकशब्दवाच्यत्वज्ञानमुपमानमात्रसाध्यमित्यत आह **एतेनेति** ॥ **अर्थविशेषेति** ॥ गवयत्वप्रवृत्तिनिमित्तकत्वेत्यर्थः । यथा विशेषबाधसहकृतेनेच्छादीनामाश्रयसामान्यतोदृष्टेनेतरानाश्रितत्वविशिष्टाश्रितत्वसिद्धौ तेनाष्टद्रव्यभिन्नद्रव्याश्रितत्वसिद्धिः, तथाऽत्रापि विशेषबाधसहकृतसनिमित्तकसामान्यतोदृष्टेनेतरानिमित्तकत्वविशिष्टसनिमित्तकत्वसिद्धौ गवयत्वप्रवृत्तिनिमित्तकत्वसिद्धिरिति परिहारमाह **तादृशेति** ॥ पराभिमतसामान्यतोदृष्टपूर्वकानुमानवदिहाप्युपपत्तिरिति भावः ।

*अभावविभागः*

(टीका) तथापि अभावाख्यं पृथक्प्रमाणमस्तीत्यत आह—

**(मूलम्) अभावोऽनुमा प्रत्यक्षं च ।**

**(टीका) अभावविषयं प्रमाणमभावः । तत् त्रिविधम् । प्रत्यक्षार्थप्रतियोगिकाभावविषयं प्रमाणं यथा 'नास्त्यत्र घटः' इति । आनुमानिकार्थप्रतियोगिकाभावविषयं प्रमाणं यथा, रूपज्ञानरहितस्य 'नास्ति चक्षुः' इति । आगमिकार्थप्रतियोगिकाभावविषयं प्रमाणं यथा 'वैधहिंसा न पापसाधनम्' तत्र प्रथमं प्रत्यक्षानुमानयोरन्तर्भवति । द्वितीयमनुमाने । विमतः चक्षूरहितः रूपाज्ञत्वात् घटवदिति प्रयोगसम्भवात् ।**

(टिप्पणी) प्रमेयाभावस्यानुमानत्वाद्युक्तेः प्रकरणासङ्गतिमाशङ्क्याह **तथापीति** ॥ अनुपलब्धेरभावपदार्थत्वे ज्ञानायास्तस्या अनुमित्युपयोगसम्भवेऽपि प्रत्यक्षज्ञानकरणत्वासम्भवमाशङ्क्य व्याचष्टे **अभावविषयमिति** ॥ नन्वेवमभावग्राहकप्रमाणमात्रोद्देशेनानुमानत्वादिविधौ शब्दस्याप्यभावग्राहकस्यानुमानत्वापत्तिरित्याशङ्क्याभावपदस्यापि प्रतिपन्नप्रमाणविशेषपरतां द्योतयितुं तद्विभागोक्तिपूर्वमविप्रतिपन्नांशमाह **तत् त्रिविधमिति** ॥ **प्रत्यक्षार्थप्रतियोगिकेत्यनेन** प्रायेण प्रत्यक्षार्थप्रतियोगिकाभावे परेणानुपलब्धेः प्रमाणत्वाभ्युपगमात् तदेव विप्रतिपत्तिविषयोऽभावशब्देनोक्तमिति द्योतित इत्येवंविधज्ञानकरणमिति सर्वेतिकरणार्थः । उत्तरत्र तु अविप्रतिपत्तिरित्येवमर्थ उत्तरग्रन्थेन उक्तः । रूपज्ञानाभावस्य वैधाग्निषोमीयहिंसायां विधिविरोधेन न हिंस्यादिति निषेधाप्रवृत्त्युपपत्त्या पापसाधनत्वप्रमाभावस्यानुपलब्ध्याख्यस्य ज्ञातस्यैव चक्षुराद्यभावप्रमापकत्वादिति भावः ।

**(टीका) तृतीयमागमे । अतो युक्तो विभाग इति । अत्राभावद्वयस्यान्तर्भावानुक्तिस्तत्र वादिनामविवादात् । उभयत्रान्तर्भावात् योगविभागः ।**

(टिप्पणी) **तृतीयमागम इति** ॥ आगमजन्यप्रमाया अभावे लिङ्ग इत्यर्थः । अथवा बलवदनिष्टानुबन्धित्वस्य विध्यर्थत्वमभिप्रेत्याग्नीषोमीयहिंसायाः पापसाधनत्वाभावस्यागमगम्यत्वमुक्तम् । नन्वेवमभावपदस्य विशेषपरत्वेऽभावग्राहकस्य सर्वस्यान्तर्भावानुक्तेर्न्यूनतेत्याशङ्क्याह **यत्रेति** ॥ आधिक्यापादकत्वेन शङ्कितस्यैवान्तर्भावकथनौचित्यात्, नाविप्रतिपन्नान्तर्भावकथनं युक्तमित्यर्थः । अर्थापत्त्या सहैकग्रन्थेनान्तर्भावानुक्तौ बीजमाह **उभयत्रेति** ।

**(टीका) प्रायेणानुमानेऽन्तर्भावज्ञापनाय क्रमोल्लङ्घनम् ।**

**(टिप्पणी)** प्रत्यक्षादिविभागानुसारेण प्रथमोपस्थितप्रत्यक्षपरित्यागेनानुमानस्य प्रथमोक्तेः साभिप्रायतामाह **प्रायेणेति** ॥ स्वरूपसदनुपलब्धिजन्यत्वेन पराभिमतज्ञानस्य सर्वस्यानुपलब्धिजन्यत्वाभ्युपगममादाय तस्य भूयसोऽनुमानजन्यत्वमल्पस्य प्रत्यक्षजन्यत्वमित्येवं प्रायत्वोक्तेः न्यूनाधिकभावस्याशक्यज्ञानत्वेनायोगात् घटवति घटोपलम्भे घटाभावरूपविषयाभावेनैव घटाभावप्रमानुत्पत्तेरुपपत्तेः, घटाभाववति घटभ्रमे तज्जनकदोषस्यैव प्रतिबन्धकत्वेन घटाभावप्रमानुदयसम्भवेनेन्द्रियसन्निकृष्टाधिकरणस्थले पराभिमतानुपलब्धेर्जनकत्वस्यैवाभावात् तदभ्युपगममात्रेणैवानुपलब्धिप्रयोज्यस्य ज्ञानस्य प्रत्यक्षकरणकत्वोक्तिः । अधिकरणस्येन्द्रियासन्निकर्षे प्राङ्नास्तितास्थले अनुपलब्धेरुपयोगस्य ममापि सम्प्रतिपत्तेः । ज्ञानविषयतयैवोपयोगप्रतिपादनेनानुमानान्तर्भावः परं वक्तव्य इत्येवमनुपलब्धिप्रयोज्यत्वस्वीकारनिबन्धननौत्कठ्याद्यभिप्रायकत्वं प्रायत्वोक्तेरङ्गीकृत्य यदनुबलब्धिप्रयोज्यं ज्ञानं तदनुमानकरणकमेव । अन्यत्र तु तदभ्युपेत्य प्रत्यक्षकरणकत्वोक्तिरिति ज्ञापनाय क्रमोल्लङ्घनमित्यर्थः कार्यः । अत एव परिशेषार्थापत्त्याद्यन्तर्भावोपपादनसमये मूलकारस्यानुमानान्तर्भावमात्रसाधकयुक्त्युक्तिः समञ्जसेति ज्ञेयम् ।

**(टीका) कथमेकप्रमाणस्योभयत्रान्तर्भाव इत्यत आह—**

**(मूलम्) परामर्शापरामर्शविशेषात् ।**

**(टीका) यदा 'अत्र घटोऽस्ति न वा' इति परामर्शपूर्वकं योग्यानुपलब्धिरूपं घटाभावप्रमाणं प्रवर्तते तदाऽनुमाने । 'घटोऽत्र नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वात् गजवत्' इति प्रयोगसम्भवात् । यदा पुनरेवमपरामृश्य झडिति 'नास्ति घटः' इति प्रवर्तते तदा प्रत्यक्ष इति न विरोधः ।**

**(टिप्पणी)** उभयसम्प्रतिपन्नज्ञानानुपलब्धिप्रयोज्यभिन्नानुपलब्धिप्रयोज्यज्ञानकारणस्य विप्रतिपन्नस्यैकस्यैव अनुमानप्रत्यक्षरूपना विरुद्धा इत्याशङ्कानिरासार्थत्वेन ग्रन्थशेषं व्याख्यातुमाह **कथमिति** ॥ परामर्शपदस्य व्याप्तिज्ञानार्थकत्वे योग्यानुपलब्धेश्च लिङ्गत्वमविशेषादित्यत्र वक्ष्यमाणया व्याप्तिज्ञानापेक्षया पौनरुक्त्यापत्तेः अन्तर्भावप्रतिज्ञामात्रप्रक्रमभङ्गे नवहेतूक्त्यर्थत्वस्य चायोगाद् व्याप्तिज्ञानानपेक्षत्वमात्रेण च शब्दे व्यभिचारिणा प्रत्यक्षत्वसाधनायोगेन परामर्शपदस्याप्ययोगप्रसङ्गात्

शङ्कितविरोधपरिहारार्थं प्रत्यक्षत्वानुमानत्वव्यवस्थाविषयप्रदर्शनमात्रार्थत्वेन संशयविमर्शापरपर्यायपरामर्श-पूर्वकपरकीयप्रश्नार्थतया परामर्शपदं तदभावपरतया चापरामर्शपदं व्याख्यास्यन् व्यवस्थामुपपादयति **यदेत्यादिना** ॥ यदा यत्र घटे आदरविशेषवत आलोकादिसमवहितं वस्तुतो घटाभाववद् गृहमात्रं दृष्टवतः तदा प्रतियोगिस्मरणाभावेन अभावमदृष्टवतो बहिरागतस्य केनचित् तत्र गृहे घट आसीन्न वेति पृष्टस्य पुरुषस्य तदीयप्रश्नपूर्वकप्रणिधानापेक्षमादरविशेषविषयत्वाख्ययोग्यताधिकरणस्य तद्गृहनिष्ठतया यः स्मरणाभावः तदाख्यानुपलब्धिरूपं घटाभावप्रमाजनकं प्रकर्षेण क्लृप्तप्रमाणभिन्नत्वेन पूर्वपक्षिणोऽभिमतं वर्तते स्वरूपमात्रदृष्टं हि वेश्माद्यर्थं स्मरन्नपि तत्रान्यन्नास्तिनां पृष्टस्तदैव प्रतिपद्यत इति ह्युक्तेः तदा तत्रानुमानमेव लिङ्गविषयमेव प्रमापकम् । घटः तद्गेहे नासीत् तदीयादरविशेषवत्त्वे सति तद्गेहनिष्ठतयाऽस्मर्यमाणत्वात् तादृशास्मर्यमाणगजवदित्यनुमाने तस्या लिङ्गत्वात् । यदा यत्र तु परकीयपूर्वोक्तप्रश्नाभावेऽनुपलब्धिनिश्चयार्थप्रणिधानानपेक्षत्वाख्यशैघ्र्यदशायामत्र भूतले घटो नास्तीति सन्निकृष्टाधिकरणकघटाभावप्रमाजनकत्वेन प्रमाणान्तरत्वेनाभिमताऽनुपलब्धिर्वर्तते तदा तत्राभावः प्रत्यक्षजन्यस्यैव ज्ञानस्य विषय इति व्यवस्थेत्यर्थः । विमर्शे वर्तमानत्वमविवक्षितम् । अत्रेति चेदमादौ बौद्धं सन्निधानमभिप्रेतम् । अथवा यत्र गेहमात्रोपलम्भोत्तरकालमपि प्रकारान्तरेण देवदत्तागमनाभावनिश्चयः तत्र तदागमनाभावस्याप्यनुमानेऽनुपलब्धिर्लिङ्गमेवेति सूचनाय वर्तमानत्ववाचिलट्प्रयोगः ।

अनुमितिप्रतिबन्धकानुपलब्ध्याख्यलिङ्गसंशयनिरासकतन्निश्चयप्रणिधानापेक्षानुपपत्तिं स्वरूपसदनुपलब्ध्युपयोगे प्रयोगसम्भवादित्यनेनासूसुचत् । यदि तु संशयपरं परामर्शपदमुपलम्भं वाऽनुभवमादाय यदाऽत्रेति स्वारस्यात् सन्निकृष्टाधिकरणक एव व्यवस्थार्थत्वेन ग्रन्थो व्याख्यायते तदा संशये सत्यपि प्रत्यक्षसम्भवाद् व्यवस्थानुपपत्तिपराभिमतप्राङ्नास्तितास्थलीयानुपलब्धिप्रमाणान्तरत्व-निरासासिद्धिश्च ।

**(टीका) अयं च बहिरेव विभागो न तु सुखाद्यभावप्रमाणे। साक्षिणः सुखादिस्वरूपे निश्चयरूपत्वेन परामर्शाभावात्।**

**(टिप्पणी)** संशयस्थले सर्वत्रानुपलब्धिप्रयोज्यभिन्नस्यापि साक्षिवेद्यस्य स्वनिष्ठसुखाद्यभावज्ञानस्य प्रत्यक्षत्वमेवेति न तत्र पूर्वोक्तद्वैविध्यमित्याह **अयं चेति** ॥ संशयाभावेनानुमितिसामग्रीवैकल्यमुपलक्ष्यते ।

*सम्भवपरिशेषलक्षणम्*

**(मूलम्) सम्भवपरिशेषयोः अनुमानान्तर्भावः ।**

(टीका) सम्भवपरिशेषावपि पृथक्प्रमाणे विद्येते । अतः कथं त्रित्वम् ? इत्यत आह—

**(मूलम्) सम्भवपरिशेषावनुमा ।**

अल्पप्रमासाधनं बहुलज्ञानं सम्भवः । यथा 'शतमस्यास्ति' इति ज्ञाने पञ्चाशज्ज्ञानम् ।

**(टिप्पणी)** परिशेषस्य व्यतिरेक्यात्मकत्वात् तस्य च स्वयमनभ्युपगमेन पार्थक्यशङ्कासम्भवात् तदन्तर्भावकथनं युक्तमिति अपिशब्देन सूचयन्नाह **सम्भवेति** ॥ उत्कटकोटिकसंशयात्मकस्य सम्भवस्यानुमानत्वासम्भवमाशङ्क्य सम्भवपदं व्याचष्टे **अल्पेति** ॥ अवान्तरसङ्ख्याज्ञानानुकूलमहासङ्ख्याज्ञानमित्यर्थः । क्व महासङ्ख्याज्ञानेन अवान्तरसङ्ख्याज्ञानं दृष्टमित्यत आह **यथेति** ॥

(टीका) प्रसक्तव्यावृत्तिप्रतीतिः परिशिष्यमाणप्रमासाधनं परिशेषः । स द्विविधः । विधिमुखो निषेधमुखश्च । तत्राद्यो यथा 'चैत्रमैत्रयोरयं चैत्रः' इत्युक्तेऽन्यस्मिन् मैत्रप्रमा । द्वितीयो यथा 'नायं चैत्रः' इत्युक्ते तस्मिन् मैत्रप्रमा इति ।

**(टिप्पणी)** परिशेषपदार्थमाह **प्रसक्तेति** ॥ एककोटिज्ञानानुकूलमुपस्थिताशेषापराभावज्ञानमित्यर्थः । विप्रतिपन्नाभावप्रमाणवत् न स्वार्थानुमान एवास्यान्तर्भावः किन्तु परार्थानुमानेऽपीति सूचयितुमपराभावबोधनद्वैविध्यमाह **स इत्यादिना** ॥ **विधिमुख इति** ॥ स्वानुकूलधर्मोपस्थितिजनकशब्दसापेक्ष इत्यर्थः । **निषेधमुख इति** ॥ स्वजनकशब्दसापेक्ष इत्यर्थः । अत्र द्विविधेन तेन परिशिष्यमाणप्रमेत्यपेक्षायां तत्रेत्याद्युक्तम् **आद्य इति** ॥ इतरव्यक्तौ चैत्रत्वाभावज्ञानाय तन्निष्ठाभावप्रतियोगिधर्मविशेषसामानाधिकरण्येन चैत्रत्वबोधकशब्दप्रयुक्त इत्यर्थः ।

(टीका) सम्भवपरिशेषयोरनुमानेऽन्तर्भावः । 'विप्रतिपन्नः पञ्चाशद्वान् शतवत्वात् सम्प्रतिपन्नवत्, विमतो मैत्रः चैत्रमैत्रयोरन्यतरत्वे सत्यचैत्रत्वात् व्यतिरेकेण चैत्रवद्' इति प्रयोगसम्भवात् । तस्मादुपपन्नं प्रमाणानां त्रित्वमिति । वादिविवादभावाभावज्ञापनार्थोऽयं विभागः ।

**(टिप्पणी)** पदार्थमुक्त्वा वाक्यार्थमाह **सम्भवेति** ॥ महासङ्ख्यायामवान्तरसङ्ख्यासिमजानतोऽवान्तरसङ्ख्याज्ञानानुदयेन व्याप्तिज्ञानावश्यकत्वात्, चैत्रत्वाभावज्ञानमात्रेण घटादौ मैत्रत्वज्ञाना-

भावात् सम्भवपरिशेषयोर्लिङ्गज्ञानत्वेनैवोपयोग इत्यर्थः । व्यतिरेकसहचारेण अन्वयव्याप्तिज्ञानं सम्भव-पदेनोक्तम् । आधिक्यशङ्कानिरासार्थत्वमुक्तमुपसंहरति **तस्मादिति** ॥ अनुपलब्ध्या सहैकग्रन्थेनान्त-र्भावानुक्तेः साभिप्रायतामाह **वादीति** ॥ अनुपलब्धिवादिनो भट्टस्यापि सम्भवान्तर्भावोऽविप्रतिपन्नः, पौराणिकस्यैव तत्र विवाद इति ज्ञापनार्थमित्यर्थः ।

*तर्कस्य प्रामाणिकत्वविचारः*

**(मूलम्) तर्कस्यानुमानान्तर्भावः ।**

**(टीका) ननु तर्कः प्रमाणं न वा । प्रमाणमिति ब्रूमः । कथं तर्हि त्रित्वमित्यत-स्तत्स्वरूपं विवृण्वन्नाह—**

**(मूलम्) आत्मान्योन्याश्रयचक्रकानवस्थाकल्पनागौरवश्रुतदृष्टहानादयो दूषणानुमा ।**

**(टीका) आदिपदेनाश्रुतकल्पनमदृष्टकल्पनं च सङ्गृह्यते । एतत्प्रसञ्जनमिह उप-लक्ष्यते ।**

**(टिप्पणी)** ननु तर्कप्रामाण्यस्य कैरप्यनङ्गीकारात् तत्कृताधिक्यशङ्काया असम्भवेनोत्तरग्रन्थे-ऽन्तर्भावकथनमयुक्तमित्याशङ्क्य प्रश्नपूर्वकं स्वीयप्रामाण्याभ्युपगमं प्रकटयन् तन्निमित्ताधिक्य-शङ्कानिरासार्थत्वमुत्तरग्रन्थस्याह **नन्वित्यादिना** ॥ आदिपदस्य नियतविषयतामाह **आदिपदेनेति** ॥ आत्माश्रयादेरर्थस्यानुमानत्वासम्भवादाह **एतदिति** ॥

**(टीका) व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्कः । द्विविधमनिष्टम् । प्रामाणिक-हानमप्रामाणिककल्पनं च । तत् पुनः पञ्चविधम् । आत्माश्रयान्योन्याश्रयचक्रका-नवस्थानिष्टभेदात् । सर्वस्यानिष्टत्वेऽपि गोबलीवर्दन्यायेन पृथगुक्तिः ।**

**(टिप्पणी)** नन्वेवमपि तर्कान्तर्भावे वक्तव्ये आत्माश्रयादेः तदन्तर्भावकथनमयुक्तमित्याशङ्क्य तस्यैव तर्कत्वं दर्शयितुमाह **व्याप्येति** ॥ दूषणपदसार्थक्यार्थं वक्ष्यमाणस्य प्रमाणविरोधादेरसिद्धिनिरासाय अनिष्टद्वैविध्यमाह **द्विविधमिति** ॥ प्रमाणविरोधप्रमाणाभावयोरन्यतरेणैव प्रसञ्जनीयस्यानिष्टत्व-सिद्धेरुभयमनर्थकमित्याशङ्क्योभयोर्व्यवस्थितविषयत्वं दर्शयितुमनिष्टभेदमाह **तत्पुनरिति** ॥ अनिष्टत्वेन सर्वसङ्ग्रहात् पृथगात्माश्रयादिकथनमयुक्तमिति स्वयमाशङ्क्य परिहरति **सर्वस्येति** ॥

बलीवर्दपदसमभिव्याहृतगोशब्दस्य स्त्रीत्वाश्रयगोपरत्ववदिहापि आत्माश्रयादिपदसमभिव्याहृतानिष्टपदस्य तदितरपरत्वमित्यर्थः ।

**(टीका) तत्राद्यचतुष्टयमप्रामाणिककल्पनात्मकम् । न हि कुत्राप्यात्माश्रयादिकं प्रमाणसिद्धम् । पञ्चममुभयात्मकम् ।**

**(टिप्पणी)** विषयस्यानिष्टस्य भेदमुक्त्वा प्रमाणाभावस्य विषयमाह **तत्रेति** ॥ यद्ययं घट एतद्घटजनकः स्यात् एतत्पूर्वभावी स्यादित्यादावेतत्पूर्ववृत्तित्वमात्रस्यानिष्टत्वाभावादेतद्घटनिष्ठस्यैव तस्यानिष्टत्वं वाच्यम् । तच्च न क्वचिदपि प्रमाणसिद्धमित्यभिप्रेत्याह **न हीति** ॥ प्रमाणविरोधादि-विषयव्यवस्थायै आत्माश्रयादेः प्रमाणाभावविषयत्वे उक्तेऽनिष्टस्य केवलप्रमाणविरोधविषयत्वप्रतीतिं प्राप्तां वारयितुमाह **पञ्चममिति** ॥ अनिष्टं प्रमाणविरुद्धमप्रामाणिकं चेत्यर्थः ।

**(टीका) तत्राप्याद्यं द्विविधम् । श्रुतदृष्टहानभेदात् । द्वितीयमपि तथा । अश्रुता-दृष्टकल्पनभेदात् । तदेव कल्प्यानेकत्वे कल्पनागौरवम् । एतत्प्रसञ्जनात्मकस्तर्कोऽपि पञ्चधा भिद्यते ।**

**(टिप्पणी)** अत्रापि पूर्ववद् व्यवस्थां दर्शयितुमाह **तत्रेत्यादिना** ॥ हानमभावः कल्पना सत्त्वम् । नन्वेवमादिशब्दोपात्ताश्रुतकल्पन एव गौरवस्यान्तर्भावात् पृथगुक्तिरयुक्तेत्याशङ्क्य कल्प्यस्य भूयस्त्वरूपं विशेषमादाय गोबलीवर्दन्यायेनैव पृथगुक्तिरिति परिहारं सूचयितुमाह **तदेवेति** ॥ फलीभूतानिष्टप्रसञ्जनस्य भावव्युत्पन्नतर्कशब्दवाच्यस्यानुमित्यन्तर्भावोक्तेः करणीभूतप्रसञ्जनीयव्याप्यज्ञानस्यानुमानान्तर्भावोप-योगितामाह **एतत्प्रसञ्जनेति** ॥ करणव्युत्पन्नः प्रसञ्जनशब्दः । अनिष्टप्रसञ्जकत्वेन गौरवप्रसञ्जकादीनां सङ्ग्रहाय पञ्चधोक्तिः ।

**(टीका) तस्य पञ्चाङ्गानि । प्रसञ्जकस्य प्रसञ्जनीयेन व्याप्तिः, प्रतितर्केरप्रतिघातः, प्रसञ्जनीयस्य विपर्यये पर्यवसानं, प्रसञ्जनीयस्यानिष्टत्वं, प्रतिपक्षासाधकत्वं चेति ।**

**(टिप्पणी)** व्याप्तिबलेनार्थगमकत्वस्यानुमानान्तर्भावसाधकस्य सूचनाय तर्काङ्गमाह **तस्येति** ॥ **अङ्गानि** सत्तर्कताप्रयोजकानि । **प्रसञ्जकस्य** आपादकस्येत्यर्थः । प्रसञ्जनीयेन सह व्याप्तेः प्रसञ्जनीयानिष्टत्वस्य च तर्कस्वरूपनिर्वाहकता । प्रतितर्कपराघाताभावस्य सत्प्रतिपक्षाभावनिर्वाहकता । विपर्ययपर्यवसानस्य तु 'सोऽयं क्वचिद् विपरीतशङ्कानिरसनद्वारेण प्रमाणान्तरानुग्राहकोऽपि भवतीति प्रमाणपद्धत्यनुसारेणानुमानानुग्राहकत्वस्यापि सद्भावादुपयोगः । अनिष्टप्रसञ्जनं विपर्ययपर्यवसानं चोभयं

मिलितमेवानुमितिसाधनं भवतीति तर्कस्य प्रामाण्यमिति पद्धतिरप्यनुग्राहकविषयैवेति ज्ञेयम् । यद्वा पराभ्युपगममात्रेणैवानिष्टापादनं न तु वस्तुतः तत्सत्त्वेनैवेति पराभ्युपगमं सम्बन्धमादाय प्रसञ्जकज्ञानस्य प्रामाण्योपपादनाय प्रसञ्जनीयानिष्टत्वस्य च प्रमाणविरुद्धत्वादेरुपपादनाय विपर्ययपर्यवसानापेक्षेति कल्प्यम् । प्रकरणसमनापरिहारायाननुकूलत्वापेक्षा द्रष्टव्या ।

**(टीका) तस्यैवोत्पत्तिज्ञप्त्यर्थं तदुत्पत्तिज्ञप्त्यपेक्षायामात्माश्रयत्वप्रसङ्गः । यदुत्पत्त्याद्यधीनं यदुत्पत्त्यादि तदुत्पत्त्यर्थं तदुत्पत्त्याद्यपेक्षायामन्योन्याश्रयत्वप्रसङ्गः । यदुत्पत्त्याद्यधीनं यदुत्पत्त्यादि तदुत्पत्त्यादौ परम्परया तदुत्पत्त्याद्यपेक्षायां चक्रकप्रसङ्गः । उत्पत्त्यादावन्योत्पत्त्याद्यपेक्षाया अपर्यवसानेऽनवस्थाप्रसङ्गः । अत्र यद्येवमभ्युपगमः तदाऽऽत्माश्रयादिप्रसङ्गः ।**

**(टिप्पणी)** आत्माश्रयादिपदव्याख्यां सूचयन् व्याप्तिबलेन गमकत्वस्फुरणायात्माश्रयादेरुदाहरणमाह **तस्यैवेत्यादिना** ॥ एतद्घटस्यैवैतद्घटजनकत्वरूपापादकाभ्युपगमे एतद्घटपूर्ववृत्तित्वरूपापाद्याभ्युपगमनीयप्रसञ्जनम्, घटचक्रभ्रमणयोः परस्परजनकत्वाभ्युपगमे परस्परपूर्ववृत्तित्वाभ्युपगमनीयत्वप्रसङ्गः, भ्रम्यन्तरितदण्डघटयोस्तदभ्युपगमे उभयपूर्ववृत्तित्वाभ्युपगमनीयत्वप्रसङ्गः, घटारम्भकयत्नस्य चेष्टाद्वारा घटजनकत्ववत् चेष्टायामपि चेष्टान्तरहेतुत्वाभ्युपगमे चेष्टात्वाभावाभ्युपगमनीयत्वप्रसङ्ग इत्यर्थः । एवं च स्वस्यैव स्वपूर्ववृत्तित्वादिकमात्माश्रयादिपदार्थ उक्तो भवति ।

**(टीका) यत्रैवमभ्युपगमः तत्र तत्प्रसङ्गः यथाऽमुत्र । यदि नात्माऽश्रयादिः तर्हि नैतदपीति प्रवृत्तिप्रकारः । सामान्यत एव च व्याप्तिर्वाच्या ।**

**(टिप्पणी)** ननु स्वजनकत्वस्वपूर्ववृत्तित्वादेरेव आपाद्यत्वसम्भवे अभ्युपगमान्तर्भावोऽनर्थक इत्याशङ्क्य नाभ्युपगमस्यापादकाद्यन्तर्भावोऽभिप्रेतः किन्तु सम्बन्धत्वेन तस्योपयोग इति परिहारं सूचयितुमाह **यत्रेति** । नन्वेवमपि प्रसञ्जकस्य प्रसञ्जनीयेन सह व्याप्तिरित्यत्रानिष्टेन सह व्याप्तिरुक्ता । सा त्वसम्भविन्येव । एतद्घटनिष्ठैतद्घटपूर्ववृत्तित्वात्मकेनानिष्टेन सह व्याप्तेरभावादित्याशङ्क्याह **सामान्यत एव** '[1]चेति ॥ येन रूपेण एतस्यानिष्टता न तेन रूपेण व्याप्तिनिरूपकता किन्तु एतद्घटपूर्ववृत्तित्वादिरूपेणेत्यर्थः ।

**(टीका) श्रुतहानं यथा 'यदीश्वरो न सर्वज्ञः तर्हि न जगत्कर्ता स्यात्' इति । दृष्टहानं यथा 'यदि पर्वतोऽनग्निमान् तर्हि निर्धूमः स्यात्' इति । अश्रुतकल्पनं यथा 'यदीश्वरो**

१. चशब्दः टिप्पण्यनुरोधेन टीकायां योजितः ।

**जीवाभिन्नः तर्हि दुःखी स्यात्' इति । अदृष्टकल्पनं यथा 'यदि पीतमुदकमन्तरधक्ष्यत् तर्हि मामपि दहेत् अविशेषात्' इति । यत्रापाद्यापादकयोर्न साक्षात्सामानाधिकरण्यं तत्र तथैवानुपपत्तौ प्रकारान्तरेणैकाधिकरणतामापाद्य व्याप्तिरभिधातव्या ।**

**(टिप्पणी)** श्रुतहानादिपदार्थं निगदेनैव कथयन् श्रुतहानादेरप्युदाहरणमाह **श्रुतेत्यादिना** । नन्वेवमपि यदि देवदत्तः सर्वज्ञः यज्ञदत्तोऽपि तथा स्यादित्यादौ व्याप्तिबलेनार्थगमकत्वमसिद्धमुभयसार्वज्ञ्यस्य व्यधिकरणत्वादित्याशङ्क्याह **यत्रापाद्येति** । अत्राप्यनुपपत्तिरूपा व्याप्तिरस्त्येव । परं तु अनुपपत्त्युपपादकं सर्वज्ञत्वेनाभिमतदेवदत्तनिष्ठात्मकत्वादिकमेव सर्वज्ञत्वेनाभ्युपगमनीययज्ञदत्तनिष्ठं परम्परासम्बन्धं बोधयदुदाहरणवाक्यमनुपपत्तिरूपव्याप्तिपरं प्रयोक्तव्यम् । यथा पूरादावनुपपत्तिरूपव्याप्तिसद्भावेऽपि तदुपपादकपरम्परासम्बन्धबोधकं यदधोदेशस्थः पूरस्तदुपरिदेशस्था वृष्टिरिति वाक्यं प्रयुज्यत इति भावः । **तथैवेति** ॥ व्यधिकरणयोरेवानुपपत्तिरूपव्याप्तावित्यर्थः । **प्रकारान्तरेणेति** ॥ परम्परासम्बन्धेनेत्यर्थः । **अभिधातव्येति** ॥ उपपादकसम्बन्धत्वोद्बोधनद्वारा प्रतिपादनीयेत्यर्थः ।

**(टीका) यथा 'यदि देवदत्तः सर्वज्ञस्तर्हि यज्ञदत्तोऽपि तथा स्यात्' इत्यत्र 'यत्र यो धर्मो वर्तते स तदविशिष्टेऽपि वर्तते' इत्यादि । सोऽयं तर्कोऽनुमान एवान्तर्भूतोऽतो न प्रमाणत्रित्वभङ्गः ।**

**(टिप्पणी)** एवं तदविशिष्ट इत्यत्रापि । अन्तर्भावकथनस्याधिक्यशङ्कानिरासद्वाराऽनुप्रमाणविभाग-समर्थनार्थतामाह **सोऽयमिति** ।

**(टीका) स्यादेतत् । न तर्कोऽनुमानम् । तर्के हि प्रामाणिकहानादि आपाद्यते । नच तत् साध्यं भवति अपसिद्धान्तात् प्रमाणविरोधाच्च, आरोपितलिङ्गत्वेनासिद्धेश्चेति । अत उक्तम् दूषणेति ॥ द्विविधं ह्यनुमानम् । स्वपक्षसाधनं परपक्षदूषणं च । तत्राद्यं यथा 'पर्वतोऽग्निमान् धूमवत्त्वात्' इति । द्वितीयमपि द्वेधा प्रवर्तते 'नायं निरग्निकः अनिर्धूमत्वात्' इति वा 'निरग्निकत्वाङ्गीकारे निर्धूमत्वाभ्युपगमः' इत्यनिष्टप्रसङ्गरूपेण वा तत्र दूषणानुमाने तर्कस्यान्तर्भावः ।**

**(टिप्पणी)** नन्वेवमनुमानान्तर्भावोक्तावाधिक्यनिरासिद्धेर्दूषणपदमनर्थकमित्याशङ्क्य तन्निरस्यां शङ्कामाह **स्यादेतदित्यादिना** ॥ दूषणपदस्य शङ्कानिरासार्थत्वमुपपादयिष्यन् तद्व्यावर्त्यप्रदर्शनायानुमान-

द्वैविध्यमाह **द्विविधमिति** ॥ परेति प्राथमिकानुमानविरुद्धाभावसाधनमित्यर्थः । आद्यमुदाहरति **तत्रेति** ॥ दूषणानुमानेऽपि नायं निरग्निक इत्यादौ साध्यस्य प्रमाणविरोधाद्यभावात् तस्यापि द्वैविध्यमाह **द्वितीयमपीति** ॥ **प्रसङ्गेति** ॥ अभ्युपगममेव सम्बन्धमादायापाद्यापादकविषयमित्यर्थः । द्वैविध्यकथनप्रयोजनमाह **तत्रेति** ॥

**(टीका) प्रसङ्गरूपानुमाने च न साध्यवत् आपाद्यस्य प्रमाणविरोधादि असिद्धिश्च दूषणमिति वक्ष्यतीति न कश्चिद्विरोध इति । एतदर्थ एव योगविभागः ।**

**(टिप्पणी)** तथापि प्रमाणविरोधादेः कथं न दोषतेत्याशङ्क्याह **प्रसङ्गरूपानुमाने चेति** ॥ येन सम्बन्धेन वह्न्यभावादेर्ह्रदादौ वस्तुतः सत्त्वं तेन सम्बन्धेन पर्वतादौ तदनुमाने प्रमाणविरोधादिदोषो नाभ्युपगमरूपसम्बन्धमादाय तदनुमान इति भावः । एतदेव साधनानुमानाद् दूषणानुमानस्य वैलक्षण्यं साधनानुमानेऽसदभ्युपगमस्य सम्बन्धत्वाभावादित्यभिप्रेत्य स्वसिद्धैः साधनं परसिद्धैर्दूषणमतो न दूषणेऽप्रसिद्धतादीत्यत्राचार्यो वक्ष्यतीत्याह **इति वक्ष्यतीति** ॥ दूषणपदस्यान्तर्भावोपपादकतया सार्थक्यमुपसंहरति **इति न कश्चिदिति** ॥ विरोध आनर्थक्यम् । दूषणानुमानेऽन्तर्भावस्य वाद्यन्तरासम्मतस्य कथनायैव पृथगन्तर्भावोक्तिरित्याह **एतदर्थ एवेति** ॥

*उपक्रमादिस्वरूपम्*

**(टीका) तथाऽपि वाक्यतात्पर्यज्ञापकान्युपक्रमादीनि पृथक्प्रमाणानि सन्तीत्यत आह—**

**(मूलम्) उपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादाश्च ।**

**(टीका) चोऽनुमेत्यस्यनुकर्षणार्थः ।**

**(टिप्पणी)** उपक्रमादेरागमत्वेन प्रमाणान्तरत्वशङ्काभावादन्तर्भावोक्तिसम्भवे उपपत्त्यन्तर्भावकथनार्थं पृथक्प्रयासस्यानुचितत्वेनोपपत्त्यन्तर्भावकथनासङ्गतिमाशङ्क्य महावाक्य-तात्पर्यरूपे प्रमेये आगमतया प्रमाणत्वासम्भवेन प्रमाणान्तरशङ्कामुपपादयन् तन्निरासार्थत्वमुत्तरग्रन्थस्याह **तथापीति** ॥ स्वार्थे क्लृप्तप्रमाणत्वेऽपीत्यर्थः । उपक्रमादीनां तात्पर्यसाधकत्वे दूषणानुमानत्वायोगाद् योग्यताबलेन समासस्थानुमापदमात्रानुषङ्गद्योतनार्थत्वं चकारस्याह **च इति** ॥

**जीवाभिन्नः तर्हि दुःखी स्यात्' इति । अदृष्टकल्पनं यथा 'यदि पीतमुदकमन्तरधक्ष्यत् तर्हि मामपि दहेत् अविशेषात्' इति । यत्रापाद्यापादकयोर्न साक्षात्सामानाधिकरण्यं तत्र तथैवानुपपत्तौ प्रकारान्तरेणैकाधिकरणतामापाद्य व्याप्तिरभिधातव्या ।**

**(टिप्पणी)** श्रुतहानादिपदार्थं निगदेनैव कथयन् श्रुतहानादेरप्युदाहरणमाह **श्रुतेत्यादिना** । नन्वेवमपि यदि देवदत्तः सर्वज्ञः यज्ञदत्तोऽपि तथा स्यादित्यादौ व्याप्तिबलेनार्थगमकत्वमसिद्धमुभयसार्वज्ञस्य व्यधिकरणत्वादित्याशङ्क्याह **यत्रापाद्येति** । अत्राप्यनुपपत्तिरूपा व्याप्तिरन्येव । परं तु अनुपपत्त्युपपादकं सर्वज्ञत्वेनाभिमतदेवदत्तनिष्ठात्मकत्वादिकमेव सर्वज्ञत्वेनाभ्युपगमनीययज्ञदत्तनिष्ठं परम्परासम्बन्धं बोधयदुदाहरणवाक्यमनुपपत्तिरूपव्याप्तिपरं प्रयोक्तव्यम् । यथा पूरादावनुपपत्तिरूपव्याप्तिसद्भावेऽपि तदुपपादकपरम्परासम्बन्धबोधकं यदधोदेशस्थः पूरस्तदुपरिदेशस्था वृष्टिरिति वाक्यं प्रयुज्यत इति भावः । **तथैवेति** ॥ व्यधिकरणयोरेवानुपपत्तिरूपव्याप्तावित्यर्थः । **प्रकारान्तरेणेति** ॥ परम्परासम्बन्धेनेत्यर्थः । **अभिधातव्येति** ॥ उपपादकसम्बन्धत्वोद्बोधनद्वारा प्रतिपादनीयेत्यर्थः ।

**(टीका) यथा 'यदि देवदत्तः सर्वज्ञस्तर्हि यज्ञदत्तोऽपि तथा स्यात्' इत्यत्र 'यत्र यो धर्मो वर्तते स तदविशिष्टेऽपि वर्तते' इत्यादि । सोऽयं तर्कोऽनुमान एवान्तर्भूतोऽतो न प्रमाणत्रित्वभङ्गः ।**

**(टिप्पणी)** एवं तदविशिष्ट इत्यत्रापि । अन्तर्भावकथनस्याधिक्यशङ्कानिरासद्वाराऽनुप्रमाणविभाग-समर्थनार्थतामाह **सोऽयमिति** ।

**(टीका) स्यादेतत् । न तर्कोऽनुमानम् । तर्के हि प्रामाणिकहानादि आपाद्यते । नच तत् साध्यं भवति अपसिद्धान्तात् प्रमाणविरोधाच्च, आरोपितलिङ्गत्वेनासिद्धेश्चेति । अत उक्तम् दूषणेति ॥ द्विविधं ह्यनुमानम् । स्वपक्षसाधनं परपक्षदूषणं च । तत्राद्यं यथा 'पर्वतोऽग्निमान् धूमवत्त्वात्' इति । द्वितीयमपि द्वेधा प्रवर्तते 'नायं निरग्निकः अनिर्धूमत्वात्' इति वा 'निरग्निकत्वाङ्गीकारे निर्धूमत्वाभ्युपगमः' इत्यनिष्टप्रसङ्गरूपेण वा तत्र दूषणानुमाने तर्कस्यान्तर्भावः ।**

**(टिप्पणी)** नन्वेवमनुमानान्तर्भावोक्तावाधिक्यनिरासासिद्धेर्दूषणपदमनर्थकमित्याशङ्क्य तन्निरस्यां शङ्कामाह **स्यादेतदित्यादिना** ॥ दूषणपदस्य शङ्कानिरासार्थत्वमुपपादयिष्यन् तद्व्यावर्त्यप्रदर्शनायानुमान-

द्वैविध्यमाह **द्विविधमिति** ॥ परेति प्राथमिकानुमानविरुद्धाभावसाधनमित्यर्थः । आद्यमुदाहरति **तत्रेति** ॥ दूषणानुमानेऽपि नायं निरग्निक इत्यादौ साध्यस्य प्रमाणविरोधाद्यभावात् तस्यापि द्वैविध्यमाह **द्वितीयमपीति** ॥ **प्रसङ्गेति** ॥ अभ्युपगममेव सम्बन्धमादायापाद्यापादकविषयमित्यर्थः । द्वैविध्यकथनप्रयोजनमाह **तत्रेति** ॥

**(टीका) प्रसङ्गरूपानुमाने च न साध्यवत् आपाद्यस्य प्रमाणविरोधादि असिद्धिश्च दूषणमिति वक्ष्यतीति न कश्चिद्विरोध इति । एतदर्थ एव योगविभागः ।**

**(टिप्पणी)** तथापि प्रमाणविरोधादेः कथं न दोषतेत्याशङ्क्याह **प्रसङ्गरूपानुमाने चेति** ॥ येन सम्बन्धेन वह्न्यभावादेर्ह्रदादौ वस्तुतः सत्वं तेन सम्बन्धेन पर्वतादौ तदनुमाने प्रमाणविरोधादिदोषो नाभ्युपगमरूपसम्बन्धमादाय तदनुमान इति भावः । एतदेव साधनानुमानाद् दूषणानुमानस्य वैलक्षण्यं साधनानुमानेऽसदभ्युपगमस्य सम्बन्धत्वाभावादित्यभिप्रेत्य स्वसिद्धैः साधनं परसिद्धैर्दूषणमतो न दूषणेऽप्रसिद्धतादीत्यत्राचार्यो वक्ष्यतीत्याह **इति वक्ष्यतीति** ॥ दूषणपदस्यान्तर्भावोपपादकतया सार्थक्यमुपसंहरति **इति न कश्चिदिति** ॥ विरोध आनर्थक्यम् । दूषणानुमानेऽन्तर्भावस्य वाद्यन्तरासम्मतस्य कथनायैव पृथगन्तर्भावोक्तिरित्याह **एतदर्थ एवेति** ॥

*उपक्रमादिस्वरूपम्*

**(टीका) तथाऽपि वाक्यतात्पर्यज्ञापकान्युपक्रमादीनि पृथक्प्रमाणानि सन्तीत्यत आह—**

## (मूलम्) उपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादाश्च ।

**(टीका) चोऽनुमेत्यस्यनुकर्षणार्थः ।**

**(टिप्पणी)** उपक्रमादेरागमत्वेन प्रमाणान्तरत्वशङ्काभावादन्तर्भावोक्तिसम्भवे ऽपपत्त्यन्तर्भावकथनार्थं पृथक्प्रयासस्यानुचितत्वेनोपपत्त्यन्तर्भावकथनासङ्गतिमाशङ्क्य महावाक्य-तात्पर्यरूपे प्रमेये आगमतया प्रमाणत्वासम्भवेन प्रमाणान्तरशङ्कामुपपादयन् तन्निरासार्थत्वमुत्तरग्रन्थस्याह **थापीति** ॥ स्वार्थे क्लृप्तप्रमाणत्वेऽपीत्यर्थः । उपक्रमादीनां तात्पर्यसाधकत्वे दूषणानुमानत्वायोगाद् ग्यनाबलेन समासस्थानुमापदमात्रानुषङ्गद्योतनार्थत्वं चकारस्याह **च इति** ॥

**(टीका) प्रकरणादिरुपक्रमः । तदन्त उपसंहारः । तयोरुपक्रमोपसंहारयोरेकार्थत्वं तदैकरूप्यम् । एकप्रकारासकृदुक्तिरभ्यासः । प्राचुर्येण प्रमाणान्तराप्राप्तता अपूर्वता । फलवत्त्वं फलम् । स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः ।**

**(टिप्पणी)** उपक्रमादिपदार्थमाह **प्रकरणादिरित्यादिना** ॥ एकार्थपरमहावाक्यात्मकप्रकरणस्य प्रथमं पठ्यमानोऽवयव उपक्रमः । यथा अथर्वणे द्वा सुपर्णेति भेदोपक्रमः । तस्यैव चरमं पठ्यमानोऽवयव उपसंहारः । यथा परमं साम्यमुपैतीति । साम्यस्य भेदान्तर्भावात् भेदोपसंहारोऽयम् । उपक्रमोपसंहारयोरेकार्थत्वमैकरूप्यं तदस्त्येव । अन्यः पिप्पलमन्योऽभिचाकशीति अन्यमीशं पश्यतीत्यर्थैक्यादेकप्रकारासकृदुक्तिरूपाभ्यासः । शास्त्रैकगम्यपरप्रतियोगिकस्य तद्धर्मिकस्य वा भेदस्य प्रमाणान्तराप्राप्तत्वादपूर्वत्वम् । जीवनिष्ठस्य प्रत्यक्षत्वात् प्राचुर्यमुक्तम् । पुण्यपापे विधूयेति फलम् । अस्य महिमानमिति स्तुतिरूपार्थवादः । अन्यत्रापि मूर्धा ते विपतिष्यतीति निन्दार्थवादोऽपि । एकः कर्तृत्वेन यत्रोपाख्यायते सा परकृतिः । अनेके यत्र कर्तृत्वेनोपाख्यायन्ते स पुराकल्प इति स्तुतिनिन्दयोरवान्तरभेदकथनमात्रम् ।

**(टीका) एतेषां वाक्यतात्पर्ये अनुमात्वान्नोक्तविरोधः।**

**(टिप्पणी)** पदार्थं व्याख्याय अनुषङ्गसहितवाक्यार्थमाह **एतेषामिति** ॥ अत्रानुषक्तस्यानुमापदस्य करणव्युत्पन्नत्वादुपक्रमादिसामानाधिकरण्यम् । आत्माश्रयादिपदस्य करणपरत्वात् पूर्वत्रापि करणव्युत्पन्न एवानुमानशब्द इति द्रष्टव्यम् । उपपत्तिविशेषा इत्येतदेकवाक्यत्वेन पूर्वग्रन्थस्यान्तर्भावकथनार्थत्वे विशेषपदानर्थक्यप्रसङ्गात् त एवेत्यादेः पौनरुक्त्यापातात् ।

**(टीका) यद्येतेऽनुमानेऽन्तर्भूतास्तर्हि कथं तेषां**

**(मूलम्) उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥**

**(टीका)** इति उपपत्तितः पृथगुक्तिरित्यत आह—

**(मूलम्) उपपत्तिविशेषाः ।**

यथा खलु पाण्डवानां कौरवान्तर्भावेऽपि कौरवेभ्य पृथगुक्तिः कौरवविशेषत्वेन साक्षादेकत्वाभावेन कौरवपदेन तदतिरिक्तग्रहणात्, तथा प्रकृतेऽपीति ।

**(टिप्पणी)** एकग्रन्थेनान्तर्भावकथनसम्भवे उपपत्त्यन्तर्भावकथनार्थं पृथक्प्रयासस्यानुचितत्वेनोपपत्त्यन्तर्भावकथनार्थत्वेन पौनरुक्त्यपरिहारायोगात् त एवेत्यस्यानर्थक्यापरिहाराच्च चकारानुकृष्टानुमापदैकवाक्यतया पूर्वग्रन्थं व्याख्याय शङ्कानिरासार्थत्वेनोत्तरावयवं व्याख्यातुमाह **यद्येत इति** ॥ तात्पर्यरूपग्राह्यमादायोपपत्तित्वस्योपक्रमादावपि सत्त्वे प्रतिज्ञातभेदलिङ्गरूपोपपादकात्तृत्वभोक्तृत्वरूपविरुद्धधर्मप्रतिपादकस्य अत्ति अनश्नन् इत्येतस्योपपत्तिशब्देन तात्पर्यनिर्णायकसङ्ग्राहकवाक्येऽसाधारण्येनाभिधानेन उपक्रमादेरित्येतन्न युज्येतेति तात्पर्यलिङ्गत्वतदभावाभ्यामेव असाधारण्यं वाच्यम् । तथाच नोपक्रमादेस्तात्पर्यानुमानत्वमिति शङ्काशयः । पाण्डवत्वरूपविशेषेऽपि प्रतिज्ञातार्थोपपादकसमर्पकत्वाभावरूपविशेषसद्भावेन धार्त्तराष्ट्रत्वमादाय दुर्योधनादिभिः सहैक्याभावात् तत्परकौरवशब्देन पाण्डवानामुक्त्ययोगात् पृथगभिधानवत् तात्पर्यलिङ्गत्वाविशेषेऽपि प्रतिज्ञातार्थोपपादकसमर्पकत्वाभावरूपविशेषसद्भावेन तत्समर्पकत्वरूपमादाय अत्ति अनश्नन् इत्येतेन सहैक्याभावात् तत्परोपपत्तिशब्देनाभिधानायोगात् पृथगुक्तेरन्यथोपपत्तेर्न तात्पर्यलिङ्गत्वाभावद्योतकतेति परिहाराशयः । उपपत्तितो विशिष्यन्ते भिद्यन्ते तद्व्यावृत्तप्रतिज्ञातार्थोपपादकसमर्पकत्वाभावरूपधर्मवन्त इति मूलार्थः । कौरवस्थानीयतात्पर्यलिङ्गपरो वोपपत्तिशब्दः । तद्विशेषत्वं च पूर्ववदेव । उत्तरग्रन्थे तु उक्तसमर्पकपर एवोपपत्तिशब्द इति द्रष्टव्यम् ।

**(टीका) नन्वेवं पृथगुक्तिमन्यथा व्याख्यायैषामनुमानान्तर्भावाङ्गीकारे को हेतुरित्यत आह—**

**(मूलम्) त एव सोपपत्तयो लिङ्गानि ।**

उक्ता इति शेषः । यथा 'उपक्रमोपसंहारौ' इत्यत्रोपपत्तेर्लिङ्गत्वमुच्यते तथा उपक्रमादीनामपि । अतो युक्तमुक्तम् ।

**(टिप्पणी)** पूर्वोक्तसमर्पकत्वस्योपक्रमादावसम्भवादुत्तरग्रन्थस्योपक्रमाद्यन्तर्भावपरत्वे पौनरुक्त्यापातात्, उपपत्त्यन्तर्भावार्थत्वे पूर्वग्रन्थ एवोपपत्तिपदप्रक्षेपेणान्तर्भावोक्त्युपपत्तौ यत्नगौरवायोगात् त एव सेत्यंशस्यानर्थक्यापत्तेश्चायुक्ततामाशङ्क्य तात्पर्यलिङ्गत्वतदभावाभ्यामेव पृथगुक्त्युपपत्तेः किमर्थं पूर्वोक्तविशेषणमादाय पृथगुक्तिमन्यथयित्वोपक्रमादेरनुमानान्तर्भावाभ्युपगम इत्याशङ्कानिरासार्थत्वेन व्याख्यातुमाह **नन्वेवमिति** ॥ तात्पर्यलिङ्गत्वाभावशङ्कादिनं प्रति लिङ्गत्वस्यासिद्धत्वेनोपक्रमादीनामुपपत्तिसहितानां लिङ्गत्वात् तदभावमादाय पृथगुक्त्ययोगादन्यथा पृथगुक्तिवर्णनमित्यस्यायुक्ततामाशङ्क्याह

**उक्ता इति शेष इति** ॥ तथाच पृथगभिधायकवाक्य एव सर्वेषां तात्पर्यलिङ्गत्वोक्तेर्न तदभावमादाय पृथगुक्तिवर्णनसम्भव इत्यर्थः । उपक्रमादयो लिङ्गत्वेन उक्ता इत्येतावतैव शङ्कानिरासासिद्धेरुपपत्तेरपि लिङ्गत्वाभिधानमनर्थकमित्याशङ्क्य दृष्टान्ततयोपपत्तिपदं व्याचष्टे **यथेति** ॥ अतो लिङ्गत्वे सत्येव पूर्वोक्तावान्तरविशेषमादाय पृथगुक्तिर्वर्णनीयेत्युपसंहरति **अत इति** ॥

**(टीका) किञ्च यथोपपत्तिर्लिङ्गं व्याप्तिबलेनार्थधीहेतुः तथोपक्रमादयोऽपि 'यत्र यत् उपक्रम्यते तत्रापवादाभावे तत् तात्पर्यगोचरः' इत्यादिव्याप्तिबलेनैवार्थबोधकाः । अतः कथं नानुमानेऽन्तर्भाव इत्याह त एवेति ॥**

**(टिप्पणी)** प्रतिज्ञातार्थापत्त्याद्यन्तर्भावसाधकवदुपक्रमाद्यन्तर्भावसाधकस्योत्तरत्रानुक्तत्वेन मूलस्य न्यूनतां निराकर्तुं सङ्ग्राहकवाक्यगतोपक्रमादिलिङ्गत्वोक्तेश्च निरुपपत्तिकतां परिहरन्नेतमेव ग्रन्थं व्याप्तिज्ञानसापेक्षत्वरूपान्तर्भावसाधकपरं लिङ्गशब्दमादाय व्याचष्टे **किञ्चेति** ॥ सत्तर्कस्वरूपे व्याप्तिज्ञानसापेक्षत्वस्य परेणाप्यभ्युपगमान्न तर्कान्तर्भावसाधकानुक्त्या मूलस्य न्यूनताशङ्का । वासः परिधत्ते इत्युपक्रान्तस्यापि वासःसामान्यस्य एतद्वै सर्वदेवत्यं यत् क्षौममित्युपसंहारेण बाधात् तात्पर्यविषयत्वेन तद्वारणायापवादाभावे सतीत्युक्तम् । एतेनोपक्रमादीनां प्रत्येकमपि लिङ्गत्वमित्यपि सूचितम् ।

**(टीका) एतेनागमान्तर्भावोऽपि परास्तः । न ह्यागमवत् व्याप्तिमनपेक्ष्य बोधका एते अनुभूयन्ते । तेषामागमार्थविषयत्वज्ञापनार्थो योगविभागः ।**

**(टिप्पणी)** ननूपपत्तेः पूर्वोक्तोपपत्तित्वे सत्यपि तात्पर्यलिङ्गत्वे उपक्रमादिसाम्येन दृष्टान्ततया व्याख्यानमयुक्तम्, उपक्रमादिवदेव वाऽन्तर्भावोऽपि वक्तव्य इत्यनुशयेनोपक्रमाद्यन्तर्भावसाधक-हेतुनोपपत्तेरप्यन्तर्भावोऽनेन ग्रन्थेनोच्यत इति सूचयितुमाह **एतेनेति** ॥ उपपत्त्यन्तानामिति शेषः । अन्तर्भावसाधकहेतोः सर्वसाधारण्याय पुनरुपक्रमादेरपि ग्रहणं सार्थकमिति न कोऽपि दोष इति सूचयितुमाह **न हीति** ॥ एतेषां दूषणानुमानत्वाभावेन पृथगन्तर्भावकथनसम्भवेऽपि प्रयोजनान्तरमाह **एतेषामिति** ॥ तात्पर्यावच्छेदकतयेति शेषः । अन्यथा उपक्रमादीनां तात्पर्यादित्युत्तरग्रन्थविरोधात् ।

## *समाख्यादिस्वरूपम्*

**(टीका) तथाऽपि समाख्यादीनि पृथक्प्रमाणानि सन्तीत्यत आह—**

**(मूलम्) समाख्यावाक्यप्रकरणस्थानानि च ।**

अनुमेत्यस्यानुकर्षणार्थश्चकारः । निर्णीतस्थले समानोक्तिः समाख्या ।

**(टिप्पणी)** समाख्यादीनामप्यागमत्वेनान्तर्भावकथनायोगमाशङ्क्य शङ्काबीजं दर्शयितुमाह **तथापीति** ॥ उपक्रमादीनां तात्पर्यलिङ्गत्वेऽपि समाख्यादीनां तात्पर्ये लिङ्गत्वाभावेन शेषत्वाद्यर्थे प्रामाण्यस्य वाच्यत्वात् शेषत्वादेश्च द्वितीयादिप्रतिपाद्यत्वेन समाख्यादेः शब्दविधया बोधकत्वाभावात् प्रमाणान्तरतैव वाच्येति पार्थक्यशङ्कासम्भव इत्यर्थः । अत्रापि विशेषपदानर्थक्यप्रसङ्गभियोत्तरग्रन्थैक-वाक्यतया व्याख्यां परित्यज्य चकारानुकृष्टानुमापदैकवाक्यतया ग्रन्थं व्याचष्टे **अनुमेतीति** ॥ मीमांसकोक्तयौगिकशब्दरूपाया आध्वर्यवादिसमाख्याया अन्वाधानादौ श्रुतितयैवाध्वर्यवादेः शेषताबोध-कत्वसम्भवेन लिङ्गविधया बोधकत्वासम्भवं श्रुतित्वेनैव वक्ष्यमाणस्य वाक्याद्यपेक्षया दुर्बलत्वासम्भवं समा चासावाख्या चेति स्वमते योगार्थानुगमं चाभिप्रेत्य स्वाभिमतं समाख्यापदार्थमाह **निर्णीतेति** ॥ सन्दिग्धार्थकशब्दसमानार्थको निश्चितार्थकः शब्द इत्यर्थः ।

**(टीका) सा द्विविधा । अर्थतः शब्दतोऽपीति । वाक्यमुक्तम् । कयाचिद्विवक्ष-यैकार्थावच्छिन्नं वाक्यजातं प्रकरणम् ।**

**(टिप्पणी)** शब्दसाम्येऽप्यर्थभेदे निर्णायकत्वायोगादर्थसाम्यमेव लक्षणप्रविष्टमिति पूर्वोक्तार्थ-सूचनायाह **सेति** ॥ **शब्दतोऽपीति** ॥ क्वचिच्छब्दसारूप्यमप्यधिकमस्तीत्यर्थः । परोक्तपदसङ्घात-रूपवाक्यस्य गौरश्च इत्यादावतिप्रसक्तत्वादाकाङ्क्षादिमत्त्वविशेषणमावश्यकमित्यभिप्रेत्याह **वाक्यमिति** ॥ **उक्तमिति** ॥ आगमलक्षणव्याख्यान इत्यर्थः । इतिकर्तव्यताकाङ्क्षारूपस्य प्रकरणशब्दार्थस्य मीमांसकोक्तस्याकाङ्क्षितृप्रधानभेदात् प्रागाकाङ्क्षाभेदासिद्धेः आकाङ्क्षाभेदरूपप्रकरणान्तरस्य द्वितीयाध्याय-गतप्रकरणान्तराधिकरणोक्तनित्याग्निहोत्रप्रतियोगिककौण्डपायिनाग्निहोत्रगतभेदसाधकत्वानुपपत्त्या अयोगात् स्वाभिमतं प्रकरणपदार्थमाह **कयाचिदिति** ॥ अवान्तरवाक्यार्थपर्यवसितानि एकमहा-वाक्यार्थप्रतिपादनपराणि एकसन्दर्भयुक्तानि प्रकरणमित्यर्थः । अस्मन्मते च नित्याग्निहोत्रवाक्यस्य कौण्डपायिनः सत्रगतेन मासाग्निहोत्रं जुहोतीत्यनेनैकसन्दर्भत्वाभावात् प्रकरणभेदकर्मभेदात् प्राक् सुज्ञानः । असम्बद्धव्यवायस्य तव प्रकृतबुद्धिविच्छेदनत्वेन अनुपादेयसन्धिकसन्निधिलक्षणभेदप्रमाणप्रकरणान्तर-ज्ञापकत्ववत् ममाप्येकसन्दर्भत्वाभावज्ञापकत्वादिति भावः ।

**(टीका)** ताद्दशं प्रकरणजातं स्थानम् । एतेषामनुमानेऽन्तर्भावादुक्तमुपपन्नम् । समाख्याया वाक्यादेरवरत्वेऽपि तदादित्वेन ग्रहणम् । 'श्रुतिर्लिङ्गम् समाख्या च वाक्यं प्रकरणं तथा' इति अविवक्षितक्रमं वाक्यमनुसृत्य कृतम् ।

**(टिप्पणी)** निराकाङ्क्षफलवत्सन्निधिरूपस्य मीमांसकोक्तक्रमस्य स्थानपदार्थत्वे क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षविकृतिसन्निहितेऽङ्गे सत्त्वेऽपि क्रमविनियोज्यत्वेनाभिमतदनुरसीत्यनु-मन्त्रणमन्त्रशेषिभूतोपांशुजपस्य साकाङ्क्षत्वेनाव्यापकत्वादयुक्ततामभिप्रेत्य स्वाभिमतं स्थानपदार्थमाह **ताद्दशमिति** ॥ पूर्वोक्तप्रकरणसमूह एव स्थानमित्यर्थः । एवं स्वाभिमतं समाख्यादिपदार्थमुक्त्वा वाक्यार्थमाह **एतेषामिति** ॥ समाख्याया वाक्याद्यपेक्षया न्यूनबलाया अपि प्रथमग्रहणे को हेतुरित्याशङ्क्य क्रमानादर इति वक्तुमाह **समाख्याया इति** ॥

**(टीका)** उपक्रमादीनां तात्पर्यलिङ्गत्वं, एतेषामर्थ एवेति विशेषज्ञापनार्थो योग-विभागः। उपक्रमादीनां स्वार्थे आगमत्वेऽपि तात्पर्य एव लिङ्गत्वात् नोक्तविरोधः।

**(टिप्पणी)** ननूपक्रमादेरिव समाख्यादेरप्यागमार्थविषयत्वाविशेषे अनुमात्वाविशेषे सहैवान्तर्भावः किं नोक्त इत्याशङ्क्याह **उपक्रमादीनामिति** ॥ **अर्थ एवेत्यनेन** मीमांसकोक्तश्रुत्यनुमापकत्वनिरासोऽपि सूचितः । तथाहि । न तावत् कस्यचिद् वाक्यस्यापरिपूर्णत्वेन लिङ्गादिभिः श्रुतिकल्पनम् । बर्हिर्देवसदनं दामीत्यादेर्मन्त्रवाक्यस्य दर्शपूर्णमासाभ्यामित्यादि विधिवाक्यस्य च पूर्णत्वात् । न चाध्ययनविधिना सामान्यतोऽधीतैरक्षरैर्यथाशक्ति पुरुषस्योपकर्तव्यमिति मन्त्राणां विनियोगे किं मन्त्रैः कार्यमिति विशेषापेक्षायां लिङ्गादिकल्प्यश्रुत्या विशेषसमर्पणेन निराकाङ्क्षतेति वाच्यम् । एवं सत्यध्ययनविध्येक-वाक्यतापत्त्या दर्शादिप्रयोगविध्येकवाक्यत्वाभ्युपगमविरोधात् । नापि शेषत्वादिबोधार्थमेव श्रुतिरनुमेया । बर्हिरित्यादिमन्त्रः लवनशेषः अपवादकाभावे सति तत्प्रकाशनसमर्थत्वादित्यादिप्रकारेण लिङ्गस्यैव लिङ्गादेः शेषत्वादिबोधकत्वात् । नापि स्मृतिवल्लिङ्गादिप्रामाण्याय श्रुतिकल्पनम् । वैदिकमन्त्रस्य भ्रान्त्यादिमूलत्व-शङ्काया अप्यसम्भवेन स्वातन्त्र्येण प्रामाण्यात् मूलानपेक्षणात् । स्मृतितुल्यत्वे मूलिना मूलस्य कृतार्थत्वायोगेन तदर्थशास्त्रानर्थक्यभिया प्रथनादिमन्त्रविनियोजकतया भासमानस्य उरुप्रथस्वेति पुरोडाशं प्रथयतीत्यादेरर्थवादत्वादिवर्णनाऽयोगाच्च । तस्मान्न श्रुत्यनुमानस्य किञ्चित् प्रयोजनम् । श्रुत्यननुमापकत्वेऽपि लिङ्गादीनां बलाबलविवेकः टीकोक्तरीत्या द्रष्टव्यः । ननूपक्रमादेरनुमानत्वे

आगमलक्षणस्यातिव्याप्तिरित्याशङ्क्याह **उपक्रमादीनामिति** ॥ **नोक्तेति** ॥ उक्तमनुमानत्वमात्रमलक्षणातिव्याप्त्यापादकतया लक्षणविरोधीत्यर्थः । प्रमेयविशेषे उभयरूपत्वाविरोधादिति भावः ।

**(टीका)** तर्हि श्रुतिर्लिङ्गमिति समाख्यादीनां लिङ्गात् पृथगुक्तिः कथमित्यत आह—

**(मूलम्) लिङ्गविशेषाः ।**

पूर्ववत् परिहारः । अत्राप्यनुमानान्तर्भावे पूर्वोक्ता युक्तिरनुसन्धेयेति ।

**(टिप्पणी)** ननु श्रुतिर्लिङ्गमित्यत्र वाक्यादेर्लिङ्गाद् भेदेनोक्तेरनुमानत्वाभावोऽवसीयत इत्याशङ्कानिरासार्थत्वेनोत्तरग्रन्थं व्याचष्टे **श्रुतिरिति** ॥ शेषत्वादौ लिङ्गत्वस्य साम्येऽपि लिङ्गपदार्थस्य पक्षनिष्ठत्वं स्फुटं विशेषमादाय पृथगुक्तिरित्यनिर्देशेन वदन् शङ्कापरिहारार्थत्वमुपपादयति **पूर्ववदिति** ॥ अनुमानत्वतदभावकृतविशेषमादायैव पृथगुक्त्युपपत्तेर्न विशेषान्तरकल्पना युक्तेत्याशङ्क्य व्याप्तिबलेनार्थगमकत्वस्य सर्वेष्वपि समानत्वाद् विशेषान्तराभिप्रायैव पृथगुक्तिरिति सूचयन्नन्तर्भावसाधकहेत्वनुक्तेर्मूलस्य न्यूनतापरिहाराय व्याप्तिबलेनार्थगमकपरलिङ्गशब्दसूचितं हेतुमाह **अत्रापीति** ॥

**(टीका)** यदुक्तं निर्दोषं प्रमितं लिङ्गमनुमानमिति । तदयुक्तम् । नारिकेलद्वीपवासिनो धूमदर्शनेऽपि वह्निप्रमानुदयादित्यत आह—

**(मूलम्) व्याप्तिरुपपत्तिमूलम् ।**

**(टीका)** व्याप्तिरिति विषयेण विषयिणः प्रत्ययस्योपलक्षणम् ।

न केवलं प्रमितं लिङ्गमात्रमनुमितिजनकमङ्गीक्रियते । किं नाम । निर्दोषत्वान्तर्गतव्याप्तिप्रमितिपूर्वकमेव । नच तादृशं नानुमितिजनकम् । अविनाभावो व्याप्तिः। सा द्विविधा । अन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्चेति । तत्र साध्येन साधनस्य व्याप्तिरन्वयव्याप्तिः । यथा, 'यो धूमवानसावग्निमान्' इति । साधनाभावेन साध्याभावस्य व्याप्तिर्व्यतिरेकव्याप्तिः । यथा, 'योऽग्निमान्न भवति स धूमवान्न भवति' इति । भूयो भूयो हि धूमं पश्यन् तत्राग्निं पश्यति, अग्न्यभावं पश्यंश्च धूमाभावम् । ततो निश्चिनोति धूमाग्न्योः साहचर्यात् अस्त्यविनाभाव इति । गृहीतव्याप्तिश्च पर्वते धूमं

**पश्यंस्तामनुस्मरति 'यत्सन्निधौ यो दृष्टः स तस्य स्मारकः' इति न्यायात् । स्मृतव्याप्तिश्च व्याप्तं धूमं पर्वते प्रत्यभिजानाति । तेनाग्न्यनुमितिरिति युक्तं लक्षणमिति ।**

### *अनुमानविभागः*

**द्विविधमनुमानम् । स्वार्थं परार्थं चेति । परोपदेशानपेक्षं स्वार्थम् । तदपेक्षं परार्थम् ।**

**(टिप्पणी)** उपपत्तिविशेषा इति पूर्वमुक्तम् । तत्र का उपपत्तिरिति शिष्यजिज्ञासायां सा प्रतिज्ञाहेतु-दृष्टान्तरूपेति मूलम् । तन्नोपपन्नं सर्वोपपत्तेः प्रतिज्ञाहेतुदृष्टान्तरूपत्वाभावात् । अतस्तत्सङ्गमयितुमाह **द्विविधमनुमानं स्वार्थं परार्थमित्यादि** ॥ तथा च परार्थानुमानस्यैव तत् लक्षणमतो नानुपपन्नं मूलमित्यर्थः । ननु स्वार्थं स्वेष्टसाधनं परार्थं परेष्टसाधनमिति ससुखोऽर्थः प्रतीयते स च नोपपद्यते । स्वार्थानुमितेरपि कस्यचिदेवेष्ट-त्वात् परार्थानुमितेरपि वादकथाजन्यायाः स्वेष्टत्वात्, उपेक्षानुमितेरपि सम्भवाच्चेति, तत्रतत्राव्याप्तं लक्षणमत आह **परोपदेशेति** ॥

**(टीका) व्याप्तिमल्लिङ्गबोधकं वाक्यं परोपदेशः ।**

**(टिप्पणी)** कोऽयं परोपदेश इत्याकाङ्क्षायामाह **व्याप्तिमदिति** ॥ यद्यपि दर्शनान्तरे न्यायलक्षण-मन्यथाकृतमस्ति । युक्तं च । तथा हि । न तावद् व्याप्तिमल्लिङ्गबोधकवाक्यत्वम् । उदाहरणन्यायैकदेशे गतत्वात् । नापि पक्षीयसाध्यबोधकताप्रयोजकरूपविशिष्टव्याप्तिमल्लिङ्गबोधकवाक्यत्वम्, उदाहरणस्य तु व्याप्तिविशिष्टलिङ्गमात्रबोधकत्वमिति वाच्यम् । पक्षीयसाध्यबोधकताप्रयोजकरूपविशिष्टलिङ्गबोधक-वाक्यत्वस्यैव सम्यक्त्वे शेषवैयर्थ्यात् । व्याप्तिमत्त्वस्यापि पक्षीयसाध्यबोधकताप्रयोजकरूपत्वात् । न चैवमेवास्तु । वह्निव्याप्यधूमवानयमित्युपनये गतत्वात् । न च ममोपनयो नास्त्येव । आकाङ्क्षानुसारेणानियतावयववादिनस्तव कदाचित् सत्त्वात् । वह्निव्याप्यधूमवानयमित्याप्तवाक्ये न्यायानात्मनि तथापि गतत्वाच्चेति । तस्माद् अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यं न्यायः । अत्र चरमपदेनोपनयान्तचतुरवयवे महावाक्येऽतिव्याप्तिवारणम् । तस्यानुमितिकारण-लिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वेऽपि अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वा-भावात् । निगमनं विनाऽबाधितत्वासत्प्रतिपक्षितत्वाज्ञानेन तज्जन्यपरामर्शस्य चरमकारणत्वाभावात् । प्रयोजकपदं च जनकजनकपरमतो न्यायजन्यशाब्दज्ञानेन मानसज्ञानद्वाराऽनुमितिचरमकारणलिङ्ग-परामर्शजननात्रासम्भवः । शाब्दपदं तु कण्टकोद्धारवाक्येऽतिव्याप्तिवारणाय । तस्यानुमितिचरमकारण-लिङ्गपरामर्शप्रयोजकज्ञानजनकत्वात् । तज्जन्यज्ञानस्यैव योग्यताज्ञानत्वात् । न च शाब्दपददानेऽप्येष

दोषः । शाब्दज्ञानत्वेन जनकत्वस्य विवक्षितत्वात् । कण्टकोद्धारवाक्यजन्यज्ञानस्य तु योग्यताज्ञानत्वेन जनकत्वात् । वाक्यपदं तु कालादावतिव्याप्तिवारणाय । तदपि महावाक्यपरं वाक्यान्तराघटकवाक्यमिति यावत् । अतो न न्यायैकदेशेऽतिव्याप्तिरिति ।

## *अनुमानावयवविमर्शः*

**(टीका) तस्य अवान्तरवाक्यान्यवयवाः । ते च जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयव्युदासप्रतिज्ञाहेतूदाहरणोपनयनिगमनानीति दशेति जरन्नैयायिकाः ।**

**(टिप्पणी)** तथाप्यनुमितिकारणलिङ्गपरामर्शविषयतावच्छेदकावच्छिन्नयावद्रूपविशिष्टलिङ्गबोधकवाक्यत्वं न्यायत्वम् । न च आप्तवाक्येऽतिव्याप्तिः । तस्यापि लक्ष्यत्वात् । न च तस्य न्यायत्वेनाव्यवहारान्न लक्ष्यत्वमिति वाच्यम् । कथाप्रविष्टन्याये प्रयोगप्राचुर्येणाप्तोदीरितन्यायस्यातथात्वात् । वस्तुतस्तु सोऽपि न्याय एव । अस्तु वा कथाप्रविष्टन्यायविशेषस्य तदुक्तमेव लक्षणं, न्यायसामान्यस्य त्विदमेव सम्यगिति । न च उपनये न्यायैकदेशे तथाप्यतिव्याप्तिः । वाक्यान्तराघटकवाक्यपरेण वाक्यपदेनैव निरस्तत्वादिति मन्तव्यम् । अवयवनियमव्यवच्छेदपरतया मूलं योजयिष्यन् कोऽसाववयव इत्याकाङ्क्षायामादाववयवं दर्शयति **तस्येति** ॥ अत्र वाक्यपदं जरन्नैयायिकातिरिक्तमनाभिप्रायेण, तेन वाक्यस्याप्यवयवत्वाभिधानात् । अवयवमुक्त्वा व्यवच्छेद्यमवयवनियममाह **जिज्ञासेति** ॥

अत्र यद्यपि जिज्ञासादीनामवयवत्वं न सम्भवति । तथाहि । तस्यावान्तरवाक्यान्यवयवा इत्यनेनोपदेशावान्तरवाक्यान्यवयवा इत्यर्थः फलितः । उपदेशश्च न व्याप्तिपक्षधर्मतावल्लिङ्गप्रतिपादकवाक्यम् । अत्रैव वाक्येऽतिव्याप्तेः । किन्त्वनुमितिजनकज्ञानविषयतावच्छेदकावच्छिन्नव्याप्तिपक्षधर्मतावल्लिङ्गप्रतिपादकं वाक्यम् । तदवान्तरवाक्यत्वं चावयवत्वम् । न चैतज्जिज्ञासादौ सम्भवति अवाक्यत्वात् । तथापि व्याप्तिपक्षधर्मतावल्लिङ्गप्रतिपादकवाक्यावन्तरवाक्यत्वं तज्जन्यज्ञानजनकज्ञानजनकत्वं वाक्यत्वं वाच्यम् । तत्र च वाक्यत्वं गुरु । न चैवमात्मादावतिव्याप्तिः । तदसाधारणत्वस्याविवक्षितत्वादित्यभिमानः परस्येति ।

ननु संशयस्य न्यायजन्यज्ञानजनकज्ञानजनकत्वं न सम्भवति । अवान्तरवाक्यार्थज्ञानस्यैव तज्जनकत्वात् । नच तद्वारैव तत्प्रयोजकत्वमिति वाच्यम् । पक्षपरिग्रहादिना सन्देहस्य पूर्वमेव नष्टत्वात् । प्रतिज्ञादिवाक्यजन्यज्ञानेऽप्यहेतुत्वात् । अथ सन्देहः कस्य । न वादिनोः । तयोर्विरुद्धनिश्चयवत्त्वात् । न च विप्रतिपत्तिजन्मा निश्चितेऽपि विषये सन्देह इति वाच्यम् ।

विप्रतिपत्तेर्विरुद्धकोटिद्वयोपस्थापकतयैव संशयजनकत्वम् । कोटिद्वयोपस्थितिश्चासंसर्गाग्रहसहिता सन्देहजनिका । न च वादिनोरसंसर्गाग्रहः । संसर्गग्रहसत्त्वात् । न च वादिनोराहार्यः सन्देहोऽस्तु तस्य निश्चितेऽपि सम्भवादिति वाच्यम् । आहार्यसन्देहस्य प्रमाणानिवर्त्यत्वेन प्रमाणप्रवृत्त्यप्रयोजकत्वात् । नापि मध्यस्थस्य । तस्यापि नैयायिकमीमांसकान्यतरत्वेन तत्तन्मतसिद्धनिश्चयवत्त्वात् । तस्माद् विरुद्धवाक्याभ्यां विरुद्धकोटिद्वयोपस्थितिद्वाराऽनुविधेयस्य सन्देहो वक्तव्यः । स च पक्षपरिग्रहादिना कथं नश्यतु । वादिनोरेव पक्षपरिग्रहादिति चेत् । न । अनुविधेयस्यापि वाद्युच्चरितवाक्यश्रवणादिना सन्देहापगमात् । अत एव जिज्ञासाया अप्यवयवत्वं न सम्भवति । तस्या अपि प्रतिज्ञादि-वाक्यजन्यज्ञानद्वारैवोपयोगो वक्तव्यः । स च न सम्भवति । सन्देहजन्यायास्तस्याश्च सन्देहनिवृत्त्या निवृत्तत्वात् । किञ्च सन्देहस्य जिज्ञासाद्वारैवाङ्गत्वात् तया गतार्थत्वेन कथं पृथगुपन्यासः ।

अपि च शक्यप्राप्तिः परवाक्यार्थावधारणसामर्थ्यं वा स्ववाक्यप्रयोगानुकूलज्ञानवत्त्वं वा । तयोश्च न न्यायेऽसाधारण्यम् । वाक्यार्थज्ञानमात्रहेतुत्वात् । प्रयोगमात्रहेतुत्वाच्च । अपि चैवं संशयव्युदासव-जिज्ञासाव्युदासोऽप्यवयवः स्यादिति । मैवम् । संशयपदेन संशययोग्यताया एवावयवत्वोपन्यासात् । सा च साधकबाधकमानाभावः । तस्य च प्रमाणप्रवृत्तिपर्यन्तमवस्थानान्नोक्तदोषः । संशयव्युदास-पदेनापि संशययोग्यताव्युदास एवाङ्गत्वेनोक्तः । स च साधकमानाभावाभावत्वेन साधकमानमेव पर्यवस्यति । जिज्ञासापदेनापि जिज्ञासायोग्यताया एव विवक्षितत्वात् । सा च स्वविषयासिद्ध्यनुत्पादकाल एव । अत एव न जिज्ञासाव्युदासोऽवयवत्वेनोक्तः । तस्य सिद्ध्युत्पादकालरूपतया सिद्धिसमसमयभाविनः प्रमाणानङ्गत्वात् । यच्चोक्तं संशयस्य जिज्ञासाद्वारैवाङ्गत्वमिति तथागतार्थः स इति पृथगुपन्यासः किमर्थ इति । तदनवबोधनिबन्धनम् । उभययोग्यतयोः परस्परानपेक्षयोरेव अङ्गत्वात् । यदपि चोक्तं शक्यप्राप्तेः न अवयवत्वमिति । तदपि न । शक्यप्राप्तेः प्रयोगानुकूलज्ञानवत्त्वरूपायाः प्रयोगमात्रहेतुभूताया अपि न्यायाङ्गत्वेन न्यायावयव-त्वोपन्यासात् । अन्यथा प्रतिज्ञादेरपि न्यायावयवत्वं न स्यात् । महावाक्येऽवान्तरवाक्यस्य सामान्यत एवाङ्गत्वात् सामान्याङ्गस्यापि विशेषेऽङ्गत्वाभिधानमिति यदि तदा प्रकृतेऽपि समानमिति जरन्नैयायिकजयन्तप्रभृतय इत्यर्थः ।

**(टीका) प्रतिज्ञादयः पञ्चैवेति नवीनाः।**

**(टिप्पणी) प्रतिज्ञादयः पञ्चैवेति नवीना इति ॥** तेषामयमाशयः । किमिदमवयवत्वं न्यायप्रयोजकत्वं वा न्यायघटकत्वं वा । नाद्यः । अदृष्टकालादावतिव्याप्तेः । न चासाधारणप्रयोजकत्वम् ।

असिद्धेः । संशयादेर्न्यायभिन्नेऽपि प्रयोजकत्वात् । एवं प्रतिज्ञादेरपि । द्वितीये तु कथं तेषामवयत्वम् । अशब्दत्वात् । तस्मान्न्यायावयवत्वमित्यस्य न्यायावान्तरवाक्यत्वमित्यर्थो वक्तव्यः । तच्च प्रतिज्ञादेरेवेति तत्त्वम् । अत एव प्रतिज्ञादीनामप्यवयवत्वं न स्यात् साधारणत्वादिति प्रत्युक्तम् । एतादृशावयवत्वस्य प्रतिज्ञादेरेव सत्त्वात् । एतदभिप्रायेणैव ग्रन्थकृदग्रे वक्ष्यति । किञ्च जिज्ञासादयः शब्दा एव न भवन्ति कुतो वाक्यावयवा इति ।

**(टीका) प्रतिज्ञाहेतूदाहरणानि उदाहरणोपनयनिगमनानि त्रय एवेति मीमांसकाः । उदाहरणोपनयौ द्वावेवेति बौद्धाः ।**

**(टिप्पणी) प्रतिज्ञाहेतूदाहरणानीति** ॥ अत्रोपनयकृत्यस्य पक्षसम्बन्धप्रदर्शनस्य हेत्ववयवेनैव करणान्नोपनयः । तन्मते धूमवत्त्वादिति हेत्ववयवप्रयोगात् । प्रतिज्ञाहेत्ववयवाभ्यां च निगमनस्य गतार्थत्वात् । ननु प्रतिज्ञया कथं निगमनस्य गतार्थत्वम् । निगमनस्य ह्यनुवादतया प्रयोजनजिज्ञासायां व्याप्तिविशिष्टपक्षधर्मताप्रतिपादनस्यावयवान्तरादेव कृतत्वेन परिशेषादबाधितार्थासत्प्रतिपक्षितत्वार्थः कल्प्यते । अवयवान्तरात् तदलाभात् । प्रतिज्ञायाश्च साध्यमात्रसमर्पकत्वेनोपयोगः । तथाच अनयोर्भिन्नभिन्नप्रयोजनकत्वेन कथमेकेनापरस्यापवाद इति चेत् । अबाधितत्वासत्प्रतिपक्षितत्वस्य स्वरूपसत एव प्रतिबन्धकाभावतया कारणत्वेन तज्ज्ञानस्याहेतुतया तदुभयबोधकस्य निगमनस्या-प्रयोजकत्वादिति भावः ।

**उदाहरणोपनयनिगमनानि चेति** ॥ प्रतिज्ञाहेत्ववयवयोः यत् कृत्यं तदुपनयेन निगमनेनैव च कृतमिति भावः । **उदाहरणोपनयौ द्वावेवेति** ॥ प्रतिज्ञाकृत्यं विप्रतिपत्त्यैव कृतमिति भावः । तत्रावयवे तृतीयपक्षव्यतिरिक्तेति स्वरूपकीर्तनम् । तत्रैव नियमस्य सत्त्वादिति ।

### *अनुमानस्वरूपम्*

**(टीका) तत्र तृतीयपक्षव्यतिरिक्तनियमपक्षास्तावन्नोपपन्ना इत्याह—**

**(मूलम्) सा प्रतिज्ञाहेतुदृष्टान्तरूपा ।**

**सेत्युपपत्तिप्रतिपादकं वाक्यमुपलक्ष्यते । दृष्टान्तेति तत्प्रतिपादकमुदाहरणम् ।**

**(टिप्पणी)** प्रतिज्ञाहेतुदृष्टान्तपदानामवयवपराणामुपपत्तिवाचकत्वाभावात् सेत्युपपत्तिप्रत्यवमर्शकं पदं अन्यथा व्याचष्टे **उपपत्तिप्रतिपादकं वाक्यमिति** ॥ ननु दृष्टान्तस्योपपत्तिप्रतिपादकवाक्यात्मकत्वं न

सम्भवतीति दृष्टान्तपदमुदाहरणावयवपरतया व्याचष्टे **दृष्टान्त इतीति** ॥ **तत्प्रतिपादकमिति** ॥ यद्यपि दृष्टान्तप्रतिपादकवाक्यत्वं नोदाहरणत्वम् । उदासीने महानसवदिति वाक्ये गतत्वात् । न च न्यायप्रविष्टत्वे सतीति विशेषणम् । महानसवदित्युदाहरणैकदेशे गतत्वात् । नापि दृष्टान्तप्रतिपादकावयवत्वमुदाहरणत्वम् । दृष्टान्तस्य सामयिकत्वेनासमयदशायामव्याप्तेः । तथापि साधनावच्छेदकावच्छिन्नवति नियतसाध्यतावच्छेदकावच्छिन्नसम्बन्धविधायकावयवत्वमुदाहरणत्वमित्यत्र तात्पर्यम् ।

*प्रतिज्ञालक्षणम्*

**(टीका) प्रतिपादनाय पक्षवचनं प्रतिज्ञा । यथा 'पर्वतोऽग्निमान्' इति । साधनत्वाभिव्यञ्जकविभक्त्यन्तं लिङ्गवचनं हेतुः । यथा 'धूमवत्वात्' इति । व्याप्तिदर्शनपुरस्सरं सम्यग्दृष्टान्ताभिधानमुदाहरणम् ।**

**(टिप्पणी)** पूर्वोक्तानुपपत्त्या प्रतिज्ञापदमन्यथा व्याचष्टे **पक्षवचनमिति** ॥ पक्षतावच्छेदकावच्छेदेन साध्याभिधायकावयवत्वमिति भावः । अत एव तथैव स्वरूपं दर्शयति **यथेति** ॥ पूर्वयैवानुपपत्त्या हेतुपदमपि शब्दपरतया व्याचष्टे **साधनत्वाभिव्यञ्जकेति** ॥ साधनत्वाभिव्यञ्जकविभक्तिमन्न्यायावयवत्वमित्यर्थः । तेनोदासीने तस्मादिति निगमनैकदेशे च नातिव्याप्तिः । **हेतुरिति** ॥ हेत्ववयव इत्यर्थः । प्रतिपादितमपि विशेषणान्तरदानायाग्रिमग्रन्थोत्थापनाय च पुनः प्रतिपादयति **व्याप्तिप्रदर्शनपुरस्सरमिति** ॥ यथा चैतत् तथोक्तमधस्तात् । **सम्यगिति** ॥ व्याप्तिग्रहविषयतावच्छेदकावच्छेदेनेत्यर्थः । तेन पक्षस्यापि व्याप्तिग्रहविषयतावच्छेदकावच्छेदेन दृष्टान्तत्वमविरुद्धमिति भावः ।

*दृष्टान्तविभागः*

**(टीका) व्याप्तिग्रहणस्थलं दृष्टान्तः । स द्विविधः । साधर्म्यदृष्टान्तो वैधर्म्यदृष्टान्तश्चेत्येके । अन्वयव्याप्तिग्रहणस्थलं साधर्म्यदृष्टान्तः । व्यतिरेकव्याप्तिग्रहणस्थलं वैधर्म्यदृष्टान्तः। अत एवोदाहरणमप्येवं द्विविधम् । तत्र साधर्म्योदाहरणं यथा 'यो धूमवानसावग्निमान् यथा महानसः' इति । वैधर्म्योदाहरणं यथा 'योऽग्निमान्न भवति स धूमवान्न भवति यथा ह्रदः' इति । एतैस्त्रिभिरेवावयवैरुपपत्तेर्बोधयितुं शक्यत्वान्न तदन्नावयवत्वादिनियमो युक्तः ।**

**(टिप्पणी) व्याप्तिग्रहणस्थलमिति** ॥ व्यभिचारज्ञानविरोधिव्याप्तिग्रहणस्थलमित्यर्थः । तेन न व्यतिरेकदृष्टान्ताव्याप्तिः । यद्वा व्यतिरेकसहचारेणाप्यन्वयव्याप्तिरेव गृह्यत इति तस्यालक्ष्यत्वान्नाव्याप्तिरिति

भावः । एक इत्यस्वरसोद्भावनम् । तद्वीजं पूर्वोक्तयुक्त्या वैधर्म्यदृष्टान्तस्यैकीकरणाद् व्याप्तिग्रहस्थलत्वाभाव एवेति । **योऽग्निमान्न भवतीति** स न धूमवानिति शेषः । **त्रिभिरिति** ॥ न चावयवत्रयेण पक्षधर्मता न प्रदर्शितेति वाच्यम् । धूमवत्त्वादिति हेत्ववयवेनैव प्रदर्शितत्वादिति भावः । **उपपत्तेरिति** ॥ व्याप्तिविशिष्टपक्षधर्मलिङ्गस्येत्यर्थः ।

**(टीका) अथवा दृष्टान्तपदेन तद्वचनमात्रोपलक्षणेनेदं पक्षान्तरम् । उपलक्षणं चैतत् । उदाहरणोपनयनिगमनैरुदाहरणोपनयाभ्यां वा शक्यते बोधयितुम् । दृष्टान्तोपमानेन लिङ्गस्य पक्षे उपसंहारः उपनयः । सोप्युदाहरणानुसारेण द्विविध इति । 'तथा चायं धूमवान् पर्वतः' इति साधर्म्योपनयः । 'न तथाऽयं निर्धूमः पर्वतः' इति वैधर्म्योपनयः ।**

**(टिप्पणी)** उपपत्तिबोधकवाक्यत्वं न्यायत्वम् । उपपत्तिश्च व्याप्तिविशिष्टपक्षधर्मो हेतुः । तत्प्रतिपादनं चोदाहरणोपनयाभ्यामपि सम्भवतीति तावपि न्याय इत्याह **अथवेति** ॥ दृष्टान्तपदेन सा प्रतिज्ञाहेतुदृष्टान्तरूपेत्यत्रतद्वाक्यस्थेन । तद्वचनमात्रोपलक्षणेन उपपत्तिप्रतिपादकवचनमात्रोपलक्षणेन । तथा च सा प्रतिज्ञाहेतुदृष्टान्तरूपेत्युपलक्षणम् । उपपत्तिप्रतिपादकवाक्यमात्रं न्याय इति मूलाभिप्रायो द्रष्टव्य इति भावः । एतदेव प्रतिपादयति **उपपत्तिः शक्यते बोधयितुमिति** ॥ **दृष्टान्तोपमानेन** दृष्टान्तसादृश्येन । **पक्ष इति** । दृष्टान्तसादृश्येन लिङ्गविशिष्टपक्षबोधकावयवत्वमित्यर्थः । वस्तुतस्तु दृष्टान्तोपमानेनेति स्वरूपकथनम् । लक्षणं तु लिङ्गविशिष्टपक्षबोधकावयवत्वमित्येव । अवयवान्तरस्य लिङ्गविशिष्टपक्षबोधकत्वाभावादिति भावः ।

**(टीका) हेतुपुरस्सरं पक्षे साध्योपसंहारो निगमनम् । यथा 'तस्मात् पर्वतोऽग्निमानेव' इति । किञ्च जिज्ञासादयः शब्दा एव न भवन्ति । कुतो वाक्यावयवाः । कुतस्तरां तन्नियमः । उपनयनिगमनयोः प्रतिज्ञाहेतुभ्यां गतार्थत्वाच्चेति ।**

**(टिप्पणी)** [1]**केचिदिति** ॥ अत्र पूर्ववदस्वरसो बोध्यः । केचिन्मत एतद् द्वैविध्यं दर्शयति **तत्रेति** ॥

**(टिप्पणी)** उदाहरणोपनयनिगमनानि वेति मते किमिदं निगमनमित्याकाङ्क्षायामाह **हेतुपुरस्सरमिति** ॥ एतच्च वह्निमानित्येकदेशेऽतिव्याप्तिवारणाय । हेतुमत्त्वपुरस्कारेण साध्यविशिष्टपक्षबोधकावयवत्वमित्यर्थः । एतदेव दर्शयति **यथेति** ॥ एवकारस्तु मीमांसकमताभिप्रायेण ।

१. अस्य वाक्यस्य मूलं नोपलब्धम् ।

जरन्नैयायिकमते दूषणमाह **किञ्चेति** ॥ नवीनमतं दूषयति **उपनयनिगमनयोरिति** ॥ हेत्ववयवेनैव पक्षधर्मताप्रदर्शनादिति भावः ।

**(टीका) त्र्यवयवादिनियमोऽप्यनुपपन्न इति भावेनाह—**

**(मूलम्) हेतुगर्भा प्रतिज्ञा केवलाऽपि ।**

उपपत्तिज्ञापिकेति शेषः । 'धूमवान् पर्वतोऽग्निमान्' इति हेतुगर्भा प्रतिज्ञा अवयवान्तरं विहायोपपत्तिज्ञापिका भवतीति न कोऽपि नियमपक्षो युज्यते । तावन्मात्रेण उपपत्तेर्बोधे जातेऽप्यवयवान्तरं वदत आधिक्यप्रसङ्गात् ।

**(टिप्पणी)** ननु हेतुगर्भा प्रतिज्ञा उदाहरणमेव तस्य च न्यायत्वं पूर्वमुक्तमेवेत्यत आह **केवलापीति** ॥ पूर्वमुपनयसहितस्य तस्य न्यायत्वाभिधानान्न पौनरुक्त्यमिति भावः । न्यायत्वे बीजमाह **उपपत्तिज्ञापिकेति** ॥ यतः केवलाप्युपपत्तिज्ञापिकाऽतः सैव न्याय इति भावः । ननु प्रतिज्ञाया हेतुगर्भत्वं बाधितमत आह **धूमवान् पर्वत इति** ॥ **तावन्मात्रेणैवेति** ॥ यद्यप्युपपत्तिसामान्यलक्षणम् अनुमितिजनकज्ञानविषयतावच्छेदकाव-च्छिन्नयावद्रूपविशिष्टलिङ्गबोधकवाक्यत्वम् । तच्च प्रकृते नास्ति । तथापि यावत्पदं गुरु तद्रहितलक्षणमस्त्येवेति मन्तव्यम् । एवमग्रिमपक्षेऽपि द्रष्टव्यम् । **आधिक्यप्रसङ्गादिति** ॥ अनाकाङ्क्षिताभिधानादिति भावः ।

**(टीका)** न चैवं त्र्यवयवाभ्युपगमे व्याघातः । यस्यैतावता न बोधस्तं प्रति तदभिधानस्येष्टत्वात् । विचित्रबुद्धयो हि पुरुषा इति । इतोऽपि न नियमपक्षो युज्यत इत्याह—

**(मूलम्) सिद्धौ प्रतिज्ञायां हेतुमात्रं च ।**

**(टीका)** पर्वतादग्निमानय इति नियुक्तः कश्चिद् ब्रूते 'नाग्निमान् पर्वत' इति । अन्यस्तु 'अग्निमान्' इति । एवं विवादेनैव प्रतिज्ञासिद्धौ कुतोऽग्निमानिति पृष्टो यदा 'धूमवत्वात्' इति ब्रूयात्तदाऽपि भवत्येवोपपत्तिज्ञानमिति नावयवनियमो युक्त इति ।

**(टिप्पणी)** **इष्टत्वादिति** ॥ आकाङ्क्षितत्वेनाधिक्यप्रसङ्गाभावादिति भावः। आकाङ्क्षामेव प्रतिपाद-यति **विचित्रबुद्धय इति** ॥ पक्षान्तरमवतारयति इतोऽपीति ॥ **सिद्धौ प्रतिज्ञायां हेतुमात्रं चेति** ॥ अत्र

प्रतिज्ञायाः सिद्धौ हेतुमात्रं हेत्ववयवमात्रम् उपपत्तिज्ञापकमित्यन्वयः । प्रतिज्ञासिद्धिमुपपादयति **पर्वतादग्निमानयेत्यादिना** ॥

**(टीका)** इतोऽपि न युक्त इत्याह—

**(मूलम्) दृष्टान्तः सप्रतिज्ञो हेतुगर्भः**

अत्र दृष्टान्त इति तद्वचनोपलक्षणम् । 'धूमवन्महानसवत् पर्वतोऽग्निमान्' इति हेतगुगर्भेण सप्रतिज्ञेन दृष्टान्तवचनमात्रेणोपपत्तिज्ञानसम्भवात् । श्रोत्राकाङ्क्षानुसारेणैव अवयवकल्पना युक्ता न तु तन्नियतिरिति ।

**(टिप्पणी)** पुनः पक्षान्तरमवतारयति **इतोऽपि न युक्त इति** ॥ अत्र यद्यपि दृष्टान्तः सप्रतिज्ञाहेतुगर्भ इत्यनेन प्रतिज्ञाहेतूदाहरणात्मकत्वमुपपत्तेर्यथाश्रुतोऽर्थः । तथापि स पूर्वमुक्त एवेत्यन्यथा व्याचष्टे **अत्र दृष्टान्त इत्यादिना** ॥ ननु कदाचिद् व्याप्तिः कदाचिद् पक्षधर्मता कदाचिन्नोभयमपीति पारिभाषिकं न्यायत्वमत आह **आकाङ्क्षानुसारेणैवेति** ॥ अनाकाङ्क्षिताभिधानस्य तवापि वारणीयत्वादिति भावः ।

**(टीका)** निर्दोषोपपत्तिरनुमेत्युक्तम् । को दोष उपपत्तेः सम्भवति । द्विविध उपपत्तिदोषः । साक्षात् वाचनिकश्चेति । यस्तत्रोपपत्तेरेव साधनदूषणाक्षमत्वापादकः स साक्षादुपपत्तिदोषः ।

**(टिप्पणी)** उपपत्तिदोषौ विरोधासङ्गती इति मूलं विभक्तविभागो न, उपपत्तिदोषसामान्यविभाग इति वक्तुं भूमिमारचयति । **निर्दोषोपपत्तिरनुमेत्युक्तम्** । कस्तर्ह्युपपत्तिदोषसामान्यविभाग इत्याकाङ्क्षायामाह **द्विविध इति** ॥ विधाद्वयं दर्शयति **साक्षादित्यादिना** ॥ ननु साक्षादित्यस्य साक्षात्सम्बन्धेनेत्यर्थः प्रतीयते स च न सम्भवति बाधसत्प्रतिपक्षयोरव्याप्तेः । तयोः परम्परासम्बन्धेनैव लिङ्गवृत्तित्वात् । साध्याभावप्रमाया विरोधिव्याप्त्यादिमल्लिङ्गस्य वा साक्षात् प्रतिबध्यलिङ्गवृत्तित्वाभावात् । न च ज्ञानमेव तयोः प्रतिबध्यलिङ्गेन साक्षात् सम्बन्ध इति वाच्यम् । वाचनिकातिव्याप्तेः । वाचनिकस्यापि वैज्ञानिकेन सम्बन्धेन साक्षात् लिङ्गवृत्तित्वात् । तस्मात् तद्भिन्नसाक्षात्सम्बन्धेनेति वक्तव्यम् । तथा चाव्याप्तिरेवेत्यत आह **यस्तत्रेति** ॥ साध्यासाधकत्वबाधकतावच्छेदकधर्मवत्त्वमित्यर्थः । साध्यं च क्वचिद् दूषणं क्वचिदन्यदित्यन्यदेतत् । मतुबर्थश्चासाधकत्वव्याप्तिघटकीभूतसम्बन्धमात्रमतो नोक्ताव्याप्त्यतिव्याप्ती इत्यवधेयम् ।

*उपपत्तिदोषनिरूपणम्*

**(टीका)** तं विभज्य दर्शयति—

**(मूलम्) उपपत्तिदोषौ विरोधासङ्गती ।**

उपपत्तिदोषो द्विविधः । विरोधोऽसङ्गतिश्चेति । अन्वययोग्यताविरहो विरोधः । आकाङ्क्षाभावोऽसङ्गतिः । इमौ चार्थवचनयोरपि सम्भवतः । अर्थासाधुत्वे वचनस्यापि तथात्वादिति ।

**(टिप्पणी)** तदेवं विभक्तस्यायं विभाग इत्याह तं **विभज्येति** ॥ साक्षादुपपत्तिदोषमित्यर्थः । **उपपत्तिदोषाविति** ॥ साक्षादुपपत्तिदोषावित्यर्थः । **अन्वययोग्यतेति** ॥ अनुमितिप्रतिबन्धकज्ञानविषयार्थोपस्थापकत्वमित्यर्थः । **आकाङ्क्षेति** ॥ आकाङ्क्षाविषयार्थानुपस्थापकत्वमित्यर्थः । **इमौ चेति** ॥ नचैवं विभागव्याघात उभयस्योभयत्र दोषत्वादिति वाच्यम् । साक्षात्परम्पराकृतविशेषेण विभागकरणादिति भावः । **वाक्यस्यापीति** ॥ पर्वतो वह्निमान् ह्रदत्वात् प्रमेयत्वादित्यादिवाक्यस्येत्यर्थः । **तथात्वादिति** ॥ असाधुत्वादित्यर्थः ।

*वचनदोषविभागः*

**(टीका)** वचनस्यैवासाधुत्वापादको वाचनिकदोषः । तं विभज्य दर्शयति—

**(मूलम्) न्यूनाधिके वाचनिके ।**

**(टीका)** द्विविधो वाचनिकदोषः । न्यूनमधिकं चेति । अपेक्षितासम्पूर्तिर्न्यूनम् । अपेक्षिताधिकमधिकम् ।

**(टिप्पणी)** वाचनिकं लक्षयति **वचनस्यैवेति** ॥ साक्षादिति शेषः । अतो नोत्तरग्रन्थविरोधः । **वाचनिको दोष इति** ॥ यद्यपि निग्राहकत्वं दोषत्वम् । निग्रहश्चाप्रतिपत्तिविप्रतिपत्तिलक्षणो वादिन एव ननूपपत्तिवचनयोः । तथाप्युपपत्तिनिष्ठतया निग्राहका उपपत्तिदोषा वचननिष्ठतया निग्राहको वाचनिको दोष इत्यभिप्रायो द्रष्टव्यः । **अपेक्षाऽसम्पूर्तिरिति** ॥ आकाङ्क्षितानभिधानम् आकाङ्क्षितासमभिव्याहृतमिति वेति भावः । **अपेक्षितादधिकमिति** ॥ अनाकाङ्क्षिताभिधानमनाकाङ्क्षितसमभिव्याहृतमिति वेति भावः ।

(टीका) न्यूनाधिके च परार्थप्रयोग एव सम्भवतः। वचनद्वारेणैवोपपत्तेरपि दूषिके स्यातामिति।

(टिप्पणी) नन्वेवं पर्वतो वह्निमान् धूमवत्त्वादित्युक्त्वा विरतस्यास्याप्यपि निग्रहः स्यादपेक्षितानभिधानादित्यत आह **न्यूनाधिके चेति** ॥ **परार्थप्रयोग एव**। वादभिन्नकथायामित्यर्थः। ननु वचनस्य दुष्टतया वादिनिग्रहेऽप्युपपत्तेरदुष्टत्वादनुमितिः स्यादेवेत्यत आह **वचनद्वारेणेति** ॥ सकलसम्प्रदायमवमत्य कथमनेनैवं प्रयोगः कृत इति व्याकुलीभावेन तद्वचसाऽस्यादिज्ञानाभावादिति भावः।

(टीका) न केवलमुपपत्तिदोषाणामेव विरोधादिभिः सङ्ग्रहः। किं नाम। परनिरूपिताशेषनिग्रहस्थानान्यपि विरोधादिष्वेवान्तर्भवन्तीत्याह—

(मूलम्) संवादानुक्तियुता निग्रहाः।

निग्रहाः निग्रहस्थानानि। कथायाम् अखण्डिताहङ्कारेण परेण परस्याहङ्कारखण्डनं पराजयो निग्रहस्तन्निमित्तं तत्वाप्रतिपत्तिलिङ्गं वा निग्रहस्थानम्।

(टिप्पणी) ननु दर्शनान्तरे द्वाविंशति निग्रहस्थानान्युक्तानि। त्वया च विभक्तविभागेन चत्वार्येवोक्तान्यतो विभागानुपपत्तिरित्यत आह **न केवलमिति** ॥ **संवादानुक्तीति** ॥ संवादोऽधिकत्वमनुक्तिर्न्यूनत्वमित्यर्थः। तथा च हेत्वाभासानां विरोधासङ्गतिभ्यामन्येषां च न्यूनाधिकाभ्यां सङ्ग्रह इति भावः। प्रसङ्गान्निग्रहस्थानत्वमपि दर्शयति **निग्रहस्थानानीति** ॥ अहङ्कारखण्डननिमित्तत्वं युद्धादावपि गतमत आह **कथायामिति** ॥ तथाच कथायामहङ्कारखण्डनं पराजयस्तन्निमित्तत्वमेव निग्रहस्थानत्वम्। अखण्डिताहङ्कारेणेत्यादि तु स्वरूपनिर्वचनमात्रमित्यवधेयम्। नन्वहङ्कारखण्डनं न पराजयः पराजितस्याप्यहन्त्वानपायादित्यत आह **तत्त्वाप्रतिपत्तिलिङ्गं वेति** ॥

### *निग्रहस्थानानि*

(टीका) सा द्विविधा अप्रतिपत्तिर्विप्रतिपत्तिश्चेति। परोक्तस्ववक्तव्ययोरज्ञानम् अप्रतिपत्तिः। तयोरेव विपरीतज्ञानम् विप्रतिपत्तिः। तानि च—

| | | |
|---|---|---|
| प्रतिज्ञाहानिः | प्रतिज्ञान्तरम् | प्रतिज्ञाविरोधः |
| प्रतिज्ञासंन्यासः | हेत्वन्तरम् | अर्थान्तरम् |

| | | |
|---|---|---|
| **निरर्थकम्** | **अविज्ञातार्थकम्** | **अपार्थकम्** |
| **अप्राप्तकालम्** | **न्यूनम्** | **अधिकम्** |
| **पुनरुक्तम्** | **अननुभाषणम्** | **अज्ञानम्** |
| **अप्रतिभा** | **विक्षेपः** | **मतानुज्ञा** |
| **पर्यनुयोज्योपेक्षणम्** | **निरनुयोज्यानुयोगः** | **अपसिद्धान्तः** |
| **हेत्वाभासाः** | **उदाहरणाऽभासाः** | **तर्कपराहतिश्चेति।** |

**(टिप्पणी)** ननु विरुद्धप्रतिपत्तिलिङ्गनिग्रहस्थानाव्यापकमिदमत आह **सा द्विविधेति** ॥ तत्त्वाप्रतिपत्तिरित्यर्थः । **परोक्तेति** ॥ यद्यप्येतदकथायामपि तत्त्वाप्रतिपत्तिलिङ्गभूते गतं तथापि कथारूपवाक्यार्थाज्ञानमप्रतिपत्तिः कथाभूतवाक्यार्थविपरीतज्ञानं विप्रतिपत्तिस्तदन्यतरलिङ्गत्वं निग्रहस्थानत्वमिति मन्तव्यम् । न चैवमपि झटिति संवरणेऽनिव्यापकं तत्रापि कञ्चित् कालं कथार्थाज्ञानादिति वाच्यम् । तदपेक्षयाऽधिककालस्थायिनोऽज्ञानस्य तथात्वादिति भावः । तत्त्वाप्रतिपत्तिलिङ्गतावच्छेदकेन रूपेण दर्शयति **तानीति** ॥

**(टीका) एतानि च कथाबाह्यानि कथायामपस्मारोन्मादादिदशापन्नानि झटिति संवरणेन तिरोहितोद्भावनावसराणि पुरःस्फूर्तिकानधिकृतोद्भावितानि न निग्रहस्थानानि। तात्कालिकातत्वज्ञानलिङ्गत्वेऽपि प्रतियोग्यपेक्षया तदभावात् इति।**

**(टिप्पणी)** अत्र निग्राहकत्वे परस्परनैरपेक्ष्यसूचनायासमासः । नन्वेवं ह्रदोऽग्निमानित्युक्ते बाधे च उद्भाविते पर्वतोऽग्निमानिति ब्रुवन्नाप्तोऽपि निगृहीतः स्यादित्यत आह **कथाबाह्यानीति** ॥ कथायामेव निग्रहादिति भावः । ननु कथायामप्यपस्मारोन्माददशापन्नानि न निग्राहकानीति तत्रातिव्यापकमत आह **अपस्मारोन्मादादिदशापन्नानीति** ॥ पुरःस्फूर्तिकोद्भावितानि तदीयभावावधारणात् प्रागेवोद्भावितानीत्यर्थः । अनधिकृतोद्भावितानि वादिभिन्नोद्भावितानि । इदं तु पर्यनुयोज्योपेक्षणं तिरस्कृत्य । तत्र मध्यस्थस्यैवाधिकारादिति मन्तव्यम् । एतानि न निग्रहस्थानानीत्यन्वयः । कुतो न निग्रहस्थानानीत्यत आह **तात्कालिकेति** ॥ वादिद्वयस्य परस्परावधिकतारतम्यस्यैव विचारणीयत्वादिति भावः । **तदभावादिति** ॥ अतत्वज्ञानाभावादित्यर्थः ।

*प्रतिज्ञाहानिलक्षणम्*

**(टीका) तत्र येन यत् यथा साध्यत्वादिना निर्दिष्टं तस्य तथा निर्वाहादर्शनेन पुनस्त्यागः प्रतिज्ञाहानिः।**

**(टिप्पणी)** प्रतिज्ञाहानिं लक्षयति **तत्रेति** ॥ पूर्वोद्दिष्टेषु मध्य इत्यर्थः । संवरणानवसरे कथायां वैशिष्ट्य स्वीकृतोक्तत्याग इत्यर्थः । अत्र यद् यथा साध्यत्वादिना निर्दिष्टमित्यनेन विशिष्योक्तत्वं लभ्यते । तत्प्रयोजनं त्वपसिद्धान्तव्यवच्छेदः । तत्र नैयायिकोऽहमित्यादिना सामान्यत एवोक्तिसत्त्वात् तथा निर्वाहादर्शनेनेत्यादिना संवरणानवसर इत्यस्य लाभः । तत्प्रयोजनं तु झटिति संवरणव्यवच्छेद एव । भिन्नाभिन्नकर्तृकस्वीकारत्यागस्थले न प्रतिज्ञाहानिरित्यत उक्तम् **पुनस्तेनेति** ॥ कथायामिति तु सामान्यलक्षणस्थमनुवर्तनीयमित्युदासीनप्रतिज्ञाहानिव्यवच्छेद इति सर्वं सुस्थम् ।

**(टीका) द्विधा चैषा। साधनहानिर्दूषणहानिश्चेति। तत्राद्या द्वादशविधा। पक्षे तावत् साध्यसाधनधर्मितद्विशेषणहानिभेदात् षट्प्रकारा। एवं दृष्टान्तेऽपीति।**

**(टिप्पणी) दूषणहानिश्चेति** ॥ इदं तु दूषणं साधनत्वेन न निर्दिष्टं यदि तदा तत्वेन निर्देशदशायां तु साधनहानिरेव सापीति न द्वैविध्यमित्यवधेयम् । **द्वादशविधेति** ॥ यद्यप्यत्र तत्त्वबोधादौ षड्विधत्वमेवास्या उक्तं पक्षसाध्यसाधनदृष्टान्ततद्विशेषणभेदात् । तथापि तद्विशेषणभेदादित्यत्र तत्पदेन पक्षविशेषणसाध्यविशेषणहेतुविशेषण इत्येव धर्मपरामर्शो वाच्यः । तत्वस्यैकस्याभावात् । तथा च धर्महानिरपीत्यर्थः । न चैवमपि द्वादशविधत्वासम्भवः । साध्यहेत्वोः पक्षीयत्वदृष्टान्तीयत्वभेदविवक्षया तदभिधानादिति ।

**(टीका) द्वितीयाऽपि द्विविधा। स्वरूपतो विशेषतश्चेति। सर्वा पुनर्द्विविधा। असद्विषया सद्विषया चेति। सर्वा चेयं द्विधा प्रवर्तते कण्ठतोऽर्थतश्चेति। 'दुष्टं चेन्मा भूत्' इति कण्ठतः। 'अन्यथाऽस्तु' इत्यर्थतः।**

**(टिप्पणी) द्वितीयापीति** । दूषणहानिरपीत्यर्थः । स्वरूपतो धर्मितः विशेषतो धर्मत इत्यर्थः । **सर्वेति**। साधनहानिर्दूषणहानिश्चेत्यर्थः । **सद्विषया असद्विषया चेति** ॥ सत्प्रतिज्ञातहानिरसत्प्रतिज्ञात-हानिश्चेत्यर्थः । **अन्यथाऽस्त्विति** ॥ नन्वन्यथाऽस्त्विति नेयं प्रतिज्ञातहानिः । रूपान्तराभ्युपगमे पूर्वत्यागानावश्यकत्वात् । तथात्वेऽपि प्रतिज्ञान्तरमेव स्यान्न तु प्रतिज्ञाहानिः तदुपजीवित्वेन

जघन्यप्रतिपत्तिकत्वादिति चेत् । न । अन्यथाऽस्त्विति पूर्वोक्तं परित्यजति अत्यजन् वा । आद्ये त्याग एवोपजीव्यः । अवश्यकत्वात् । न चेदं प्रतिज्ञान्तरलक्षणम् । अविशिष्टमुक्त्वा तत्रैव विशेषणान्तराप्रक्षेपात् । अन्त्येऽर्थान्तरमेव । पूर्वोक्तमत्यजत एतस्य अनुपयुक्तत्वात् । तस्मात् पूर्वोक्तत्यागमविज्ञायार्थान्तरमेव स्यान्न प्रतिज्ञान्तरमिति तज्ज्ञानमावश्यकम् । तथा च उपजीव्यत्वात् स एव दोष इति भावः । **अर्थत इति** ॥ अन्यद् वदति चेत् प्राचीनं त्यक्तमनेनेत्याक्षेपलभ्यमित्यर्थः ।

**(टीका) तत्रासद्विषया पक्षे साध्यहानिर्यथा 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्यत्र अनैकान्तिकत्वोद्भावने माऽस्त्वग्निमानिति, निरग्निकोऽस्त्विति वा । साधनहानिर्यथा, तस्मिन्नेव हेतौ तथा दूषिते माऽस्त्वसौ हेतुरिति, धूमवत्त्वमस्त्विति वा । धर्मिहानिर्यथा, ह्रदपर्वतावग्निमन्तावित्यत्र भागे बाधाभिधाने माऽस्तु तर्हि ह्रदः पक्ष इति, पर्वत एवास्त्विति वा ।**

**(टिप्पणी) असद्विषयेति** ॥ सर्वापि हानिः सद्विषया कण्ठतोऽर्थतश्च । तत्र सद्विषयत्वासद्विषय-कत्वयोरेकत्रासमावेशात् त्रयं त्रयं समावेश्यैकैकम् । यथासङ्ख्यमुदाहरति **पक्षे साध्यहानिर्यथेति** ॥ तस्मिन्नेव प्रमेयत्व एव । तथा दूषितेऽनैकान्तिकत्वेन दूषिते । **धर्मिहानिर्यथेति** ॥ नन्वत्र ह्रदांशे साध्यहानिरप्यस्तीति सैव दोषो न तु पक्षहानिरिति चेत् । न । उपधेयसङ्करेऽप्युपाधेरसङ्करात् । तदुपाध्यप्रतिसन्धानदशायामेतस्य दोषत्वात् । विषयसङ्करेऽपि ज्ञानासङ्करादिति भावः ।

**(टीका) साध्यविशेषणहानिर्यथा, पर्वत उष्णाग्निमान् इत्यत्र व्यर्थविशेषणतया प्रत्युक्ते माऽस्तु तर्हि तथेति, अग्निमानित्येवास्त्विति वा । साधनविशेषणहानिर्यथा, सुरभिधूमवत्त्वादित्यत्र तथैव दूषिते माऽस्तु तर्ह्येवमिति, धूमवत्वादित्येवास्त्विति वा । धर्मिविशेषणहानिर्यथा, अयं पर्वतोऽग्निमानित्यत्र तथैव दूषिते तर्हि तथा माऽस्त्विति, पर्वत इत्येवास्त्विति वा ।**

**(टिप्पणी)** धर्महानिं यथासङ्ख्यमुदाहरति **साध्यविशेषणहानिर्यथेति** ॥

**(टीका) दृष्टान्ते साध्यहानिर्यथा, पर्वतोऽग्निमान् प्रमेयत्वान्महानसवदित्यत्र अनैकान्तिकत्वोद्भावने मास्तु तर्हि महानसोऽग्निमानिति, निरग्निकोऽस्त्विति वा । साधनहानिर्यथा, तत्रैव प्रयोगे तथैव प्रत्युक्ते माऽस्तु प्रमेयत्वान्महानसोऽग्निमानिति,**

धूमवत्त्वादिति वा । धर्मिहानिर्यथा, हृदवदित्युक्ते साध्यवैकल्यात् प्रत्युक्ते मास्तु स दृष्टान्त इति, महानसोऽस्त्विति वा । साध्यविशेषणहानिर्यथा 'यो धूमवानसावुष्णाग्निमान् यथा महानसः' इत्यत्र विशेषणवैयर्थ्येऽभिहिते माऽस्तु तथेति, सोऽग्निमानित्येवास्त्विति वा । साधनविशेषणहानिर्यथा 'यः सुरभिधूमवानसावग्निमान् यथा महानसः' इत्यत्र तथैव प्रत्युक्ते मास्तु तर्हीत्थमिति, यो धूमवानित्येवास्त्विति वा । धर्मिविशेषणहानिर्यथा, 'यः सुरभिधूमवानसावग्निमान् तन्महानसवत्' इत्यत्र तथैव प्रत्युक्ते मास्त्वेवमिति, महानसवदित्येवास्त्विति वा ।

(टिप्पणी) द्वितीयषट्कमुदाहरति दृष्टान्ते साध्यहानिर्यथेति ॥ दृष्टान्ते धर्महानिं यथाक्रममुदाहरति साध्यविशेषणहानिर्यथेति ॥

(टीका) दूषणहानिः स्वरूपतो यथा 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्यत्रासिद्धेरुद्भावने निरनुयोज्यानुयोगेन प्रत्युक्ते 'तर्हि मा भूत्तत्' इति 'अनैकान्तिकता भवतु' इति वा । विशेषतो यथा 'हृदपर्वतावग्निमन्तौ धूमवत्त्वात्' इत्यत्र स्वरूपासिद्ध्युद्भावने पूर्ववत् प्रत्युक्ते 'तर्हि मास्तु' इति 'भागासिद्धो भवतु' इति वा ।

(टिप्पणी) दूषणहानिरपि स्वरूपतो विशेषतश्चेत्युक्तम् । तत्र स्वरूपतो हानिमुदाहरति दूषणहानिः स्वरूपतो यथेति ॥ स्वरूपतः दोषतावच्छेदकावच्छेदेनेत्यर्थः । विशेषत इति ॥ पूर्वोक्तदोषतावच्छेदकावच्छिन्न एव विशेषणान्तरदानेनेत्यर्थः । तथैवेति ॥ निरनुयोज्यानुयोगेन चेत्यर्थः । दूषणहानेः सर्वत्र निरनुयोज्यानुयोगोद्भावनानन्तरं प्रवृत्तिरित्यवधेयम् ।

(टीका) सद्विषया तु 'पर्वतोऽग्निमान् धूमवत्त्वात्' इत्यत्र अनैकान्तिकत्वोद्भावने 'तर्हि माऽस्तु पर्वतोऽग्निमान्' इत्याद्युदाहर्तव्या । सा च पर्यनुयोज्योपेक्षणसहचारिणीति।

(टिप्पणी) सद्विषया असद्विषया चेत्युक्तम् । तत्र असद्विषयामुदाहृत्य सद्विषयामुदाहरति सद्विषया त्विति । तर्हि मास्तु पर्वतोऽग्निमानिति ॥ अथान्योऽस्त्विति चेति अत्रापि द्रष्टव्यम् । सर्वा चेयं द्विधा त्वर्नेन इत्यभिधानात् । इत्यादीति ॥ सद्विषया साधनहानिर्यथा । पर्वतोऽग्निमान् धूमवत्त्वादित्यत्रैवानैकान्तिकोद्भावने कृते तर्हि मास्तु पर्वतो धूमवत्त्वादिति अन्यथैवाऽस्त्विति वा । अत्रैव त्योगे बाधोद्भावने कृते मास्तु तर्हि पर्वतः पक्ष इति वा चत्वर एवास्त्विति वेत्यादि स्वयमुदाहर्तव्येति ।

जघन्यप्रतिपत्तिकत्वादिति चेत् । न । अन्यथाऽस्त्विति पूर्वोक्तं परित्यजति अत्यजन् वा । आद्ये त्याग एवोपजीव्यः । अवश्यकत्वात् । न चेदं प्रतिज्ञान्तरलक्षणम् । अविशिष्टमुक्त्वा तत्रैव विशेषणान्तराप्रक्षेपात् । अन्त्येऽर्थान्तरमेव । पूर्वोक्तमत्यजत एतस्य अनुपयुक्तत्वात् । तस्मात् पूर्वोक्तत्यागमविज्ञायार्थान्तरमेव स्यान्न प्रतिज्ञान्तरमिति तज्ज्ञानमावश्यकम् । तथा च उपजीव्यत्वात् स एव दोष इति भावः । **अर्थत इति ॥** अन्यद् वदति चेत् प्राचीनं त्यक्तमनेनेत्याक्षेपलभ्यमित्यर्थः ।

**(टीका) तत्रासद्विषया पक्षे साध्यहानिर्यथा 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्यत्र अनैकान्तिकत्वोद्भावने माऽस्त्वग्निमानिति, निरग्निकोऽस्त्विति वा । साधनहानिर्यथा, तस्मिन्नेव हेतौ तथा दूषिते माऽस्त्वसौ हेतुरिति, धूमवत्त्वमस्त्विति वा । धर्मिहानिर्यथा, ह्रदपर्वतावग्निमन्तावित्यत्र भागे बाधाभिधाने माऽस्तु तर्हि ह्रदः पक्ष इति, पर्वत एवास्त्विति वा ।**

**(टिप्पणी) असद्विषयेति ॥** सर्वापि हानिः सद्विषया कण्ठतोऽर्थतश्च । तत्र सद्विषयत्वासद्विषय-कत्वयोरेकत्रासमावेशात् त्रयं त्रयं समावेश्यैकैकम् । यथासङ्ख्यमुदाहरति **पक्षे साध्यहानिर्यथेति ॥** तस्मिन्नेव प्रमेयत्व एव । तथा दूषितेऽनैकान्तिकत्वेन दूषिते । **धर्मिहानिर्यथेति ॥** नन्वत्र ह्रदांशे साध्यहानिरप्यस्तीति सैव दोषो न तु पक्षहानिरिति चेत् । न । उपधेयसङ्करेऽप्युपाधेरसङ्करात् । तदुपाध्यप्रतिसन्धानदशायामेतस्य दोषत्वात् । विषयसङ्करेऽपि ज्ञानासङ्करादिति भावः ।

**(टीका) साध्यविशेषणहानिर्यथा, पर्वत उष्णाग्निमान् इत्यत्र व्यर्थविशेषणतया प्रत्युक्ते माऽस्तु तर्हि तथेति, अग्निमानित्येवास्त्विति वा । साधनविशेषणहानिर्यथा, सुरभिधूमवत्त्वादित्यत्र तथैव दूषिते माऽस्तु तर्ह्येवमिति, धूमवत्वादित्येवास्त्विति वा । धर्मिविशेषणहानिर्यथा, अयं पर्वतोऽग्निमानित्यत्र तथैव दूषिते तर्हि तथा माऽस्त्विति, पर्वत इत्येवास्त्विति वा ।**

**(टिप्पणी)** धर्महानिं यथासङ्ख्यमुदाहरति **साध्यविशेषणहानिर्यथेति ॥**

**(टीका) दृष्टान्ते साध्यहानिर्यथा, पर्वतोऽग्निमान् प्रमेयत्वान्महानसवदित्यत्र अनैकान्तिकत्वोद्भावने मास्तु तर्हि महानसोऽग्निमानिति, निरग्निकोऽस्त्विति वा । साधनहानिर्यथा, तत्रैव प्रयोगे तथैव प्रत्युक्ते माऽस्तु प्रमेयत्वान्महानसोऽग्निमानिति,**

धूमवत्त्वादिति वा । धर्मिहानिर्यथा, ह्रदवदित्युक्ते साध्यवैकल्यात् प्रत्युक्ते मास्तु स दृष्टान्त इति, महानसोऽस्त्विति वा । साध्यविशेषणहानिर्यथा 'यो धूमवानसावुष्णाग्निमान् यथा महानसः' इत्यत्र विशेषणवैयर्थ्येऽभिहिते माऽस्तु तथेति, सोऽग्निमानित्येवास्त्विति वा । साधनविशेषणहानिर्यथा 'यः सुरभिधूमवानसावग्निमान् यथा महानसः' इत्यत्र तथैव प्रत्युक्ते मास्तु तर्हीत्थमिति, यो धूमवानित्येवास्त्विति वा । धर्मिविशेषणहानिर्यथा, 'यः सुरभिधूमवानसावग्निमान् तन्महानसवत्' इत्यत्र तथैव प्रत्युक्ते मास्त्वेवमिति, महानसवदित्येवास्त्विति वा ।

**(टिप्पणी)** द्वितीयषट्कमुदाहरति **दृष्टान्ते साध्यहानिर्यथेति** ॥ दृष्टान्ते धर्महानिं यथाक्रममुदाहरति **साध्यविशेषणहानिर्यथेति** ॥

**(टीका)** दूषणहानिः स्वरूपतो यथा 'पर्वतोऽग्निमान् प्रमेयत्वात्' इत्यत्रासिद्धेरुद्भावने निरनुयोज्यानुयोगेन प्रत्युक्ते 'तर्हि मा भूत्तत्' इति 'अनैकान्तिकता भवतु' इति वा । विशेषतो यथा 'ह्रदपर्वतावग्निमन्तौ धूमवत्वात्' इत्यत्र स्वरूपासिद्ध्युद्भावने पूर्ववत् प्रत्युक्ते 'तर्हि मास्तु' इति 'भागासिद्धो भवतु' इति वा ।

**(टिप्पणी)** दूषणहानिरपि स्वरूपतो विशेषतश्चेत्युक्तम् । तत्र स्वरूपतो हानिमुदाहरति **दूषणहानिः स्वरूपतो यथेति** ॥ **स्वरूपतः** दोषतावच्छेदकावच्छेदेनेत्यर्थः । **विशेषत इति** ॥ पूर्वोक्तदोषतावच्छेदकावच्छिन्न एव विशेषणान्तरदानेनेत्यर्थः । **तथैवेति** ॥ निरनुयोज्यानुयोगेन चेत्यर्थः । दूषणहानेः सर्वत्र निरनुयोज्यानुयोगोद्भावनानन्तरं प्रवृत्तिरित्यवधेयम् ।

**(टीका)** सद्विषया तु 'पर्वतोऽग्निमान् धूमवत्त्वात्' इत्यत्र अनैकान्तिकत्वोद्भावने 'तर्हि माऽस्तु पर्वतोऽग्निमान्' इत्याद्युदाहर्तव्या । सा च पर्यनुयोज्योपेक्षणसहचारिणीति ।

**(टिप्पणी)** सद्विषया असद्विषया चेत्युक्तम् । तत्र असद्विषयामुदाहृत्य सद्विषयामुदाहरति **सद्विषया त्विति । तर्हि मास्तु पर्वतोऽग्निमानिति** ॥ अथान्योऽस्त्विति चेति अत्रापि द्रष्टव्यम् । सर्वा चेयं द्विधा प्रवर्तत इत्यभिधानात् । **इत्यादीति** ॥ सद्विषया साधनहानिर्यथा । पर्वतोऽग्निमान् धूमवत्त्वादित्यत्रैवानैकान्तिकोद्भावने कृते तर्हि मास्तु पर्वतो धूमवत्त्वादिति अन्यथैवाऽस्त्विति वा । अत्रैव प्रयोगे बाधोद्भावने कृते मास्तु तर्हि पर्वतः पक्ष इति वा चत्वर एवास्त्विति वेत्यादि स्वयमुदाहर्तव्येति ।

**पर्यनुयोज्योपेक्षणासहचारिणी इति** ॥ सद्धेतौ व्यभिचारो नास्तीति पर्यनुयोगमुपेक्ष्य प्रतिज्ञायास्त्यक्तत्वादित्यर्थः ।

**(टीका) ननु यद्दोषभयादुक्तं त्यजति स एव निग्रहस्थानमस्तु किं हान्येति चेन्न। सद्भानौ तस्या एव निग्रहहेतुत्वात्। असद्भानावपि तत एव परिहृतत्वात्। हानिमनुद्भाव्य प्राचीनदोषस्थापनानुपपत्तेश्च।**

**(टिप्पणी) सद्भानाविति** । तत्र प्राथमिकस्य दोषस्य वस्तुतोऽभावादिति भावः । **असद्भानावपीति** । दन्दशूकदष्टाङ्गुलिवद् दुष्टत्यागेनैव पूर्वनिग्रहपरिहारात् । नहि त्यक्तस्य दुष्टत्वेऽस्य काचित् क्षतिरित्यर्थः । **हानिमनुद्भाव्येति** ॥ यावद् हानिर्नोद्भाव्यते तावत् पूर्वदोष एव स्थिरो भवति । तदुद्भावने तु हानिभिया प्रथमैव प्रतिज्ञा आस्थेया । सा च दुष्टेति हि प्राचीनदोषस्थिरीकरणम् । तथा चोपजीव्यत्वात् प्रतिज्ञाहानिरेव निग्राहिकेत्यर्थः ।

**(टीका) न चास्यास्तादर्थ्यं, स्वयमपि विप्रतिपत्तिसूचकत्वात् । न चैवं स्ववचनविरोध एव। हानिमनुद्भाव्य विरोधोद्भावनानुपपत्तेरिति॥**

**(टिप्पणी)** न चेयमुपजीव्यापि न निग्राहिका किन्तूपजीवकमपि प्राथमिकमेव निग्राहकं क्लृप्तत्वादित्याह **न चास्यास्तादार्थ्यमिति** ॥ **स्वयमपीति** ॥ विप्रतिपत्त्यप्रतिपत्तिसूचकत्वं हि निग्राहकत्वम् । तदत्राप्यस्त्येवेति भावः । **विरोध एवेति** ॥ परिग्रहवर्जनयोरेकस्य विरुद्धत्वादित्यर्थः । **हानिमनुद्भाव्येति** ॥ तथा चोपजीव्यत्वात् सैव दोष इति भावः । विरोधस्य प्रतियोगिज्ञानसापेक्षज्ञानत्वादिति ।

*प्रतिज्ञान्तरलक्षणम्*

**(मूलम्) प्रतिज्ञान्तरम्।**

(टीका) दोषपरिजिहीर्षया निर्दिष्टसाध्यभागेऽधिकप्रक्षेपः प्रतिज्ञान्तरम् । प्रतिज्ञा, उदाहरणे प्रयोज्यभागः, निगमनं चेति साध्यभागः । द्विविधं चेदं दोषपरिहारहेतुः तदहेतुश्चेति।

**(टिप्पणी)** क्रमानुसारेण प्रतिज्ञान्तरलक्षणमाह **दोषपरिजिहीर्षयेति** ॥ वाद्युक्तदोषोद्धाराय निर्दिष्टसाध्यभागस्य पूर्वानुक्तविशेषणवतोऽभिधानं प्रतिज्ञान्तरमित्यर्थः । साध्यभागपदस्याव्याप्तिवारणाय सकलपरतया व्याचष्टे **प्रतिज्ञेति** । हेतूपनययोः साधकभागत्वमेवेति भावः । न चोपनये वह्निव्याप्यधूमवानयमित्यत्र वह्निः साध्यभाग एवेति वाच्यम् । वह्नेस्तत्र व्याप्तिविशेषणतया साधकभाग एव प्रवेशादिति । **दोषपरिहारहेतुरिति** । दोषपरिहाराभिप्रायेण क्रियमाणत्वं साधारणम् । स च दोषः क्वचित् परिहृतो भवति क्वचिन्नेत्यर्थः ।

**(टीका) दोषसदसद्भावाभ्यां पुनर्द्विविधम् । तत् प्रतिज्ञायां चतुर्विधम् । पक्षतद्विशेषणसाध्यतद्विशेषणप्रक्षेपभेदात् । पक्षप्रक्षेपोऽपि द्वेधा । स्वरूपतः पक्षान्तर-तश्च इति । एवं साध्यप्रक्षेपोऽपि । तत्र सद्दोषपरिहारार्थमाद्यं यथा 'अनित्यः कृतकत्वात्' इत्यत्र न्यूनतया प्रत्युक्ते 'शब्दोऽनित्यः' इति । द्वितीयं यथा 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्यत्र सामान्येनानैकान्तिकत्वेऽभिहिते 'तदपि पक्षः' इति । तृतीयं यथा, तत्रैव ध्वनिभिः सिद्धसाधनत्वोद्भावने 'वर्णात्मकः शब्द पक्षः' इति ।**

**(टिप्पणी) पुनर्द्विविधमिति** ॥ सद्विषयमसद्विषयं वेत्यर्थः । **स्वरूपत इति** ॥ पूर्वमप्रक्षिप्तप्रक्षेपादित्यर्थः । **आद्यमिति** ॥ स्वरूपतः पक्षप्रक्षेप इत्यर्थः । **द्वितीयं यथेति** ॥ पक्षान्तरतः पक्षप्रक्षेपो यथेत्यर्थः । **तदपि पक्ष इति** ॥ तथा च पक्षे व्यभिचारो न दोषायेति भावः । **तृतीयमिति** ॥ पक्षविशेषणप्रक्षेप इत्यर्थः । नन्वत्र ध्वनिपक्षतापरिहारात् पक्षैकदेशहानिः प्रतिज्ञाहानिरेवेति चेन्न । येन प्रकारेण स्वीकारस्तेनैव त्यागस्य प्रतिज्ञाहानिपदार्थत्वादिति भावः ।

**(टीका) चतुर्थं यथा 'शब्दः कृतकत्वात्' इत्यत्र न्यूनतया प्रत्युक्ते 'शब्दोऽनित्य' इति । पञ्चमं यथा 'पर्वतोऽग्निमान् सुरभिमलिनधूमवत्त्वात्' इत्यत्र विशेषणासामर्थ्येऽभिहिते 'साग्निकृष्णागरुमान्' इति । षष्ठं यथा 'क्षित्यादिकं कारणपूर्वकं कार्यत्वात्' इत्यत्र सिद्धसाधनत्वोक्तौ उपादानादिबुद्धिमत्कारणपूर्वकमिति ।**

**(टिप्पणी) चतुर्थमिति** ॥ स्वरूपतः साध्यप्रक्षेप इत्यर्थः । **पञ्चममिति** । साध्यान्तरप्रक्षेप इत्यर्थः । ननु यदि कृष्णागुरुमत्त्वेऽपि प्राग् विप्रतिपत्तिरासीत् तदा परदोषोद्भावनानन्तरं स्थापनाकरणादप्राप्तकालत्वम् । अथ तत्र नासीद् विप्रतिपत्तिस्तदाऽधिकमर्थान्तरं वेति चेन्न ।

पूर्वमविप्रतिपत्तावपि विशेषणवैयर्थ्यपरिहारार्थं तदुपन्यासेनाधिकादेरभावात् । **षष्ठं यथेति ॥** साध्यविशेषणप्रक्षेप इत्यर्थः ।

**(टीका) उदाहरणे प्रयोज्यभागे प्रयोज्यस्वरूपतदन्तरतद्विशेषणधर्मितद्विशेषण-प्रक्षेपभेदेन पञ्चविधम् । तत्राद्यं यथा 'यो धूमवान् यथा महानसः' इत्यत्र न्यूनतया प्रत्युक्ते 'सोऽग्निमान्' इति । द्वितीयं तथा 'यत् सुरभिमलिनधूमवत् तद् अग्निमत् यथा सम्प्रतिपन्नम्' इत्युक्ते प्रयोज्यभागे न्यूनतया प्रत्युक्ते 'तत् साग्निकृष्णागरुत्मत्' इति । तृतीयं यथा 'यत् कार्यं तत् कारणपूर्वकं यथा घटः' इत्यत्र न्यूनतया प्रत्युक्ते 'तत् उपादानादिबुद्धिमत्कारणपूर्वकम्' इति । चतुर्थं यथा 'यो धूमवानसावग्निमान्' इत्येवोक्ते प्रागिव प्रत्युक्ते 'यथा महानसः' इति । पञ्चमं यथा 'शब्दो नित्यः नित्य-गुणत्वात् परमाणुरूपवत्' इत्यत्र साध्यवैकल्येऽभिहिते 'अपार्थिवपरमाणुरूपं दृष्टान्तः' इति ।**

**(टिप्पणी) तदन्तरतद्विशेषणेति ॥** प्रयोज्यान्तरप्रयोज्यविशेषणेनेत्यर्थः । **तत्राद्यं यथेति ॥** तस्मा-दग्निमानित्युक्ते न्यूनतया च प्रत्युक्ते पर्वत इति । अयं पर्वतोऽग्निमानिति प्रतिज्ञाय तस्मात् पर्वतोऽग्निमा-नित्युक्ते न्यूनतया प्रत्युक्ते तस्मादयं पर्वतोऽग्निमानिति ।

**(टीका) निगमनेऽपि प्रतिज्ञायामिवोदाहर्तव्यम् । हेतुप्रक्षेपोऽत्राधिकः । स यथा 'पर्वतोऽग्निमान्' इत्येवोक्ते न्यूनतया प्रत्युक्ते, 'तस्मात् धूमवत्त्वात् पर्वतोऽग्निमान्' इति । असद्दोषपरिहाराहेतुर्यथा 'पर्वतोऽग्निमान्' इत्यत्र बाधोक्तावुष्णाग्निमानित्यादि । सद्दोषपरिहाराहेतुर्यथा 'शब्दोऽनित्य ऐन्द्रियकत्वात्' इत्यत्र सामान्येनानैकान्तिकत्वो-द्भावने 'सर्वगतः शब्दः पक्षः' इत्यादि ।**

**(टिप्पणी) प्रतिज्ञायामिवेति ॥** पक्षतद्विशेषणसाध्यतद्विशेषणप्रक्षेपभेदेनेत्यर्थः । **हेतुप्रक्षेपोऽत्राधिक इति ॥** यद्यपि हेतुप्रक्षेपोऽत्र साधकप्रक्षेप इति हेत्वन्तरं भवितुमर्हति तथापि साध्यभागेऽधिकप्रक्षेपरूपत्वात् प्रतिज्ञान्तरत्वमेव । तस्मादित्यनेन समर्थहेतुसम्बन्धस्य साध्ये बोधनादिति भावः । **उष्णाग्निमानिति ॥** यद्यपि परिहारो न जात एव, अग्न्यभाववति उष्णाग्निमत्त्वस्याप्यभावादिति तथापि प्राचीनो बाधो गत एव प्रतियोगिभेदेन बाधयोर्भिन्नत्वादिति भावः ।

दोषसदसद्भावाभ्यां दोषपरिहारहेतुमुक्त्वा दोषसदसद्भावाभ्यां दोषापरिहारहेतुमुदाहरति **सद्दोषपरिहाराहेतुर्यथेति** ॥ इदं तु पक्षविशेषणाधिक्योक्तेरुदाहरणम् । पक्षाधिक्योक्तेरुदाहरणं त्वनित्यः कृतकत्वादित्युक्ते सामान्येनानैकान्तिकोद्भावने शब्दोऽनित्य इति । साध्यप्रक्षेपाद् यथा । शब्दः द्रव्यत्वादित्युक्ते स्वरूपासिद्धतया च प्रत्युक्ते शब्दोऽनित्य इति । साध्यविशेषणप्रक्षेपाद् यथा । शब्दोऽनित्यः कृतकत्वादित्युक्ते ध्वंसेनानैकान्तिकत्वोद्भावने शब्दः सत्त्वे सत्यनित्य इति ।

**(टीका) असद्दोषपरिहारहेतुर्यथा 'शब्दोऽनित्यः कृतकत्वात्' इत्यत्र सामान्येनानैकान्तिकत्वोद्भावने 'तदपि पक्षः' इत्यादि । न च दोषापरिहारे अर्थान्तरता । प्रकृतोपयोगसद्भावाभिमानेन प्रतिज्ञान्तरत्वस्यैव सिद्धत्वात् । न चेयं हानिरेव । पूर्वाङ्गीकृतस्यात्यागात् ।**

अत्र सर्वत्र समीचीनस्य दोषस्याधिक्योक्त्याप्यपरिहारादिति । **तदपि पक्ष इति** ॥ अत्र यद्यपि तस्यापि पक्षत्वाभिधानेन पक्षे व्यभिचारो न दोषायेति परिहारहेतुत्वमेव । तथापि निश्चितसाध्याभाववति पक्षेऽपि व्यभिचारो दोषायैवेति न परिहारहेतुत्वमिति भावः । न चैवमेतस्य सद्दोषपरिहारहेतु-पक्षान्तराधिक्योक्त्युदाहरणत्वविरोधः । तत्रापि साध्यसन्देहदशायां तदुदाहरणत्वसम्भवादिति । पक्षविशेषणसाध्यतद्विशेषणोदाहरणमादिपदग्राह्यम् । पक्षे विशेषणोदाहरणम् । अत्रैव प्रयोगे तथैव दूषिते वर्णात्मकः शब्द इति । साध्यविशेषणोदाहरणं तु शब्दोऽनित्यः कृतकत्वे सति सत्त्वादित्युक्ते सामान्येनानैकान्तिकत्वोद्भावने सत्त्वे सत्यनित्य इत्यादि । **अर्थान्तरतेति** ॥ प्रकृतानुपयोगादिति भावः । **अत्यागादिति** ॥ अधिकं तत्रानुप्रविष्टं न तु तद्धानिरित्यर्थः ।

**(टीका) विशेषणाभावस्य प्रागनङ्गीकृतत्वादिति** ॥

(टिप्पणी) ननु पूर्वं विशेषणाभावोऽङ्गीकृतः, अधुना विशेषणोक्तौ तद्धानिरित्यत आह **विशेषणेति** । विशेषणं पूर्वं नोक्तमित्येव न तु तदभावोऽङ्गीकृत इति भावः । अथ हेत्वन्तरं कुतः पृथक् कस्मात् क्रियते । न हि प्रतिज्ञाहानिमभिधाय हेतुहानिः पृथगभिहिता । किन्तु प्रतिज्ञाहानिपदस्य निर्वाह्यहानिपरतया यथा सङ्ग्रहस्तथाऽत्रापि प्रतिज्ञान्तरपदं निर्वाह्यान्तरपरमुचितम् । अन्यथोदाहरणान्तरादिकमपि स्यात् । न च कथकाशक्तिविशेषोन्नायकतया हेत्वन्तरं पृथक् । एवं सति

१. टिप्पण्यनुसारेण अकारः योजितः । परमतेन इति तु प्रचलितः ।

हेतुहानिरपि पृथक् स्यादिति चेत् । न । वाक्यप्रयोगस्य साध्यसाधकभागोभयशरीरतया हानौ पूर्वसाध्यसाधनवद्वाक्यस्य नान्यार्थपरता किन्तु पूर्ववाक्योपमर्दमात्रमित्यभेदविवक्षा । अत्र त्वर्थान्तरप्रवेशेन वाक्यभेदादिति भेदोपन्यासात् । अत एव नोदाहरणं पृथक् लक्षितं स्वातन्त्र्येण तस्य वाक्यभेदाप्रयोजकत्वात् । अत एव संन्यासेऽप्यभेदविवक्षेति ।

### *प्रतिज्ञाविरोधलक्षणम्*

**(मूलम्) प्रतिज्ञाविरोधः ।**

**(टीका) एकवक्तृक(कर्तृक)वाक्ये अवान्तरवाक्यानां पदानां च मिथो व्याघातः प्रतिज्ञाविरोधः । स च बहुप्रकारः । तत्र प्रतिज्ञायां धर्मिपदयोर्यथा 'श्रोतृत्वे सति बधिरः' इति । साध्यपदयोर्यथा 'विमतो बधिरत्वे सति श्रोता' इति ।**

**(टिप्पणी)** क्रमप्राप्तप्रतिज्ञाविरोधं लक्षयति '**एकवक्तृकवाक्य इति** ॥ भिन्नभिन्नवाक्ये विरोधाभावा-दतिव्याप्तिवारणायैतत् । परस्परानन्वितार्थान्वयाभिप्रायकः शब्दः प्रतिज्ञाविरोध इत्यर्थः । नन्वपसिद्धान्तात् कथमस्य भेदः । तत्र शास्त्रकाराभ्युपगमेन विरोध इह कथकाभ्युपगमेनेति चेत् । न । नैयायिकोऽहमित्यादिना स्वयमपि सिद्धान्ताभ्युपगमादिति । मैवम् । शास्त्रकाराभ्युपगममप्रतीत्य स्वाभ्युपगमविरोधस्य प्रत्येतुमशक्यतयोपजीव्यत्वेनापसिद्धान्तस्य भिन्नत्वात् । स्वाभ्युपगमकृत-विरोधस्थलेऽस्य भिन्नत्वादित्युभयोर्भेदः । **श्रोतृत्व इति** ॥ श्रोत्रवत्त्वे सति बधिरः कुण्डलीत्यादावित्यर्थः ।

**(टीका) धर्मिसाध्यपदयोश्चतुर्विधः । तत्र धर्मविधानाद्यथा 'मूको वक्ता' इति । तन्निषेधाद्यथा 'प्रमेयं न प्रमाणसापेक्षम्' इति धर्मिविधानाद्यथा 'अतीतमस्ति' इति । तन्निषेधाद्यथा 'वर्तमानं नास्ति' इति । हेतुपदयोर्यथा 'मूकत्वे सति वक्तृत्वात्' इति । उदाहरणे साधनपदयोर्हेतुपदवत् । साध्यपदयोः प्रतिज्ञायामिव । परस्परं तु प्रतिज्ञाहेतुविरोधवत् । दृष्टान्तधर्मिणि साध्यधर्मिवत् । साध्यधर्मिपदयोः प्रतिज्ञायामिव चतुर्विधः । उपनयपदयोर्हेतुपदवत् । निगमने प्रतिज्ञावत् । हेत्वंशेन विरोधः प्रतिज्ञाहेतुविरोधवत् ।**

---

१. एककर्तृक इति प्रचलितपाठः ।

(टिप्पणी) **धर्मिविधानादिति** ॥ न चात्राप्यतीतेऽस्तित्वविधानात् तत एव विरोधः । अस्तित्वं वर्तमानकालसम्बन्धः स च धर्मिद्वयात्मक इति अस्तित्वविधानस्य धर्मिविधानरूपत्वादिति भावः । एवमग्रेऽपि । **हेतुपदवदिति** ॥ यो यो मूकत्वे सति वक्तेत्येवंरूपः । **प्रतिज्ञाहेत्विति** ॥ यद्व्यतिरिक्तं तद् व्यतिरिक्तमित्येवमित्यर्थः । **प्रतिज्ञायामिवेति** ॥ धर्मविधिनिषेधाभ्यां धर्मिविधिनिषेधाभ्याम् । यथा स वक्ता मूकवत्, तत्र प्रमाणसापेक्षं प्रमेयवत्, तदतीतं वर्तमानवत्, तद् वर्तमानमवर्तमानवदित्येवंरूप इत्यर्थः । **उपनयेति** ।।मूकत्वे सति वक्ता चायमित्येवंरूपः । **निगमन इति** ॥ तस्माद् विमतो बधिरत्वे सति श्रोतेत्येवंरूपः ।

**(टीका) प्रतिज्ञाहेत्वोर्यथा 'द्रव्यं गुणव्यतिरिक्तम् अव्यतिरिक्तत्वात्' इति । प्रतिज्ञोदाहरणयोर्यथा 'विप्रतिपन्नो वक्ता मूकवत्' इति । प्रतिज्ञोपनययोः प्रतिज्ञाहेतुविरोधवत् । प्रतिज्ञानिगमनयोर्यथा 'पर्वतोऽग्निमान् तस्मान्निरग्निकः' इति । हेतूदाहरणयोर्यथा 'वक्तृत्वान्मूकवत्' इति । हेतूपनययोर्यथा 'धूमवत्वात् तथा चायं निर्धूमः' इति । हेतुनिगमनयोः प्रतिज्ञाहेतुविरोधवत् । उदाहरणोपनययोर्हेतूदाहरणविरोधवत् । उदाहरणनिगमनयोः प्रतिज्ञोदाहरणविरोधवत् । उपनयनिगमनयोरपि प्रतिज्ञाहेतुविरोधवत् । एवमन्यत्रापि विरोधो द्रष्टव्यः । न च विरुद्धहेत्वाभाससङ्करः । तत्र साध्यविपर्ययव्याप्तिदर्शनेन विरोधः । अत्र पुनः अस्ति नास्तीतिवत् उक्तिमात्रेणेति भेदात् । अत एव प्रथममुपलब्धेर्दोषान्तरसम्भवेऽप्येतदेवोद्भाव्यमिति ॥**

(टिप्पणी) **प्रतिज्ञोपनययोरिति** ॥ यद्यपि प्रतिज्ञाहेतुविरोधेन पुरःस्फूर्तिकेनायं गतार्थः, तथापि तदस्फुरणदशायां कदाचित् सम्भाव्यत इति उक्त इति भावः । **हेतुनिगमनयोरिति** ॥ अव्यतिरिक्तत्वाद् व्यतिरिक्तोऽयमित्येवमित्यर्थः । **उपनयेति** ॥ वक्ता चायं तस्मान्मूक इत्येवंरूप इत्यर्थः । **एवमिति** ॥ प्रत्येकपदेऽपीत्यर्थः । ननु यत्र विरोधस्तत्रावश्यमनैकान्तिकादय इति तैरेव गतार्थत्वमित्यत आह **अत एव इति** ॥ तथाच प्रथमोपस्थितिकत्वादेतदेवोद्भाव्यमिति भावः ।

*प्रतिज्ञासंन्यासलक्षणम्*

**(टीका) स्वोक्तापलापः प्रतिज्ञासन्न्यासः । हानिवदवान्तरभेदभिन्नः चतुर्धा च प्रवर्तते केनेदमुक्तम् इति वा परमतमेतन्मयोक्तम् इति वा त्वयेदमुक्तम् इति वा परोक्तं मयाऽनूदितम् इति वेति ॥**

**(टिप्पणी)** क्रमप्राप्तं प्रतिज्ञासन्न्यासं लक्षयति **स्वोक्तापलाप इति** ॥ **अवान्तरभेदभिन्न इति** ॥ पक्षसाध्यतद्धर्मापलापादिभेदभिन्न इत्यर्थः । एतस्योत्थानप्रकारमाह **चतुर्धेति** ॥ **केनेति** ॥ मया नोक्तमित्यर्थः । **तव मतमिति** ॥ यद्यप्यत्र स्वोक्तापलापो नास्ति तथापि स्वाभ्युपगतत्वसमानाधिकरणोक्तत्वापलापः प्रतिज्ञासंन्यासः । स च स्वाभ्युपगतत्वापलापात् क्वचिदुक्तत्वापलापादिति । **त्वयेदमिति** ॥ मया नोक्तमित्यर्थोऽपलापोऽत्र मन्तव्यः ।

### *हेत्वन्तरलक्षणम्*

**(टीका) दोषपरिजिहीर्षया निर्दिष्टसाधकांशे अधिकप्रक्षेपो हेत्वन्तरम् । हेतुः उदाहरणे प्रयोजकभागः उपनय इति साधकांशः । तत् द्विविधम् साधनदूषणनिष्ठभेदात् । सर्वं स्वरूपतो विशेषतश्चेति द्वेधा । तत्राद्यं यथा, हेत्वाद्यप्रयोगे न्यूनत्वोद्भावने तदुपादानम् । द्वितीयमपि दोषप्रतीकाराप्रतीकाराभ्यां दोषसदसद्भावाभ्यां च द्वेधा । तत्र साधने हेतौ सद्दोषपरिहारहेतुर्यथा 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्यत्रानैकान्तिकत्वेन दूषिते सामान्यवत्वे सतीति । उदाहरणे प्रयोजकभागे यथा 'यदैन्द्रियकः सोऽनित्यः'[1] इत्यत्र न्यूनत्वेऽभिहिते पूर्ववत् विशेषणम् । उपनये यथा 'तथा चायमैन्द्रियकः' इत्यभिहिते (इत्युक्ते) पूर्ववत् विशेषणम् । दूषणे हेतौ यथा 'नायं साध्यसाधकः सपक्षे सत्वात्' इत्यत्र व्यभिचारेण प्रत्युक्ते 'विपक्षवृत्तित्वे सति' इत्यादि ।**

**(टिप्पणी)** हेत्वन्तरं लक्षयति **दोषपरिजिहीर्षयेति** ॥ ननु पूर्वानुक्तहेतुस्वरूपप्रक्षेपाव्यापकमिदं तत्साधकपूर्वमनिर्दिष्टत्वात् इति चेन्न । परोक्तदोषोद्धाराय प्रागनुक्तसाधकभागाभिधानं हेत्वन्तरमित्यनेन विवक्षणात् । निर्दिष्टसाधकांश इत्यस्य लक्षणाप्रवेशात् । साधकभागश्च विशेष्यं विशेषणं वेति भावः । **हेतुरिति** ॥ यद्यपि निगमने तस्मादित्यंशस्यापि गणना कर्तुमर्हति तथापि तस्य तत्र साध्यविशेषणत्व एव तात्पर्यमबाधितत्वासत्प्रतिपक्षितत्वलाभाय न तु साधकत्व इति भावः । **दूषणनिष्ठेति** ॥ यद्यपि दूषणस्यापि हेतुत्वेनैव प्रयोगात् साधननिष्ठत्वमेव तथापि दूषणं यदि साधनविषयं नोच्यते तदेदं द्रष्टव्यम् । गोबलीवर्दन्यायाद् वा भेदोपन्यासः । **स्वरूपतो विशेषतश्चेति** । हेतुविशेषणतो दूषणं हेतुस्वरूपतो दूषणमित्यर्थः । **आद्यमिति** । स्वरूपत इत्यर्थः । आदिपदग्राह्यं तु दूषणाप्रयोग इति । **द्वितीयमपीति** । विशेषणतश्चेत्यर्थः । आद्ये दोषासत्त्वस्य दोषाप्रतीकारस्यासम्भावितत्वादिति भावः । **तत्र साधन इति** । इदं

---

१. पूर्वमुद्रितपुस्तकेषु 'यत्'पदं नास्ति । मातृकानुसारेण योजितः ।

तु स्वरूपाख्यानमात्रम् । साधने सद्दोषपरिहारहेतुत्वस्यासम्भावितत्वादिति । **पूर्ववदिति** । सामान्यवत्त्वे सतीत्यर्थः । **तथैवेति** । न्यूनत्वेनैवेत्यर्थः । **दूषणहेतोरिति** । हेतुत्वेनैवोद्भावनमभिप्रेत्य सद्दोषपरिहारहेतुरिति शेषः ।

**(टीका) सद्दोषप्रतीकारो यथा 'शब्दोऽनित्य ऐन्द्रियकत्वात्' इत्यत्रानैकान्तिकत्वोद्भावने 'प्रमेयत्वे सति' इत्यादि । असद्दोषप्रतीकारो यथा 'पर्वतोऽग्निमान् धूमवत्त्वात्' इत्यत्र महानसे व्यभिचार इत्युक्ते 'तदन्यत्वे सति' इत्यादि । असद्दोषाप्रतीकारो यथा तत्रैव 'प्रमेयत्वे सति' इत्यादि । अत्र हेत्वाभासादिसम्भवेऽपि तस्य साध्यत्वात् सिद्धं हेत्वन्तरमेवोद्भाव्यमिति ॥**

**(टिप्पणी)** सद्दोषपरिहारहेतुमुदाहृत्य सद्दोषापरिहारहेतुमुदाहरति **सद्दोषाप्रतीकार इति** ॥ हेत्वन्तरमिति सम्बन्धः । सद्दोषपक्षद्वैविध्यमुदाहृत्यासद्दोषपक्षेऽपि परिहारहेतुं यथाक्रममुदाहरति **असद्दोषप्रतीकारमिति** ॥ द्वितीयमुदाहरति **असद्दोषेति** ॥ **तत्रैवेति** । पर्वतो वह्निमान् धूमवत्त्वादित्यत्रैवेत्यर्थः । असत एव महानसे व्यभिचारस्य प्रमेयत्वेनाप्रतीकारादित्यर्थः । आदिपदग्राह्यं तु तत्रैव प्रयोगे यो धूमवानसावग्निमानित्युदाहृते अनैकान्तिकत्वेन दूषिते यः प्रमेयधूमवानित्यादि । स्थापनागतं दूषणगतं वा विशेषितत्वं परोक्तदोषप्रतीकारे हेत्वन्तरमेव निग्रहस्थानम् । यत्र तु विशेषितत्वेऽपि पूर्वदोषनादवस्थ्यं तत्र स्थापनायां हेत्वाभासो दूषणे तु निरनुयोज्यानुयोग इति ताभ्यामेव गतार्थता यद्यपि तथापि हेत्वन्तरमेवोद्भाव्यमुपजीव्यत्वात्, विशेषणाभिधानेन अविशिष्टासामर्थ्यस्य वादिस्वीकृतत्वाच्च इति । **साध्यत्वादिति** ॥ उभयवाद्यसम्प्रतिपन्नत्वात् इत्यर्थः । **सिद्धमिति** ॥ उभयवादिसम्प्रतिपन्नमित्यर्थः ।

**(टीका) प्रकृतानुपयुक्तान्वितोक्तिरर्थान्तरम् । तच्चतुर्विधम् । स्वपरोभयानुभयमतरीतिभेदात् । तत्र स्वमतेन नैयायिकस्य मीमांसकं प्रति यथा 'शब्दोऽनित्यः स चाकाशविशेषगुणः' इति । 'अपरमतेन यथा 'द्रव्यम्' इत्यादि । उभयमतेन यथा 'श्रोत्रग्राह्योऽसौ' इत्यादि । अनुभयमतेन यथा 'गन्धादिभिः समानाश्रयोऽसौ' इत्यादि ।**

**(टिप्पणी)** क्रमागतमर्थान्तरं लक्षयति **प्रकृतेति** ॥ अन्वितोक्तिरित्यनेन निरर्थकापार्थकयोर्व्यावर्तनं निरर्थकस्य पदार्थानुपस्थापकत्वादपार्थकस्यान्वयाबोधकत्वादित्यनन्वितोक्त्यभावोऽविशिष्ट इति । **स्वेति** ॥ स्वमात्रानुमतपरमात्रानुमतस्वपरोभयानुमतस्वपरोभयाननुमतभेदादित्यर्थः । तेन न साङ्कर्यम् । **स्वमतेनेति** ॥

नैयायिकमात्रमतेनेत्यर्थः । **अपरमतेनेति** ॥ मीमांसकमात्रमतेनेत्यर्थः ।

**(टीका) अत्र न्यूनादिसम्भवेऽपि तस्योक्तग्राह्यत्वात् अस्य च उच्यमानग्राह्यत्वेन प्रथमप्राप्तत्वात् इदमेवोद्भाव्यमिति ॥**

**(टिप्पणी)** ननु हेतुमुक्त्वैवं वदन् न्यूनत्वेनैव निगृह्यते किमर्थान्तरेणेत्यत आह **अत्रेति** ॥ न्यूनादेरुद्भावनावसराभावात्, एतस्य च लब्धावसरत्वादिदमेवोद्भाव्यमित्यर्थः । न च न्यूनादेः कथमुक्तग्राह्यत्वमिति वाच्यम् । अन्तरापूरणशङ्कया तस्योच्यमानाग्राह्यत्वात् । अन्यथोद्भावयितुर्निरनुयोज्यानुयोगापत्तेः । तथाच अवसरासङ्करादेवास्यासङ्कर इति । न च न्यूनत्वोपेक्षणे पर्यनुयोज्योपेक्षणापत्तिः । उद्भावनावसरे तदनुद्भावने तत्सम्भवात् । नन्वर्थान्तरमदुष्टे दुष्टे वा वाक्ये उद्भाव्येत । आद्ये तादृशवाक्येऽर्थान्तरावतारासम्भव एव । स्वसाधने हि दोषं दृष्ट्वा तत्प्रच्छादनार्थं तदवतारात् । द्वितीये दोषमुपेक्ष्य नार्थान्तरोद्भावनस्योपयोगः । प्रत्युत पर्यनुयोज्योपेक्षणमासादयेदित्यनवसर एवैतदुद्भावनस्य । किञ्च दुष्टसाधने किमित्यर्थान्तरमवतारयेत् । न हि प्रतिज्ञान्तरादिभिरिवार्थान्तरावतारे पूर्वदोषः परिहृतो भवति । अन्यथा कपोलवादनमपि कुर्यादिति । मैवम् । स्वदोषस्य सतोऽसतो वा ज्ञातस्य निरोधित्सया एतदुक्तिसम्भवात् । पूर्वं च यत्र दोषभ्रमादस्यावतारः तत्प्रमानोऽपि यत्र प्रतिवादिना स दोषो न ज्ञातस्तत्राप्यसङ्कर इति । न च कपोलवादित्रतुल्यता । आकाङ्क्षाद्युपेतत्वेन आपाततः प्रतिपादकत्वात् । अर्थावधारणानन्तरं प्रकृतानन्वयज्ञानात् । न चैवं कपोलवादित्रादाविति विशेषात् । नन्वर्थान्तरमर्थान्तरेण परिहरतः किमुत्तरम् । न तावदर्थान्तरमेव । तत्रापि पुनस्तदुद्भावनेनोन्मत्तकेलिप्रसङ्गात् । न च मूकीभावनमेवोचितम् । उत्कृष्टानुत्कृष्टव्यवस्थानुपपत्तिप्रसङ्गात् । प्रत्युत परस्यैवावष्टम्भविजयः स्यात् । उच्यते । पूर्वनिग्रहविच्छिन्नासु कथासु पश्चादुपन्यासः कथाबाह्य एव । तादृशस्थले हि मध्यस्थेन निग्रहोद्भावने सर्वत्र कथाविच्छेदः । अन्यथा जल्पकस्यैवावष्टम्भविजयावधिः कथाव्यवहारः सर्वत्र स्यादिति ।

### *निरर्थकलक्षणम्*

**(टीका) अबोधकशब्दप्रयोगो निरर्थकम् । तच्च बहुप्रकारम् । कचटतपेत्यादिमातृकापाठमात्रं लिङ्गविभक्तिवर्णविपर्यासः कृत्तद्धितसमासाख्यातविपर्यासः भाषान्तरसङ्करश्चेत्यादि ।**

**(टिप्पणी)** निरर्थकं लक्षयति **अबोधकेति** ॥ यद्यप्यबोधकत्वं सामान्याभावः प्रकृतेऽसम्भवी । विशेषाभावस्तु बोधकपदसाधारणस्तथापि कथाप्रविष्टवाक्यजन्यशाब्दबोधविषयपदार्थानुपस्थापकशब्दत्वं

विवक्षितम् । यद्वा उभयवादिगृहीतसङ्केतिकपदान्यपदप्रयोगो निरर्थकम् । सङ्केतिपदस्थाने वृत्तिपदं वा प्रयोज्यम् । तेनोभयसिद्धलाक्षणिकपदेन व्यवहरतस्तदभावः स्वकल्पितलक्षणया भाषया वा वदतस्तदापातो लभ्यते । यत्र च भाषयैवोभयोः कथा तत्र वृत्त्यारोपात् (वृत्त्याशयात्) संस्कृतशब्दस्मरणाद्वेति । **मातृकेति** ॥ पदघटकवर्णमात्रमित्यर्थः । ननु निरर्थके कपोलवादित्रवन्नोक्तिसम्भवः प्रतीत्यनुपपत्तेरविशेषादिति चेन्न । वस्तुतोऽप्रतिपादकत्वेऽपि शब्देन प्रतिपादकत्वाभिमानेनोक्तिसम्भवात् । कपोलवादित्रे त्वतथात्वात् ।

**(टीका) कथञ्चित् ज्ञापकत्वात् कथमेतन्निग्रहस्थानमिति चेन्मैवम् । न हि कथञ्चिज्ज्ञापकत्वं शब्दधर्मः प्रकरणादिनैव तत्र ज्ञानोदयात् । भाषान्तरसङ्करोऽपि समसमयत्वाभावे निग्रहस्थानम् । अन्यथा ज्ञानसङ्गूहनार्थं स्वभाषया प्रत्यवतिष्ठमानं प्रति तदनभिज्ञस्योत्तराभावप्रसङ्गादिति ॥**

**(टिप्पणी) कथञ्चिदिति** ॥ यद्यपि क्वचित् कथञ्चिदपि ज्ञापकं नास्ति भाषायास्तथापि यत्रैव भाषो-त्थापिनानुमानादिद्वाराऽर्थप्रत्ययः तत्र कथं तन्निग्रहस्थानमित्याशयः । **न हि कथञ्चिदिति** ॥ शब्दोपस्थितस्यैव शाब्दबोधविषयत्वात् शब्दस्यान्यत्र बोधकताप्रयोजकीभूतव्यापारत्यागाच्चेति भावः । **प्रकरणादिनैवेति** ॥ न च अस्तु प्रकरणादितोऽपि क्वचित् तज्ज्ञानमिति वाच्यम् । तथा सत्यतिप्रसङ्गादिति भावः । ननूभयोर्भाषाभिज्ञयोर्यत्र भाषयैव कथनीयमिति समयबन्धस्तत्रापि निग्रहस्थानं स्यात् । न चेष्टापत्तिः । सामान्यलक्षणेनासङ्ग्रहादित्यत आह **भाषान्तरसङ्करोऽपीति** ॥ ननु तर्हि भाषान्तरसङ्करो निग्रहस्थानमेव मास्त्वित्यत आह **अन्यथेति** ॥ तथा च क्वचित् तन्निग्रहस्थानत्वमावश्यकमिति भावः ।

### *अविज्ञातार्थकलक्षणम्*

**(टीका) त्रिवारमुक्तेऽपि परिषत्प्रतिवादिभ्यामविज्ञातार्थबोधकपदप्रयोगोऽविज्ञा-तार्थकम् । तच्चतुर्विधम् । स्वतन्त्रमात्रसिद्धम्, रूढिमनपेक्ष्य केवलयोगेन प्रवृत्तम्, निर्णायकाभावेन संशयक्रान्तम्, अतिद्रुतोच्चारितं चेति ।**

**(टिप्पणी)** अविज्ञातार्थं लक्षयति **त्रिवारमिति** ॥ निरर्थकापार्थकव्यावर्तनाय बोधकेति । त्रिवारमिति यावता परिषद आकाङ्क्षानिवर्तनं तावत्परम् । लक्षणं तु त्रिवारमुक्तेऽपि परिषदविज्ञातार्थकपदप्रयोगो-ऽविज्ञातार्थमिति । प्रतिवादिनेति परिषद्बोधेऽपि प्रतिवादिना बुद्धमिति नाविज्ञातार्थत्वमिति शङ्काविधूननाय ।

वस्तुतस्तु न तल्लक्षणप्रविष्टं परिषदबोधे प्रतिवादिबोधस्यासम्भावितत्वात् । तन्मात्रबोधस्यानङ्गत्वाच्च । स हि किमर्थं स्वाबोधमाविष्कुर्यात् । स्वानिष्टत्वात् । यद्वेदमुच्चारयितृदोषोपलक्षणम् । तेनोद्भावयितुर्दोषाद् अनिश्चितपदभाववाक्यमविज्ञानार्थमिति लक्षणम् । ननु बोधकेति व्यर्थम् । न च निरर्थकापार्थकौ व्यावर्त्याविति वाच्यम् । तयोरप्येतदन्तर्भावसम्भवे तदुभयव्यावर्तनाय विशेषणानर्थक्यमिति चेत् । न । अशक्तिविशेषोन्नायकत्वेन पृथक्त्वे सिद्धे तयोरेव व्यावर्त्यत्वात् ।

ननु बोधकत्वं तत्कालेऽन्यदा वा । तदपि प्रतिवादिनो मध्यस्थस्य वा । नाद्यः । तत्काले बोधाभावात्। न द्वितीयः । अन्यदाऽपि बोधाभावेऽनिग्रहापत्तेरिति चेन्न । मध्यस्थबोधजनन-स्वरूपयोग्यत्वस्य विवक्षितत्वात् । स्वरूपयोग्यता तु गृहीतसङ्गतिकत्वे सत्यन्वितत्वमेव । रूढिमनपेक्ष्येत्यस्य विवरणं केवलयोगेनेति । तदपि पङ्कजादिपदप्रयोगेऽविज्ञानार्थत्वापत्तिवारणाय । तस्य रूढियोगाभ्यां प्रवृत्तेरिति । **निर्णायकभावेनेति** । विशिष्य प्रकरणाद्यभावाद् वादिवाक्ये तस्यानिश्चायकत्वाच्चेत्यर्थः । **अतिद्रुतेति** । अनाकलितपदविभागेत्यर्थः ।

**(टीका) आद्यं यथा 'स्फ्यकपालपुरोडाशादि' मीमांसकानाम् । द्वितीयं यथा 'कश्यपतनयाधृतिहेतुरयं त्रिणयनतनयासनसमाननामधेययुक्तः' इत्यादि । तृतीयं यथा 'श्वेतो धावति' इत्यादि ।**

**तत्राद्यं परस्परसिद्धान्ताभिज्ञताशौण्डीर्याभिमानेनोपादीयेतापि । उत्तरं तु नोपादेयमेव । ज्ञापनार्थत्वात् शब्दस्य । अनवधानादिशङ्कानिरासाय पुनर्वचनं प्राश्निकैरपेक्ष्यते । त्रिरिति नियमश्च । ततः परमज्ञानस्य वचनदोषहेतुत्वनिश्चयात् । न हि प्राश्निकापेक्षयोच्यमाने तेषामनवधानं सम्भवति । नापि परिषदविदुषी, येनादोषमपि न जानीयादिति ॥**

**(टिप्पणी) कश्यपतनयेति** ॥ कश्यपतनया भूमिः तद्धृतिहेतुः पर्वतोऽयमित्यर्थः । त्रिनयनतनयः कार्तिकेयः तदासनं शिखी मयूरः तत्समाननामधेयो वह्निः तद्युक्त इत्यर्थः । चतुर्थस्य तु यत्रैव शीघ्रमुच्चारणं तदेवोदाहरणमतो विशिष्य नोदाहृतम् । नन्वेकवारमुक्ते मध्यस्थाबोधेऽविज्ञानार्थत्वमस्त्विति त्रिवारमिति व्यर्थमित्यत आह **अनवधानादिशङ्कानिरासायेति** ॥ एकवारोक्त्याऽबोधस्य वक्तृदोषानिश्चायक-त्वादित्यर्थः । ननु वारत्रयोक्त्याऽप्यबोधस्य कथं वादिदोषनिश्चायकत्वं तावत्पर्यन्तमप्यनवधानसम्भवादत

आह **त्रिरिति** ॥ **नियमश्चेति** ॥ तदाकाङ्क्षयैव त्रिवारमुक्तत्वात् तदनवधानस्यासम्भावितत्वादित्यर्थः **अविदुषीति** ॥ अन्यथा (तथा सति) तत्रानधिकारादिति भावः ।

*अपार्थकलक्षणम्*

**(टीका) अनन्वितार्थवाचकपदादिप्रयोगोऽपार्थकम् ।**

**(टिप्पणी)** अपार्थकं लक्षयति **अनन्वितेति** ॥ अत्रानन्वितेत्यनेनान्वयवतोऽर्थान्तराद् भेदः । वाचकेत्यनेन निरर्थकाविज्ञातार्थकयोर्भेदः । तयोः पदार्थानुपस्थापकत्वात् । आदिपदाद् वाक्यपरिग्रहः । तेन यदा यदन्वयबोधाजनकपदार्थोपस्थितिजनको यः शब्दः स तत्र तदाऽपार्थक इति लक्षणम् । एतेन यथाश्रुतं व्यवहितान्वयापार्थकेऽव्याप्तिः, तत्र वस्तुगत्या पदार्थानामन्वितत्वाभावात् क्वचिदविज्ञातार्थकेऽतिव्याप्तिः, तत्राप्यनन्वितवाचकपदप्रयोगसत्त्वादिति दूषणं निरस्तं वेदितव्यम् । पदार्थानामनन्वितत्वाभावेऽपि तज्जनितपदार्थोपस्थितेरन्वयबोधाजनकत्वात् । अविज्ञातार्थके वाचकत्वस्याभावात् । न हि वाचकत्वं शक्तत्वमपि तु पदार्थोपस्थापकत्वम् । तच्च तत्र नास्त्येव । न च व्यवहितान्वये कथमव्याप्तिपरिहारः, अन्वयबोधाजनकत्वस्य तत्राभावात् । प्रतिवादिनस्ते यस्य च कदाचिदन्वयबोधदर्शनात् । 'यस्य येनाभिसम्बन्धो दूरस्थस्यापि तस्य सः' इति न्यायादिति वाच्यम् । यत्र ह्युपस्थित्यन्तरमादायान्वयबोधस्तत्र ह्यपार्थकम् । आद्योपस्थितावेवान्वयज्ञानाभावेऽपार्थकत्वात् । अत एव यदा तदेति प्रवेशः । तदा तस्यासङ्गाह्यत्वात् ।

**(टीका) तत् त्रिविधम् सर्वथाऽप्यसम्भवदन्वयं यथा 'दश दाडिमानि षडपूपाः कुण्डमजाजिनम्' इत्यादि । व्यवहितान्वयं यथा 'ओदनं स्नातो ग्रामं सरसि गत्वा अश्नाति' इत्यादि । सम्भवत्सर्वान्वयपक्षनिरासे सत्यसम्भवदन्वयं चेति ॥**

**(टिप्पणी) सर्वथाऽप्यसम्भवदन्वयमिति** ॥ न चानन्वितत्वगर्भं नापार्थकत्वमपि त्वन्वयबोधाजनकत्वगर्भम् । तथा च यदैव योग्यताप्रतिसन्धानं तदाऽन्वयबोधजनकत्वेन सर्वथान्वितबोधाजनकत्वं नास्तीति वाच्यम् । एतस्य निराकाङ्क्षत्वेन सर्वदैवान्वयबोधाजनकत्वादिति भावः । **व्यवहितान्वयमिति** ॥ व्यवहितोच्चरितपदार्थान्वयमित्यर्थः । यथा चात्र नाव्याप्तिस्तथोपपादितमधस्तात् । तृतीयमुदाहरति **सम्भवदिति** ॥ आदौ परिस्फुरत् सर्वान्वयपक्षनिरासानन्तरमयोग्यताज्ञानेनान्वयबोधाजनकमित्यर्थः । अनाकाङ्क्षाऽनासत्त्ययोग्यतानस्त्रैविध्यमिति भावः ।

### अप्राप्तकाललक्षणम्

**(टीका) विवक्षितक्रमविपर्यासोऽप्राप्तकालम् । अयं हि वादजल्पयोः क्रमः । सभ्यादिसङ्ग्रहपुरस्सरं कथानियमबन्धे कृते वादिना प्रमाणमभिधाय आभासोद्धारः कर्तव्यः । प्रतिवादिनापि वादिसाधनमनूद्य दूषयित्वा स्वपक्षे प्रमाणमभिधाय आभासोद्धारः कर्तव्य इति ।**

**(टिप्पणी)** अप्राप्तकालं लक्षयति **विवक्षितक्रमेति ॥** कथकसम्प्रदायागतक्रमेत्यर्थः । नन्वयं क्रम एव कथम् । वादिना प्रमाणमभिधायापि सभ्यादिसङ्ग्रहपुरस्सरं समयबन्धस्यैषु शक्यत्वात् । प्रतिवादिनापि प्रतिसाधनमभिधायाभासोद्धारे कृते स्थापनाया दूषयितुं शक्यत्वादिति । मैवम् । सभ्यादिसङ्ग्रहाभावे पक्षपरिग्रहाभावेन प्रमाणस्य तदानीमनाकाङ्क्षितत्वात् । प्रतिवादी च यदि परपक्षमदूषयित्वा प्रतिस्थापनमारभेत तदा वादिसाधनेन प्रतिस्थापना मूर्च्छितैवोत्पद्येत । तथा च कथं साधिका स्यात् । दूषणाभिधाने तु वादिपक्षनिरासेन निष्प्रतिपक्षा प्रतिस्थापना स्वकार्यसाधिकेत्यस्य क्रमे मानत्वादिति भावः ।

**(टीका) तत्र यदि वादी साधनमुक्त्वा कथानियमबन्धनमिच्छति [1]तदाऽरम्भ-विपर्यासः । यदाऽऽभासोद्धारानन्तरं साधनं प्रयुङ्क्ते तदा [2]वादांशविपर्यासः । प्रतिवादी च यदा स्वपक्षे साधनमभिधाय परपक्षं दूषयति तदा [3]वादविपर्यासः । धूमवत्त्वात् पर्वतोऽग्निमान् इत्याद्यवयवविपर्यासः । अग्निमान् पर्वत इत्याद्यव-यवांशविपर्यासः ।**

**(टिप्पणी) वस्तुविपर्यास इति ॥** नियमबन्धस्य कथानन्तर्भूतत्वेन पादत्वाभावादिति भावः । **पादांशविपर्यास इति ॥** कथायाश्चत्वारः पादाः । वादिना सिषाधयिषितसिद्ध्यर्थं हेतुप्रयोगः कर्तव्यः, समस्त-हेत्वाभासशङ्काकलङ्कनिरासरूपः कण्टकोद्धारश्च कर्तव्य इत्येकः पादः । तावतोऽवान्तरवाक्यत्वात् । ततः प्रतिवादिना तस्योपालम्भो द्वितीयः पादोऽपरः । तस्याप्यवान्तरैकवाक्यत्वात् । ततस्तेन स्वपक्षहेतुप्रयोग-स्तत्र हेत्वाभासशङ्कानिरासश्च कर्तव्य इति तृतीयः पादः । पूर्ववन्मिलित्वैकवाक्यत्वात् । न हि परोक्ते दूषितेऽपि साधनं विना साध्यसिद्धिः । चतुर्थस्तु कथायाः पादो जयपराजयादिव्यवस्थापनं सर्वफलरूपः । नथेह निग्रहानुपयुक्तत्वान्न गणितः । उत्तरकालीनत्वात् (च) । तत्र वादी यदि प्रथमत एव हेत्वाभासानुद्धरति

---

१. टिप्पणीरीत्या वस्तुविपर्यास इति भवितव्यमिति भाति ।  २. वादांश इति स्थाने पादांश इति पाठः ।

३. वादविपर्यास इति स्थाने पादविपर्यास इति पाठः ।

पश्चाद् हेतुं प्रयुङ्क्ते तदा पादांशविपर्यासः । हेत्वाभासोद्धारसाधनप्रयोगयोः पादांशत्वात् । न चैवं विपर्यासस्य दोषत्वं कथमिति वाच्यम् । नहि स्थापनामकृत्वा कण्टकोद्धारो युज्यते तद्विषयानुपस्थापनादिति भावः । **पादविपर्यास इति** ॥ प्रतिवादिस्थापनादिदूषणोद्भावनयोः प्रत्येकं पादत्वादिति भावः । यथा चैवं विपर्यासस्य दोषत्वं तथोपपादितमधस्तात् ।

**(टीका) वितण्डायां तु प्रतिवादिनः स्वपक्षसाधनाभावात् वादविपर्यासाभाव इति ॥**

**(टिप्पणी) वितण्डायां त्विति** । यद्यपि वितण्डायामपि यदा स्थापनामकुर्वाण एव वादिनि वैतण्डिको दोषमुद्भावयति तदा पादविपर्यासः सम्भवत्येव । तथापि तस्यात्यन्तमसम्भावितत्वेनागणनादिति भावः ।

**(टीका) अवश्योपादेयानामन्यतमानुपादानं न्यूनम् । तदपि बहुप्रकारम् । कथासमयबन्धमकृत्वा साधनप्रयोगे आरम्भन्यूनम् । साधनमप्रयुज्याभासोद्धारे, तत्प्रयुज्य चाभासानुद्धारे अनुकूलतर्कानुक्तौ च [1]पादांशन्यूनम् । प्रतिवादिनाऽपि वादिसाधनमदूषयित्वा स्वपक्षसाधनाभिधाने, दूषयित्वा वा तदनभिधाने वादन्यूनम् । प्रतिज्ञाद्यवयवाभावे अवयवन्यूनम् । धर्म्याद्यनुक्तावvयवांशन्यूनम् ।**

**(टिप्पणी)** न्यूनं लक्षयति **अवश्योपादेयानामिति** ॥ स्वस्वसिद्धान्तेऽवश्योपादेयाभिमतानुपादानं न्यूनमित्यर्थः । तेन बौद्धस्य त्र्यवयवप्रयोगे न न्यूनत्वम् । तत्सिद्धान्तेऽन्यावयवानामवश्योपादेयत्वोपगमाभावादिति । [1]**पादांशन्यूनमिति** ॥ न चायं पादांशविपर्यास एव । विपर्यासो हि द्वितीयोक्तौ, अनुक्तौ न्यूनमेवेति भावः । [1]विमपसिद्धान्त एव । न हि सिद्धान्तविरुद्धकरणमपसिद्धान्तः । तथात्वे सर्वनिग्रहस्थानानामपि तथात्वप्राप्तेः । किं नाम तदभ्युपगमो वस्तुतत्वानुसारेण वेति ॥

**(टीका) इदं च तत्तत्सिद्धान्तरीत्योद्भावनीयम् । न चैवमपसिद्धान्त एव । न हि सिद्धान्तविरुद्धकरणमपसिद्धान्तः । तथात्वे सर्वनिग्रहस्थानानामपि तथात्वप्राप्तेः । किं नाम तदभ्युपगमो वस्तुतत्वानुसारेण वेति ॥**

**(टिप्पणी)** ननु बौद्धस्य प्रतिज्ञाया अभावेन सर्वदैव न्यूनेन निग्रहः स्यादत आह **इदं चेति** ॥ तथाच यस्य मते यावत् साधनाङ्गत्वेन व्यवस्थापितं तस्य मते तावदवचने न्यूनत्वमुद्भावनीयमित्यर्थः ।

---

[1]. वादांश इति प्रचलितपाठः ।

**एवमिति ॥** सिद्धान्तविरुद्धत्वज्ञानावश्यकत्व इत्यर्थः । परिहरति **न हीति ॥ सर्वनिग्रहेति ॥** अदुष्टसाधनं वक्तव्यमिति सिद्धान्तविरुद्धकरणादिति भावः । **तदभ्युपगम इति ॥** सिद्धान्तविरुद्धाभ्युपगमोऽपसिद्धान्त इत्यर्थः । प्रकृते न्यूनत्वमेव कर्तुमर्हतीत्यभ्युपगमाभावान्नापसिद्धान्त इति भावः । **वस्तुतत्वानुसारेण वेति ॥** अपसिद्धान्त इति शेषः । प्रकृते च प्रतिज्ञा कर्तव्येति तत्वग्यानिश्चयेनापसिद्धान्तनिश्चयाभावान्निश्चितं न्यूनत्वमेव दोष इति भावः।

## *अधिकलक्षणम्*

**(टीका) अन्वितोपयुक्तापुनरुक्तकृतकार्यप्रयोगोऽधिकम् । तत्पञ्चविधम् । हेतूदाहरणोपनयदूषणानुवादाधिकभेदेन । प्रतिज्ञानिगमनयोराधिक्यम् एकार्थत्वे पुनरुक्तम्, अन्यार्थत्वे प्रकृतसङ्गतावर्थान्तरम्, असङ्गतावपार्थकम् । द्विविधं चैतत् विशेषतः सामान्यतश्च ।**

**(टिप्पणी)** अधिकं लक्षयति **अन्वितेति ॥** अपार्थकार्थान्तरपुनरुक्तव्यावर्तनाय यथाक्रमं विशेषणानि । ननु प्रतिज्ञानिगमनयोराधिक्येन मिलित्वा सप्तविधत्वं सम्भवतीत्यत आह **प्रतिज्ञानिगमनयोरिति ॥** तथाच असङ्कीर्णस्थलाभावान्न तयोः पृथग् दोषत्वमिति भावः । **तदिति ॥** पञ्चविधमपीत्यर्थः । **विशेषत इति ॥** हेतुतावच्छेदकादिनेत्यर्थः । **सामान्यत इति ॥** तदनवच्छेदकादिनेत्यर्थः ।

**(टीका) तत्राऽद्यं यथा 'धूमवत्त्वादालोकविशेषवत्त्वादिति, धमूवत्त्वादेः' इति वा । द्वितीयं यथा 'यथा महानसः पाकस्थानमिति, यथा महानसादिः' इति वा । तृतीयं यथा 'तथा चायं धूमवानालोकविशेषवानिति, धूमादिमान्' इति वा । चतुर्थं यथा 'अनैकान्तिको हेतुः कालातीतश्चेति, अनैकान्तिकादिः' इति वा । पञ्चमं तु अदूष्यभागस्य स्ववचनेनानुवादः आदिशब्देन वेति ॥**

**(टिप्पणी)** पञ्चविधमपि यथाक्रमं विधाद्वयेन प्रत्येकमुदाहरति **तत्राद्यं यथेति ॥** हेत्वधिकमित्यर्थः । आलोकसामान्यस्य वह्न्यनुमापकत्वादाह **आलोकविशेषवत्त्वादिति ॥ द्वितीयमिति ॥** उदाहरणाधिकमित्यर्थः । **महानसादिरिति ॥** यद्यप्यतद्गुणसंविज्ञानबहुव्रीहिपक्षे महानसभिन्नस्यैकस्यैव दृष्टान्तत्वान्नाधिक्यम् । न चैवं लक्षणा । निरूढलक्षणाया

वादिवाक्येऽप्यङ्गीकृतत्वादिति । तथापि भूवादयो धातव इतिवत् तद्गुणसंविज्ञानबहुव्रीहिमभिप्रेत्यैतदुक्तम् । **तृतीयमिति** ॥ उपनयाधिकमित्यर्थः । **चतुर्थमिति** ॥ दूषणाधिकमित्यर्थः । **पञ्चममिति** ॥ अनुवादाधिकमित्यर्थः । असमयबन्धश्च त्वया परिगृहीत इति वा त्वदुक्तहेत्वादिकमिति वा उदाहरणं द्रष्टव्यम् ।

### *पुनरुक्तलक्षणम्*

**(टीका) प्रतीतार्थस्य पुनः स्ववचनेन प्रयोजनेन विना अभिधानं पुनरुक्तम् । तत् त्रिविधम् । अर्थतः शब्दतोऽप्याक्षेपतश्चेति । तत्राद्यं यथा 'पर्वतोऽग्निमान् गिरिर्वह्निमान्' इति । द्वितीयं यथा 'पर्वतोऽग्निमान् पर्वतोऽग्निमान्' इति । तृतीयं यथा 'जीवंश्चैत्रो गृहे नास्ति इत्युक्त्वा 'बहिरस्ति' इति ॥**

**(टिप्पणी)** पुनरुक्तं लक्षयति **प्रतीतार्थस्येति** ॥ तेन प्रतिपादितस्यार्थस्य तत्प्रतिपादनाधिकप्रयोजनं विना तेनैव प्रतिपादनं पुनरुक्तमित्यर्थः । तेन पुरुषान्तरप्रतिपादितानुवादे च नातिव्याप्तिः । अनुवादस्य सप्रयोजनत्वादिति । **अर्थत इति** ॥ प्रतिपादकतावच्छेदकशक्तिभेदत इत्यर्थः । तेन न शब्दपुनरुक्तातिव्याप्तिः । **आक्षेपत इति** ॥ व्याप्तिप्रतिसन्धानेनेत्यर्थः । **तृतीयं यथेति** ॥ यद्यपि व्याप्त्यप्रतिसन्धानदशायां प्रतीतार्थप्रत्यायनाभावादेतस्य न पुनरुक्तत्वं तथापि तत्प्रतिसन्धानदशाया-मेवैतन्निग्रहस्थानत्वम् । न च वादिनैतन्निग्रहस्थाननिरासाय कथं यतनीयं तद्व्याप्तिप्रतिसन्धानस्य पूर्वं निश्चेतुमशक्यतया निग्रहत्वानिश्चयादिति वाच्यम् । अनिष्टसन्देहेनापि निवृत्तिसम्भवादिति ।

### *अननुभाषणलक्षणम्*

**(टीका) वादिनोक्तस्य प्राश्निकैर्विज्ञातार्थस्य वादिना परिषदा वा पुनरनूद्य दत्तस्योच्चारणयोग्यस्य स्वाज्ञानमनाविष्कुर्वता कथामविच्छिन्दता यत् अप्रत्युच्चारणं तत् अननुभाषणम् । तत् पञ्चविधम् । यत्तदित्याद्यनुवादः दूष्यैकदेशानुवादः अन्यथाऽनुवादः केवलं दूषणोक्तिः तूष्णीम्भावश्चेति । सर्वं चैतन्निग्रहस्थानम् । तूष्णीम्भावे दूषणा-द्यप्रतीतेः, दूषणमात्राभिधाने निराश्रयदूषणस्यादूषकत्वात्, अन्यथाऽनुवादे व्यधि-करणत्वात्, दूष्यैकदेशानुवादे विशिष्टादूषणात्, यत्तदित्याद्यनुवादे अननुवादाविशेषात् । न च दूषणस्वरूपयोग्यतया दूष्यविशेषसिद्धिः ।**

**(टिप्पणी)** अननुभाषणं लक्षयति **वादिनोक्तस्येति** ॥ अत्र प्राश्निकैर्विज्ञातस्येत्यविज्ञातार्थत्वव्यवच्छेदाय । अनूद्य दत्तस्येति तद्दोषत्वव्यवच्छेदाय । उच्चारणयोग्यस्येति चाज्ञानव्यवच्छेदाय स्वाज्ञानमनाविष्कृत्येति । विक्षेपव्यवच्छेदाय कथामविच्छिद्येत्याद्युपात्तम् । तात्कालिकरोगादिरहितेनेत्यपि पूरणीयम् । **अननुवादाविशेषादिति** ॥ ननु सर्वनाम्नो बुद्धिस्थवाचकतया हेतोश्च बुद्धिस्थत्वेन परामर्शसम्भवात् कथमननुवादाविशेष इति वाच्यम् । सर्वस्यैव बुद्धिस्थत्वेन विशिष्य परामर्शासम्भवादिति भावः । न च हेतोरेव दूष्यत्वेन दूषणसमभिव्याहृतयत्पदात् हेतुरेवोपतिष्ठत इत्यत आह **न च दूषणेति** ॥

**(टीका) सन्दिग्धत्वादिना सर्वस्यापि दूष्यत्वात् । योग्यमेवायं ब्रवीतीति नियमाभावात् । न च पश्चममज्ञानमप्रतिभा वा । ज्ञातार्थस्य स्फुरदुत्तरस्यापि सभाक्षोभादिना तूष्णीम्भावोपपत्तेः । तथाच अननुभाषणमेव निर्णीतं, नान्यदिति ॥**

**(टिप्पणी) सन्दिग्धत्वादिनेति** ॥ तथा च सन्दिग्धलक्षणदोषोद्भावने विशिष्य परामर्शः सम्भवतीति भावः । वादिवाक्यस्य सन्दिग्धाप्यत्वेनाक्षेपकत्वाच्चेत्याह **योग्यमेवायमिति** ॥ **न च पश्चममिति** । तूष्णीभाव इत्यर्थः । परिहरति **ज्ञातार्थस्येति** ॥ तथाच तयोरनिश्चिततयोद्भावयितुमशक्यत्वादिति भावः । **अननुभाषणमेव निर्णीतमिति** । उद्भावनीयमिति शेषः ।

*अज्ञानलक्षणम्*

**(टीका) वादिना त्रिरभिहितस्यापि परिषदा विज्ञातार्थस्य वाक्यस्यार्थाप्रतिपत्तिरज्ञानम् । तच्चाज्ञानम् आविष्करणेन ज्ञातव्यम् । यथा 'नास्यार्थो ज्ञायते मया' इति । अनाविष्करणे तु अननुभाषणमेव ॥**

**(टिप्पणी)** अज्ञानलक्षणमाह **त्रिरभिहितस्येति** ॥ **परिषदा विज्ञातार्थस्येति** अविज्ञातार्थव्यवच्छेदाय । योग्यानुपलब्धेरभावात् परज्ञानाभावः प्रत्यक्षेण निश्चेतुमशक्यः । अत आह आविष्करणेन ज्ञातव्य इति । तथा चानुमेयमेवेति भावः । आविष्कारशरीरमाह **यथेति** ॥ अनाविष्करणदशायां कथमनुमेयमत आह **अनाविष्करणे त्विति** ॥ न चैतदप्रतिभैव । तस्याननुभाषणोत्तरकालीनत्वादिति ।

*अप्रतिभालक्षणम्*

**(टीका) वादिनोक्तस्य प्रत्युत्तराप्रतिपत्तिरप्रतिभा । सा चानूद्य तूष्णीम्भाव एव । अनुवादाभावे त्वननुभाषणत्वात् । श्लोकपाठादावर्थान्तरप्रसङ्गात् इति ॥**

**(टिप्पणी)** अप्रतिभालक्षणमाह **वादिनोक्तस्येति** ॥ उत्तरावसरे वाद्युक्तप्रत्युत्तराप्रतिपत्त्युन्नायको व्यापारोऽप्रतिभेति लक्षणार्थः । नेन तूष्णीम्भावस्य सूचकं केशविरचनादिकमेवाप्रतिभेति लक्ष्यते । अन्यथा तूष्णीम्भावस्य प्रतिपत्त्यभावरूपत्वाभावादुत्तरग्रन्थस्यासङ्गतत्वापत्तेः । अनूद्येत्यस्य व्यावर्त्यमाह **अनुवादाभाव इति** ॥ **श्लोकपाठादाविति** ॥ प्रकृतानन्वितत्वे प्रकृतानुपयुक्तत्वे वाऽर्थान्तरमनन्वितत्वेऽपार्थकं पदार्थानुपस्थापकत्वे निरर्थकमित्यर्थः । तथाच शब्दरूप एव व्यापारोऽप्रतिभेति भावः ।

## *विक्षेपलक्षणम्*

**(टीका) केनचित् व्याजेन कथाविच्छेदो विक्षेपः । यथा 'अद्य मे महत् प्रयोजनमस्ति । तस्मिन्नवसिते वक्ष्यामि' इति ॥**

**(टिप्पणी)** विक्षेपलक्षणमाह **केनचिदिति** ॥ उभयानुमत्या प्रवर्तितायां कथायां व्याजेन तद्विच्छेदो विक्षेपः । नेन कथाप्रवृत्तिपूर्वं कथां परिहरता न विक्षेपावकाशः । व्याजमेवाह **यथेति** ॥ इदमुपलक्षणम् । सभातोऽपसारणादिकमपि द्रष्टव्यम् ।

## *मतानुज्ञालक्षणम्*

**(टीका) अनिष्टप्रसङ्गेनेष्टापादनं मतानुज्ञा । यथा केनचित्स्वस्य चोरत्वमभ्युपेत्य 'त्वं चोरः पुरुषत्वात्' इत्युक्ते 'तर्हि तवापि चोरत्वप्रसङ्गः' इति । न ह्यनेनात्मनश्चोरत्वं परिहृतम् । नाप्ययं प्रसङ्गः इष्टापत्तिरूपत्वात् इति ॥**

**(टिप्पणी)** मतानुज्ञां लक्षयति **अनिष्टप्रसङ्गेनेति** ॥ अत्र कथायामिति पूरणीयम् । तेन कथायामनिष्टप्रसङ्गेनेष्टापादनं मतानुज्ञेति लक्षणम् । कथाबहिर्भूततादृशे प्रसङ्गेऽतिव्याप्तेरिति । **स्वस्य चोरत्वमभ्युपेत्येति** ॥ अन्यथा पुरुषत्वस्य व्यभिचारप्रसङ्गादिति भावः । **नाप्ययं प्रसङ्ग इति** ॥ अनिष्टापादकस्तर्क इत्यर्थः । **इष्टापत्तीति** ॥ इष्टापादकस्यासत्तर्कत्वादित्यर्थः ।

## *पर्यनुयोज्योपेक्षणलक्षणम्*

**(टीका) अवश्योद्भाव्यतया प्राप्तनिग्रहस्थानानामनुद्भावनं पर्यनुयोज्योपेक्षणम् । न चेदमप्रतिभैव । स्फुरतोऽपि दोषस्याल्पत्वादिनोपेक्षणसम्भवात् । प्राश्निकैरुद्भाव्यमेतत् । वादिनैव वा 'अस्य व्यामोहायेदं मयोक्तं नानेन ज्ञातम्' इति ॥**

**(टिप्पणी)** अननुभाषणं लक्षयति **वादिनोक्तस्येति** ॥ अत्र प्राश्निकैर्विज्ञातस्येत्यविज्ञातार्थत्वव्यवच्छेदाय । अनूद्य दत्तस्येति तददोषत्वव्यवच्छेदाय । उच्चारणयोग्यस्येति चाज्ञानव्यवच्छेदाय स्वाज्ञानमनाविष्कृत्येति । विक्षेपव्यवच्छेदाय कथामविच्छिद्येत्याद्युपात्तम् । तात्कालिकरोगादिरहितेनेत्यपि पूरणीयम् । **अननुवादाविशेषादिति** ॥ ननु सर्वनाम्नो बुद्धिस्थवाचकतया हेतोश्च बुद्धिस्थत्वेन परामर्शसम्भवात् कथमननुवादाविशेष इति वाच्यम् । सर्वस्यैव बुद्धिस्थत्वेन विशिष्य परामर्शासम्भवादिति भावः । न च हेतोरेव दूष्यत्वेन दूषणसमभिव्याहृतयत्पदात् हेतुरेवोपतिष्ठत इत्यत आह **न च दूषणेति** ॥

**(टीका) सन्दिग्धत्वादिना सर्वस्यापि दूष्यत्वात् । योग्यमेवायं ब्रवीतीति नियमाभावात् । न च पञ्चममज्ञानमप्रतिभा वा । ज्ञातार्थस्य स्फुरदुत्तरस्यापि सभाक्षोभादिना तूष्णीम्भावोपपत्तेः । तथाच अननुभाषणमेव निर्णीतं, नान्यदिति ॥**

**(टिप्पणी) सन्दिग्धत्वादिनेति** ॥ तथा च सन्दिग्धलक्षणदोषोद्भावने विशिष्य परामर्शः सम्भवतीनि भावः । वादिवाक्यस्य सन्दिग्धाप्यत्वेनाक्षेपकत्वाच्चेत्याह **योग्यमेवायमिति** ॥ **न च पञ्चममिति** । तूष्णीभाव इत्यर्थः । परिहरति **ज्ञातार्थस्येति** ॥ तथाच तयोरनिश्चिततयोद्भावयितुमशक्यत्वादिति भावः । **अननुभाषणमेव निर्णीतमिति** । उद्भावनीयमिति शेषः ।

### *अज्ञानलक्षणम्*

**(टीका) वादिना त्रिरभिहितस्यापि परिषदा विज्ञातार्थस्य वाक्यस्यार्थाप्रतिपत्तिरज्ञानम् । तच्चाज्ञानम् आविष्करणेन ज्ञातव्यम् । यथा 'नास्यार्थो ज्ञायते मया' इति । अनाविष्करणे तु अननुभाषणमेव ॥**

**(टिप्पणी)** अज्ञानलक्षणमाह **त्रिरभिहितस्येति** ॥ **परिषदा विज्ञातार्थस्येति** अविज्ञातार्थव्यवच्छेदाय । योग्यानुपलब्धेरभावात् परज्ञानाभावः प्रत्यक्षेण निश्चेतुमशक्यः । अत आह आविष्करणेन ज्ञातव्य इति । तथा चानुमेयमेवेति भावः । आविष्कारशरीरमाह **यथेति** ॥ अनाविष्करणदशायां कथमनुमेयमत आह **अनाविष्करणे त्विति** ॥ न चैतदप्रतिभैव । तस्याननुभाषणोत्तरकालीनत्वादिति ।

### *अप्रतिभालक्षणम्*

**(टीका) वादिनोक्तस्य प्रत्युत्तराप्रतिपत्तिरप्रतिभा । सा चानूद्य तूष्णीम्भाव एव । अनुवादाभावे त्वननुभाषणत्वात् । श्लोकपाठादावर्थान्तरप्रसङ्गात् इति ॥**

**(टिप्पणी)** अप्रतिभालक्षणमाह **वादिनोक्तस्येति** ॥ उत्तरावसरे वाद्युक्तप्रत्युत्तराप्रतिपत्त्युन्नायको व्यापारोऽप्रतिभेति लक्षणार्थः । तेन तूष्णीम्भावस्य सूचकं केशविरचनादिकमेवाप्रतिभेति लक्ष्यते । अन्यथा तूष्णीम्भावस्य प्रतिपत्त्यभावरूपत्वाभावादुत्तरग्रन्थस्यासङ्गतत्वापत्तेः । अनूद्येत्यस्य व्यावर्त्यमाह **अनुवादाभाव इति** ॥ **श्लोकपाठादाविति** ॥ प्रकृतानन्वितत्वे प्रकृतानुपयुक्तत्वे वाऽर्थान्तरमनन्वितत्वेऽपार्थकं पदार्थानुपस्थापकत्वे निरर्थकमित्यर्थः । तथाच शब्दरूप एव व्यापारोऽप्रतिभेति भावः ।

### *विक्षेपलक्षणम्*

**(टीका) केनचित् व्याजेन कथाविच्छेदो विक्षेपः । यथा 'अद्य मे महत् प्रयोजनमस्ति । तस्मिन्नवसिते वक्ष्यामि' इति ॥**

**(टिप्पणी)** विक्षेपलक्षणमाह **केनचिदिति** ॥ उभयानुमत्या प्रवर्तितायां कथायां व्याजेन तद्विच्छेदो विक्षेपः । तेन कथाप्रवृत्तिपूर्वं कथां परिहरता न विक्षेपावकाशः । व्याजमेवाह **यथेति** ॥ इदमुपलक्षणम् । सभातोऽपसारणादिकमपि द्रष्टव्यम् ।

### *मतानुज्ञालक्षणम्*

**(टीका) अनिष्टभ्रमेणेष्टापादनं मतानुज्ञा । यथा केनचित्स्वस्य चोरत्वमभ्युपेत्य 'त्वं चोरः पुरुषत्वात्' इत्युक्ते 'तर्हि तवापि चोरत्वप्रसङ्गः' इति । न ह्यनेनात्मनश्चोरत्वं परिहृतम् । नाप्ययं प्रसङ्गः इष्टापत्तिरूपत्वात् इति ॥**

**(टिप्पणी)** मतानुज्ञां लक्षयति **अनिष्टभ्रमेणेति** ॥ अत्र कथायामिति पूरणीयम् । तेन कथायामनिष्टभ्रमेणेष्टापादनं मतानुज्ञेति लक्षणम् । कथाबहिर्भूततादृशे प्रसङ्गेऽतिव्याप्तेरिति । **स्वस्य चोरत्वमभ्युपेत्येति** ॥ अन्यथा पुरुषत्वस्य व्यभिचारप्रसङ्गादिति भावः । **नाप्ययं प्रसङ्ग इति** ॥ अनिष्टापादकस्तर्क इत्यर्थः । **इष्टापत्तीति** ॥ इष्टापादकस्यासत्तर्कत्वादित्यर्थः ।

### *पर्यनुयोज्योपेक्षणलक्षणम्*

**(टीका) अवश्योद्भाव्यतया प्राप्तनिग्रहस्थानानामनुद्भावनं पर्यनुयोज्योपेक्षणम् । न चेदमप्रतिभैव । स्फुरतोऽपि दोषस्याल्पत्वादिनोपेक्षणसम्भवात् । प्राश्निकैरुद्भाव्यमेतत् । वादिनैव वा 'अस्य व्यामोहायेदं मयोक्तं नानेन ज्ञातम्' इति ॥**

**(टिप्पणी)** पर्यनुयोज्योपेक्षणलक्षणमाह **अवश्योद्भाव्यतयेति** ॥ अवश्योद्भावनकाले प्राप्तनिग्रहानुद्भावनमित्यर्थः । **प्राश्निकैरुद्भाव्यमेतदिति** ॥ दुष्टोऽहमनेनोपेक्षित इति स्वकौपीनविवरणस्य वादिना कर्तुमनुचितत्वादिति भावः । ननु मध्यस्थैतन्निग्रहापरिस्फूर्तावनुद्भावनमेव स्यात्तद् आह **वादिनैव वेति** ॥ पूर्वोक्तदोषादन्यमुद्भावनप्रकारमाह **अस्येति** ॥ **व्यामोहायेति** ॥ न तु वस्तुतो ममाज्ञानमिति भावः ।

## *निरनुयोज्यानुयोगलक्षणम्*

**(टीका) अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं निरनुयोज्यानुयोगः । तच्चतुर्विधम् । छलं जातिः हान्याद्याभासोऽप्राप्तकाले ग्रहणश्चेति । छलजाती वक्ष्येते । हान्याद्याभासो द्विविधः । सर्वथा हान्याद्यभावप्राप्तौ तदुद्भावनम् अन्यप्राप्तावन्योद्भावनं चेति । तत्राद्योऽपि द्विविधः । सादृश्यादिना भ्रान्त्यै, व्यामोहनाय वेति । द्वितीयो भ्रान्त्यैव । भ्रान्त्या यथा, अनेककल्पस्फुरणेन विकल्पयतोऽनिष्टकल्पत्यागे प्रतिज्ञाहानिरित्यादि । द्वितीयो यथा । प्रतिज्ञाहान्यादौ प्रतिज्ञान्तरादि इत्यादि ।**

**(टिप्पणी)** निरनुयोज्यानुयोगं लक्षयति **अतन्निग्रहेति** ॥ अनापतितनिग्रहाभियोग इत्यर्थः । आदिपदात् प्रतिज्ञान्तरादिसङ्ग्रहः । **तत्राद्योऽपीति** ॥ अप्राप्तहान्याद्याभास इत्यर्थः । सादृश्यादिनेति कारणस्वरूपनिर्वचनमात्रम् । **भ्रान्त्यैवेति** ॥ परव्यामोहनस्य प्राप्तनिग्रहेणापि कर्तुं शक्यत्वादिति भावः । अप्राप्तहान्याद्याभासमुदाहरति **यथेति** ॥ यदाऽनेककल्पविस्फुरणे सति विकल्पेनापादयति अनिष्टकल्पत्यागे प्रतिज्ञाहानिः, प्रकरणाद्यापन्नविशेषणाविष्करणे प्रतिज्ञान्तरं, नञ्प्रयोगमात्रेण विरोधः, आरोपितानभ्युपगममात्रेण संन्यासः, स्वयमुपगृहीतस्य विशेषणस्योत्कीर्तने हेत्वन्तरं, वस्तुतः प्रकृतानुगुण्येऽप्यापाततः तथाऽनध्यवसायेनार्थान्तरम्, आत्मनोऽवैयाकरणत्वेनावाचकपदप्रयोगेऽवाचकत्वाभियोगेन निरर्थकम्, आत्मनः परिषदेकदेशस्य वाऽनवबोधमात्रेण अविज्ञातार्थं, तदा अप्राप्तहान्याद्याभास इत्यर्थः । अन्यप्राप्तावन्योद्भावनमित्यर्थः ।

**(टीका) तत्तदुद्भावनावसरमप्राप्य अतिक्रम्य वा तन्निग्रहस्थानोद्भावनं अप्राप्तकाले ग्रहणम् । अनुक्तोच्यमानोक्तग्राह्यभेदात् त्रिविधो ह्युद्भावनकालः । तत्रोच्यमानग्राह्यमुत्तरमुद्भावयतो निग्रहस्थानम् इत्यादि ॥**

**(टिप्पणी)** चतुर्थमाह **तदुद्भावनावसरमिति** ॥ अवसरमेवाह **अनुक्तेति** ॥ अनुक्तग्राह्योच्यमानग्राह्योक्तग्राह्यभेदादित्यर्थः । **तत्रेति** ॥ उच्यमानग्राह्यमपशब्दविरोधाप्राप्तकालादिकम् उक्तिसमाप्तावुद्भावयतो

निग्रहस्थानम् । उक्तग्राह्यं हेत्वाभासादिकम् उच्यमान एव उद्भावयतो निग्रहस्थानमित्यर्थः ।

*अपसिद्धान्तलक्षणम्*

**(टीका) यत्किञ्चिच्छास्त्रसिद्धान्तमभ्युपेत्य तद्विरुद्धाङ्गीकारः अपसिद्धान्तः । प्रामाणिकतया अङ्गीकृतोऽर्थः सिद्धान्तः । स चतुर्विधः । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तभेदात् । सर्वशास्त्राविरुद्धोऽर्थः सर्वतन्त्रसिद्धान्तः । यथा प्रत्यक्षं प्रमाणमिति ।**

**(टिप्पणी)** अपसिद्धान्तं लक्षयति **यत्किञ्चिदिति** ॥ सकलशास्त्राभ्युपगमेन कथाया अप्रवृत्तेरसम्भवाच्च यत्किञ्चिच्छास्त्रेति । इदं तु न लक्षणप्रविष्टं, व्यर्थत्वात् । अभ्युपेतसिद्धान्तविरुद्धाभ्युपगमोऽपसिद्धान्त इत्येव लक्षणम् । नन्वयं बाध एव, कुतो निग्रहस्थानान्तरत्वमत आह **प्रामाणिकतयेति** ॥ वस्तुतः प्रामाणिकतया अधिकबलत्वेन तस्य प्रवृत्तिरेतस्य तु वस्तुतस्तदभावेऽपि प्रामाणिकत्वाङ्गीकारमात्रेण प्रवृत्तिरित्यनयो भेद इति भावः । **स्वशास्त्रेति** ॥ कथाप्रयोजकेनाङ्गीकृतप्रमाणभावशास्त्रेत्यर्थः ।

**(टीका) स्वशास्त्रमात्रसिद्धोऽर्थः प्रतितन्त्रसिद्धान्तः । यथा नैयायिकानामीश्वरप्रामाण्यम् । एकस्य सिद्धावानुषङ्गिको योऽर्थः सोऽधिकरणसिद्धान्तः । यथा ईश्वरस्य सर्वकर्तृत्वसिद्धौ सार्वज्ञम् । शास्त्रान्तरे परीक्षितः स्वशास्त्रे चानिषिद्धोऽभ्युपगमसिद्धान्तः । यथा मनस इन्द्रियत्वम् ।**

**(टिप्पणी) ईश्वरप्रामाण्यमिति** ॥ यद्यपि नायं प्रतितन्त्रसिद्धान्तः । नैयायिकाङ्गीकृतप्रमाश्रयत्वलक्षणप्रामाण्यस्यान्यैरपि स्वीकारात् । तथापि वैदिकप्रमासमाश्वासहेतुत्वमेव प्रामाण्यपदेन विवक्षितम् । अन्यैर्वेदजन्यत्वेनैव समाश्वासाङ्गीकारात् यद्वा मात्रपदस्य सर्वशास्त्रमेव व्यवच्छेद्यम् । तेन सर्वशास्त्रानभ्युपेतत्वे सति कथाप्रवर्तकेनाभ्युपगतशास्त्राभ्युपगतोऽर्थः प्रतितन्त्रसिद्धान्तः । अधिकरणाभ्युपगमसिद्धान्तयोरभ्युपगमाभावादेतत्पार्थक्यमिति भावः । **आनुषङ्गिक इति** ॥ यत्सिद्धिमन्तरेण नैतत्सिद्धिरित्यर्थः । शास्त्रान्तरे वैशेषिकशास्त्रे इत्यर्थः ।

**(टीका) अपसिद्धान्तोऽप्यतश्चतुर्विधः । यथा— 'इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते' इति प्रतितन्त्रसिद्धान्तमभ्युपगतवतो मीमांसकस्य सर्गप्रायाभ्युपगम**

**इत्यादि । न चायं प्रमाणविरोधः । उभयोस्तदाचार्योक्तौ प्रामाण्यासम्मतेः । तत्रैव प्रमाणविरोधप्रसरात् । मूलप्रमाणे च सन्देहादिति ॥**

**(टिप्पणी) अपसिद्धान्तोऽपीति** ॥ प्रतियोगिचातुर्विध्येन अभावस्यापि चातुर्विध्यमित्यर्थः । प्रतितन्त्रापसिद्धान्तमुदाहरति **यथेति** ॥ **दृष्टान्ताधिकमिति** ॥ नेन संसारस्य नानात्वनन्तत्वमित्यर्थः । **इत्यादीति** ॥ प्रत्यक्षं न प्रमाणमिति सर्वतन्त्रापसिद्धान्तः । ईश्वरस्य सर्वकर्तृत्ववादिमते तदसार्वज्ञमधिकरणापसिद्धान्तः । नैयायिकस्य मनसोऽनिन्द्रियत्वाभ्युपगतावभ्युपगमापसिद्धान्त इत्यर्थः । **उभयोरिति** ॥ वादिनोरन्यतराचार्योक्तौ प्रमाणत्वानभ्युपगमादित्यर्थः । **तत्रैवेति** ॥ प्रमाणत्वाभ्युपगमे सत्येवेत्यर्थः । ननु वादिनोरनिश्चयेऽपि स्वाचार्योक्तौ स्वस्य प्रामाण्यसम्मतेस्तन्मतेनैव विरोधोद्भावनमस्त्वित्यत आह **मूलप्रमाणे च** । तथा च मूलप्रमाणे प्रमाणत्वसन्देहात् तन्मूलकोक्तावपि तत्सन्देह इति भावः । न च वस्तुगत्या सन्देहेऽपि वाद्यभ्युपगमानुसारेण प्रतिवादिना विरोधोद्भावनं शक्यत एव कर्तुमिति वाच्यम् । पुरःस्फूर्तिकतयाऽभ्युपगमविरोधस्यैवोपजीव्यत्वेन दोषत्वादिति ।

**(टीका) हेतोरुक्तरूपेषु पक्षव्यापकत्वादिषु कैश्चिद्युक्ताः केनचिद्रहिता हेत्वाभासाः।**

**(टिप्पणी)** हेत्वाभासलक्षणमाह **हेतोरिति** ॥ पक्षव्यापकत्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वादिष्वित्यर्थः । कैश्चिद्युक्ता इति वस्तुगतिमनुरुध्योक्तम् । सकलरूपाभावस्यैकत्रासम्भवात् । न तु लक्षणप्रविष्टम् । लक्षणं तु केनचिद्रहिता इत्येव । ननु केनचिद्रहिता इत्यस्य पक्षव्यापकत्वाद्यन्यतररहिता इत्यर्थः पर्यवस्यति । अयं च न लक्षणम् । केवलान्वयिनि विपक्षस्याप्रसिद्धत्वेन तद्विशिष्टलक्षणस्याप्यप्रसिद्धत्वात् । न च सद्विपक्षभिन्नत्वं विवक्षितं तच्च केवलान्वयिन्यप्यस्तीति वाच्यम् । तथापि केवलव्यतिरेकिण्यव्याप्तेः । तत्र सपक्षसत्वस्याभावात् । किञ्चाज्ञानरूपासिद्ध्यव्यापकमिदम् । अज्ञायमानतादशायां सद्धेतौ वस्तुगत्या पक्षव्यापकत्वादिसत्त्वात् ।

अपि चेदं हेत्वाभासपदप्रवृत्तिनिमित्तं वा प्रतिबन्धकज्ञानविषयतावच्छेदको धर्मो वा प्रतिबन्धकतावच्छेदकधर्ममात्रं वा । नाद्यः । अज्ञायमाने सद्धेतौ हेत्वाभासपदप्रयोगाभावात् । न च सामान्यलक्षणेन तस्य असङ्ग्राह्यत्वमेव । विशेषलक्षणेनाग्रे तत्सङ्ग्रहविरोधात् । न द्वितीयः । व्याप्तिपक्षधर्मताप्रमितिविरहस्य ज्ञायमानस्यैव कारणाभावतया प्रतिबन्धकत्वात् । न तृतीयः । अज्ञायमानत्वस्य प्रतिबन्धकतानवच्छेदकत्वात् । कारणाभावादेव कार्याभावोपपत्तौ प्रतिबन्धकत्वाकल्पनादिति । मैवम् । केनचिद्रहिता इत्यनेनानुमित्यनुकूलराहित्यस्य लक्षणत्वेन विवक्षितत्वात् ।

अनुकूलत्वं च कारणतदवच्छेदकसाधारणम् । तेनाज्ञायमाने कारणीभूतज्ञानाभावात् ज्ञायमानेऽपि विषयतया ज्ञाने कारणतावच्छेदकव्याप्यादेरभावाल्लक्षणमयुक्तम् । न च केवलव्यतिरेक्यनिव्याप्तिः । तत्र सपक्षे सत्वस्यानुमित्यनुकूलत्वाभावात् । न चैतस्य पदप्रवृत्तिनिमित्तस्याज्ञायमानतादशायां सद्धेतावपि सत्वेन तत्रापि हेत्वाभासपदप्रयोगापत्तिः । इष्टत्वात् ।

## (टीका) ते च असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरण-समसत्प्रतिपक्षाः ।

**(टिप्पणी)** हेतुत्वं च द्विधा । स्वरूपयोग्यत्वलक्षणं फलोपधानलक्षणं च । तेन हेत्वाभासो द्विविध एव । तथा च प्रकृते फलानुपहितस्यैव हेत्वाभासत्वेन लक्ष्यत्वात् । यथा विरोधिसामग्रीकाले सद्धेतोरेव हेत्वाभासत्वेन सङ्ग्राह्यत्वमेवमज्ञायमानतादशायामपि हेत्वाभासत्वेन सङ्ग्राह्यत्वाविरोधात् । सद्धेतुत्वप्रतिसन्धानदशायामनुकूलराहित्याभावात् सिद्धितद्विषययोरुभयोरपि सत्त्वादिति दिक् । अनुमित्यनुकूलत्वरहितास्तेऽवान्तरोपाधिभिः कतीत्याकाङ्क्षायामाह **ते चेति** ॥

यद्यपि न्यायनयेन पञ्चैव हेत्वाभासाः सम्भवन्ति । तथाप्यनध्यवसितप्रकरणसमयोरनैकान्तिकमध्य एव समावेशात्, अनध्यवसितस्यानुपसंहारित्वात्, प्रकरणसमस्यासाधारणानैकान्तिकतुल्यत्वात्, सव्यभिचारस्य त्रिविधत्वात् साधारणासाधारणानुपसंहारिभेदात् । तथापि परिभाषायां परिभाषाकर्तुरिच्छाया एव तन्त्रत्वेन असाधारणानुपसंहार्ययोः साधारणभेदेनोपन्यासः । अन्यथा न्यायनये साक्षात्प्रतिबन्धकत्वेन बाधप्रतिरोधयोः, परामर्शविषयाभावत्वेनासिद्धविरुद्धानैकान्तिकानामुपसङ्ग्रहेऽपि द्वैविध्यापत्तेः । यदि च विरुद्धानैकान्तिकयोः परामर्शविषयाभावत्वेन अदूषकत्वात् प्रतिबन्धकता-वच्छेदकरूपेणोपन्यासः, एवं बाधसत्प्रतिपक्षयोरपीति तदा असाधारण्यानुसारेण पृथगुपन्यास इति समाधानम् । वस्तुतस्तु प्रत्येकमेव दोषत्वात् तदुद्भावने वादिनिवृत्तेश्च प्रत्येकमेवोपन्यास उचित इति । न चैवमाश्रयासिद्ध्यादेरपि प्रत्येकमेवोपन्यासः स्यात् प्रत्येकमेव दोषत्वादुद्भावने वादिनिवृत्तेश्चेति वाच्यम् । असिद्धित्वेनापि तदुद्भावनात् ।

नन्वेवं प्रकृते उभयकोट्युपस्थापकतावच्छेदकरूपत्वलक्षणेन सव्यभिचारत्वेनापि रूपेणोपन्यासः कुतो न कृत इति वाच्यम् । अस्थितस्य गतेर्निवारणीयत्वात् । न । स्वतन्त्रेच्छस्य निरनुयोगपर्यनुयोगानर्ह-त्वात् । एतेन यथाकथञ्चिद् विद्यमानधर्मेणानुपयोगिनापि विभागे बहवो हेत्वाभासा प्रसज्येरन्नित्यपास्तम् । अनुपयोगिधर्मेण विभागाभावात् । विभाजकस्य स्वतन्त्रेच्छत्वाच्च । **अनध्यवसितेति** ॥ व्याप्तिग्रहानुकूलसहचारधीरहितेत्यर्थः । **प्रकरणसमेति** ॥ विरोधिस्थापनायामपि सम इत्यर्थः ।

*असिद्धविभागः*

**(टीका)** तत्र व्याप्तस्य पक्षधर्मत्वप्रतीतिः सिद्धिः। तद्रहितोऽसिद्धः। स चतुर्विधः। व्याप्तपक्षतद्धर्मत्वैतत्प्रतीतिराहित्यभेदात्। तत्र व्याप्यत्वासिद्धो द्वेधा। स्वरूपतो वैयर्थ्येन चेति।

**(टिप्पणी) तत्रेति** ॥ विभक्तेषु मध्य इत्यर्थः। व्याप्तिपक्षधर्मतानिश्चयवतोऽपि व्याप्त्यादिरहितस्य अविरोधिसाध्यादिमत्त्वमादाय **प्रतीतिरिति** ॥ व्याप्त्यादिनिश्चयवतोऽपि व्याप्तेरभावात् प्रमित्यभावोऽविकल इत्यर्थः। **व्याप्तेति** ॥ व्याप्तिराहित्यपक्षराहित्यपक्षधर्मताराहित्यपक्षधर्मताप्रतीतिराहित्यभेदादित्यर्थः। **स्वरूपत इति** ॥ नियतसामानाधिकरण्याभावादित्यर्थः। **वैयर्थ्येन वेति** ॥ व्यर्थविशेषणत्वादित्यर्थः।

ननु व्याप्यत्वासिद्धस्य कथं पृथगुपन्यासः। स्वरूपतोऽसिद्धस्यानैकान्तिक एवान्तर्भावात्। व्यर्थविशेषणासिद्धस्य तु हेत्वाभासत्वमेव नास्ति। तथाहि। अनुमितिप्रतिबन्धकतया हि हेत्वाभासत्वम्। न च अस्य अनुमितिप्रतिबन्धकत्वं सम्भवति। व्यर्थविशेषणावच्छेदेन व्याप्त्यग्रहेऽपि विशेष्यतावच्छेदकावच्छिन्नव्याप्तिग्रहादनुमित्युत्पत्तौ बाधकाभावात्। न च यत्र विशेष्यतावच्छेदकमपि न व्याप्यतावच्छेदकं तत्रैवानुमितिप्रतिबन्धकत्वं स्यादिति वाच्यम्। तस्यानैकान्तिकमध्य एवान्तर्भावात्। न च स्वावच्छिन्नव्याप्तिग्रहप्रयुक्तानुमितिप्रतिबन्धकता हेत्वाभासत्वमिति वाच्यम्। न च स्वावच्छिन्नव्याप्तेरप्रसिद्धेरिति चेत्। न। कारणविघटकतया प्रतिबन्धके नियमतोऽनुमितिप्रतिबन्धकतया हेत्वाभासत्वाभावात्। साक्षात् प्रतिबन्धक एव तथाभावात्। अन्यथा यत्रालोकेन वह्निरनुमीयते धूमश्च स्वरूपसिद्धस्तत्र स हेत्वाभासो न स्यात्। वह्न्यनुमित्यप्रतिबन्धकत्वात्।

अथ कारणविघटके यत् कारणविघटकतया हेत्वाभासत्वं तद्विघटनमावश्यकम्, अनुमितिस्त्वन्यकारणसत्त्वादस्ति चेदस्तु नाम। न हि कारणतावच्छेदकावच्छिन्नयावद्विघटकस्य हेत्वाभासत्वमपि तु यस्मिन् सति कारणतावच्छेदकावच्छिन्नयत्किञ्चिद्विघटनमावश्यकं तस्यैव हेत्वाभासत्वम्। अत एव व्याप्तिप्रत्यक्षमात्रप्रतिबन्धकस्याप्यनुपसंहारिणो हेत्वाभासत्वम्। अन्यथा शाब्दव्याप्तिग्रहादौ तस्य योग्यतासंशयपर्यवसन्नत्वेनाप्रतिबन्धकतया हेत्वाभासत्वं न स्यात्। तथाच नियमेन धूमीयपक्षधर्मताज्ञानविघटकस्य धूमीयस्वरूपासिद्धस्त्वस्य कथं न हेत्वाभासत्वमिति यदि तदा प्रकृतेऽपि नियमेन स्वावच्छेदेन व्यापकतावच्छेदकावच्छिन्नप्रतियोगिकव्याप्तिविघटकस्य व्यर्थविशेषणस्य कथं न हेत्वाभासत्वमिति दीयतां दृष्टिः। यदि तल्लिङ्गकतत्साध्यकानुमितिनियतप्रतिबन्धकत्वादेव तस्य

हेत्वाभासत्वं तर्हि प्रकृतेऽपि तल्लिङ्गकतत्साध्यकानुमितिनियतप्रतिबन्धकत्वादेव हेत्वाभासत्वमिति समानम् । न च अवच्छेदकान्तरेणैतल्लिङ्गकाप्यनुमितिर्जायत एवेति वाच्यम् । तदवच्छिन्न-तल्लिङ्गकानुमितेः प्रतिबन्धात् । अन्यथा धूमत्वेन रूपेण व्याप्यतया ज्ञातस्य द्रव्यत्वेन व्यभिचारित्वं न स्यात् । अनुमित्यप्रतिबन्धकत्वात् । न च तदवच्छिन्नलिङ्गकानुमितेरप्रसिद्धिः । वैयर्थ्याप्रतिसन्धानदशायां तत्प्रसिद्धेरिति युक्तः पृथगुपन्यास इति ।

**(टीका) तत्राद्यो यथा 'यत् सत् तत् क्षणिकं यथा घटः' इति । व्यर्थविशेषणा-सिद्धो यथा 'शब्दोऽनित्यः सामान्यवत्त्वे सति कृतकत्वात्' इति । व्यर्थविशेष्यासिद्धो यथा 'कृतकत्वे सति सामान्यवत्वात्' इति ।**

**(टिप्पणी) मूर्तत्वादिति** ॥ अत्र नियतसामानाधिकरण्याभावो व्यभिचारादित्यर्थः । **सामान्यवत्त्वे सतीति** ॥ यद्यपि कृतकत्वस्य ध्वंसे व्यभिचारितया तद्वारकत्वेन न व्यर्थविशेषणता । तथापि कृतकत्वस्य सत्तावच्छिन्नजन्यत्वार्थकतया ध्वंसे व्यभिचाराभावेन व्यर्थत्वम् । यदि तु प्रागभावप्रतियोगित्वमात्रं कृतिजन्यत्वमात्रं तदा वह्निमानयं नीलधूमादित्युदाहरणं द्रष्टव्यम् । **कृतकत्वे सतीति** ॥ अत्रापि यदि कृतकत्वं पूर्वोक्तं तदेतमुदाहरणमन्यथा तु धूमवत्त्वे सतीन्धनवत्त्वाद् इत्युदाहरणं द्रष्टव्यमिति ।

**(टीका) आश्रयासिद्धो द्वेधा । धर्मिणः साध्यत्वस्य चाभावात् । तत्राऽद्यो यथा 'प्रधानं नित्यम् अकार्यत्वात्' इति । आश्रयैकदेशासिद्धो यथा 'प्रधानपुरुषौ नित्यौ अकार्यत्वात्' इति । द्वितीयो यथा 'परमाणवो नित्याः अकार्यत्वात्' इति । पक्ष-धर्मत्वासिद्धः पञ्चविधः । तत्र स्वरूपासिद्धो यथा 'शब्दोऽनित्यश्चाक्षुषत्वात्' इति । व्यधिकरणासिद्धो यथा 'घटस्य कृतकत्वात्' इति । विशेषणासिद्धो यथा 'चाक्षुषत्वे सति सामान्यवत्वात्' इति । विशेष्यासिद्धो यथा 'सामान्यवत्वे सति चाक्षुषत्वात्' इति । भागासिद्धो यथा 'प्रयत्नानन्तरीयकत्वात्' इति ।**

**(टिप्पणी)** पक्षासिद्धिमुदाहरति **आश्रयासिद्ध इति** ॥ **साध्यत्वस्येति** ॥ पक्षताया अभावादित्यर्थः । **प्रधानेति** ॥ यद्यप्यत्र पक्षताऽपि नास्ति तथापि पक्षस्याप्रसिद्धत्वे क्व पक्षताया अभावो निरूप्यतामित्येतस्य पार्थक्यमिति । **अकार्यत्वादिति** ॥ धर्मिग्राहकमानेन नित्यत्वसिद्धेः सिद्धसाधनेन पक्षताया अभाव इत्यर्थः । यद्यप्यनैकान्तिक एवायं विपक्षे प्रागभावेऽपि सत्वात् तथापि सत्वे सतीत्यपि पूरणीयमिति भावः । **पञ्चविध इति** ॥ यद्यपि प्रतिबन्धकतावच्छेदकभेदेन पञ्चविधत्वं नास्त्येव । सर्वत्र

स्वरूपासिद्धत्वस्य प्रतिबन्धकतावच्छेदकस्यैकत्वात् । प्रतिबन्धकतानवच्छेदकधर्मेणानेकत्वमेव । तथापि शिष्यबुद्धिवैशद्यार्थमिकदेशो(?)दाहरणं द्रष्टव्यम् । **व्यधिकरणासिद्ध इति** ॥ यद्यपि हेतोरभावः पक्षे नास्त्येव वादिवचनापराधेन तदज्ञानमस्ति तच्च तत्प्रतीतिराहित्य एवान्तर्भवति तथापि तत्सङ्कीर्णस्यैवोदाहरणं द्रष्टव्यम् । **प्रयत्नानन्तरीयकत्वादिति** ॥ शब्दजशब्दे प्रयत्नजन्यत्वस्याभावाद् भागासिद्धत्वमित्यर्थः ।

**(टीका) सन्दिग्धव्याप्यत्वासिद्धो यथा 'स श्यामो मित्रातनयत्वात्' । सोपाधिकत्वेन व्याप्यत्वसन्देहात् । सन्दिग्धाश्रयासिद्धो यथा । 'भविष्यद्देवदत्तपुत्रो ब्राह्मणः ब्राह्मणपुत्रत्वात्' इति । सन्दिग्धाश्रयैकदेशासिद्धो यथा 'देवदत्तः तद्भविष्यत्पुत्रश्च वेदयोग्यौ ब्राह्मणपुत्रत्वात्' इति । सन्दिग्धासिद्धो यथा, धूमबाष्पाविवेके 'पर्वतोऽग्निमान् धूमवत्वात्' इति ।**

**(टिप्पणी)** हेत्वाभाससन्देहोऽपि प्रतिबन्धक इति निश्चितासिद्धमुदाहृत्य पूर्ववत् सन्दिग्धासिद्धमुदाहरति **सन्दिग्धव्याप्यत्वासिद्ध इति** ॥ **सोपाधिकत्वेनेति** ॥ सन्दिग्धोपाधिकत्वेनेत्यर्थः । तथाच शाकपाकजत्वस्योपाधेर्यदा साध्यव्यापकत्वे साधनाव्यापकत्वे उभयत्र वा सन्देहस्तदा तत्प्रयुक्तव्याप्यत्वसन्देहो हेतावपीत्यर्थः । **भविष्यद्देवदत्तपुत्र इति** ॥ विनिगमनाभावेन बाधकाभावेन च देवदत्तपुत्रः सन्दिग्ध इत्यर्थः । **सन्दिग्धासिद्ध इति** ॥ सन्दिग्धपक्षधर्मत्वासिद्ध इत्यर्थः ।

**(टीका) सन्दिग्धविशेषणासिद्धो यथा 'विमतो रागादियुक्तः सर्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वात्' इति । सन्दिग्धविशेष्यासिद्धो यथा 'पुरुषत्वे सति सर्वदा तत्वज्ञानरहितत्वात्' इति । सन्दिग्धभागासिद्धो यथा । एकत्र धूमनिश्चये अन्यत्र अनिश्चये 'पर्वतावग्निमन्तौ धूमवत्त्वात्' इति । विशेषणवैयर्थ्यादौ सन्देहो न सम्भवति ।**

**(टिप्पणी)** कदाचित् तत्त्वज्ञानराहित्यमरागादिमतोऽपीत्यत आह **सर्वदेति** ॥ अत्र तत्त्वज्ञानराहित्यस्य निश्चेतुमशक्यतया सन्दिग्धविशेषणासिद्धत्वमित्यर्थः । परबुद्धेरयोग्यत्वेन तदभावस्यापि तथात्वादिति भावः । **विशेषणवैयर्थ्यादाविति** ॥ यद्यपि धूममात्रस्य व्यभिचारित्वसन्देहदशायां तत्प्रयुक्तो व्यर्थविशेषणत्वसन्देहो भवत्येव । तथापि तत्रोपजीव्यत्वाद् व्यभिचारित्वसन्देह एव दूषक इति न पृथगुदाहियत इति भावः । **न सम्भवतीति** ॥ असङ्कीर्ण इति शेषः ।

*विरुद्धलक्षणम्*

**(टीका) पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः। स द्विविधः। विद्यमानसपक्षोऽविद्यमानसपक्षश्चेति। प्रत्येकं चतुर्विधः। तत्र सति पक्षे पक्षविपक्षव्यापको यथा 'नित्यः शब्दः कार्यत्वात्' इति। पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा 'सामान्यवत्त्वे सति अस्मदादिबाह्यैकेन्द्रियग्राह्यत्वात्' इति। पक्षविपक्षैकदेशवृत्तिर्यथा 'प्रयत्नानन्तरीयकत्वात्' इति।**

(टिप्पणी) विरुद्धं लक्षयति **पक्षविपक्षयोरिति** ॥ पक्षविपक्षयोरिति पक्षसङ्कीर्णस्थलकथनाय। लक्षणं तु विपक्षमात्रवृत्तित्वम्। अन्यथाऽसिद्धिसङ्कीर्णविरुद्धाव्याप्तेः। शिष्यबुद्धिवैशद्यायाह **स द्विविध इति** ॥ **नित्य इति** ॥ सत्तावच्छिन्नध्वंसप्रतियोगित्वाभावादित्यर्थः। अन्यथा प्रागभावे विपक्षे कार्यत्वस्याभावेन विपक्षव्यापकत्वोपन्यासविरोधादिति। **पक्षव्यापक इति** ॥ शब्दो नित्य इत्यत्रेदं द्रष्टव्यम्। अन्यथाऽन्यशब्दस्य अयोग्यत्वेन हेतोः पक्षव्यापकत्वानुपपत्तिरिति। यद्वा सोऽपि योग्य इति यथाश्रुतमेव सम्यक्। तस्यैकक्षणवृत्तित्वेऽपि पूर्ववृत्तितया प्रत्यक्षत्वोपपत्तेः। विषयस्य समसमयवृत्तितयाऽकारणत्वादिति भावः।

**(टीका) पक्षैकदेशवृत्तिविपक्षव्यापको यथा 'पृथिवी नित्या कृतकत्वात्' इति।**

(टिप्पणी) **पक्षविपक्षैकदेशेति** ॥ शब्दो नित्यः प्रयत्नानान्तरीयकत्वादित्यं हेतुः शब्दशब्दे पक्षे अम्बरादौ विपक्षे नास्तीत्युभयाव्यापकत्वमित्यर्थः। **प्रयत्नानन्तरीयकत्वादिति** ॥ अदृष्टाद्वारकजन्यप्रयत्नानन्तरीयकत्वादित्यर्थः। यथाश्रुतस्य पक्षविपक्षाव्यापकत्वानुपपत्तेरिति। **पृथिवी नित्येति** ॥ नित्यत्वं पूर्ववत् सत्तासमानाधिकरणध्वंसप्रतियोगित्वाभाववत्त्वं बोध्यम्। अन्यथा विपक्षे व्यापकत्वानुपपत्तेरिति।

**(टीका) असति सपक्षे प्रथमो यथा 'शब्द आकाशविशेषगुणः प्रमेयत्वात्' इति। द्वितीयो यथा 'प्रत्यक्षत्वात्' इति। तृतीयो यथा 'प्रयत्नानन्तरीयकत्वात्' इति। चतुर्थो यथा 'अपदात्मत्वात्' इति॥**

(टिप्पणी) अविद्यमानसपक्षे विधाचतुष्टयं क्रमेणोदाहरति **असति सपक्ष इति** ॥ **प्रथम इति** ॥ पक्षविपक्षव्यापक इत्यर्थः। शब्दस्यैवाकाशगुणत्वात् तस्य च पक्षत्वात् सपक्षाभावः प्रमेयत्वस्य च

केवलान्वयित्वात् पक्षविपक्षव्यापकत्वमिति भावः । **द्वितीय इति** ॥ पक्षव्यापको विपक्षैकदेशवृत्तिरित्यर्थः । प्रतिज्ञा पूर्ववेति हेतुमात्रमुदाहरति **प्रत्यक्षत्वादिति** ॥ इदं च शब्दस्यापक्षत्वं प्रत्यक्षत्वं वाऽभिप्रेत्येष्टमन्यथा पक्षव्यापकत्वानुपपत्तेरिति । **तृतीयो यथेति** ॥ पक्षविपक्षैकदेशवृत्तिरित्यर्थः । शब्दजशब्दे पक्षे आकाशादौ विपक्षे हेतोरभावादुभयैकदेशवृत्तित्वमित्यर्थः । **चतुर्थ इति** ॥ पक्षैकदेशवृत्तिर्विपक्षव्यापक इत्यर्थः । पदस्यापि पक्षत्वात् तत्र हेतोरभावेनाकाशविशेषगुणभिन्नसर्वत्र सत्त्वेनोभयं द्रष्टव्यमिति ।

## *अनैकान्तिकविभागः*

**(टीका) पक्षत्रयवृत्तिरनैकान्तिकः ।**

**(टिप्पणी)** क्रमागतमनैकान्तिकं लक्षयति **पक्षत्रयवृत्तिरिति** ॥ अत्र सपक्षविपक्षवृत्तिरनैकान्तिक इत्येव लक्षणम् । पक्षवृत्तित्वमेव लिङ्गम् । अतः किमर्थं ग्रहणं त्वसङ्कीर्णस्थलकथनपरम् । अन्यव्यावर्त्याभावेन वैयर्थ्यप्रसङ्गादिति । नचैवं विपक्षवृत्तित्वमेव लक्षणमस्तु । विरुद्धेऽतिव्याप्तेः । न च असाधकत्वानुमितौ विपक्षवृत्तित्वविशिष्टं लक्षणमिति वाच्यम् । अविशिष्टस्यासाधकत्वानुमितिलिङ्गत्वे-ऽपीतरभेदानुमित्युपयोगित्वेन लक्षणे विशेषणस्य सार्थकत्वात् । प्रकृते दूषकतावच्छेदकस्या-विचारणीयत्वादिति ।

**(टीका) सोऽपि बहुविधः । तत्र पक्षत्रयव्यापको यथा । शब्दोऽनित्यः प्रमेयत्वात्' इति । पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा 'प्रत्यक्षत्वात्' इति । पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा 'अयं गौर्न गौर्विषाणित्वात्' इति । पक्षविपक्षव्यापकः सपक्षैक-देशवृत्तिर्यथा 'नायं गौर्विषाणित्वात्' इति । पक्षत्रयैकदेशवृत्तिर्यथा । 'पृथिवी नित्या प्रत्यक्षत्वात्' इति पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा 'आत्ममनसी द्रव्ये अमूर्त-त्वात्' इति । पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा 'आत्ममनसी न द्रव्ये अमूर्त-त्वात्' इति । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा 'आकाशात्ममनांसि द्रव्याणि क्षणिकविशेषगुणरहितत्वात्' इति ॥**

**(टिप्पणी)** अतिव्याप्तिशङ्कानिरासाय लक्ष्यं निर्दिशति **सोऽपि बहुविध इति** ॥ तथाच एतेषां सर्वेषामपि सङ्ग्राह्यत्वान्नातिव्याप्तिरिति भावः । **प्रमेयत्वादिति** ॥ एतस्य केवलान्वयित्वेन त्रितयव्यापकत्वमिति भावः । **अयं गौर्न गौरिति** ॥ पक्षे गोत्वग्रहणं शृङ्गिण एव पक्षत्वमिति सूचयितुम् ।

तेन पक्षे शृङ्गिणि विपक्षे च गवि सर्वतः सत्त्वात् विपक्षे च शशादौ चासत्त्वादुदाहरणमविकलमिति भावः । सपक्षव्यत्यासमात्रम् । उदाहरणं तु पूर्ववदेव द्रष्टव्यम् । **क्षणिकविशेषगुणरहितत्वादिति** ॥ पक्षे मनस्येव सत्त्वादाकाशात्मनोः पक्षत्वात् सपक्षे घटाद्ये विपक्षे च अद्रव्ये सर्वत्र सत्त्वाद् उदाहरणमक्षुण्णं द्रष्टव्यमिति ।

**(टीका) साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः । स च अनेकप्रकारः । तत्र अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा 'सर्वमनित्यं प्रमेयत्वात्' इति । पक्षैकदेशवृत्तिर्यथा 'कार्यत्वात्' इति । विद्यमानसपक्षविपक्षः पक्षव्यापको यथा 'शब्दो नित्यः आकाशविशेषगुणत्वात्' इति । तदेकदेशवृत्तिर्यथा 'सर्वं द्रव्यमनित्यं क्रियावत्त्वात्' इति । विद्यमानविपक्षोऽविद्यमानसपक्षः पक्षव्यापको यथा 'सर्वं कार्यमनित्यम् उत्पत्तिमत्त्वात्' इति । पक्षैकदेशवृत्तिर्यथा 'सावयवत्वात्' इति ।**

**एते च असिद्धचादयः उभयान्यतरसम्मत्या द्वेधा भवन्ति । विरुद्धादित्रयस्यासिद्धसाङ्कर्येऽपि उभयव्यवहारविषयत्वादविरोधः ॥**

**(टिप्पणी)** अनध्यवसितं निरूपयति **साध्यासाधक इति** ॥ अत्र व्यतिरेक्यतिव्याप्तिपरिहाराय साध्यासाधक इति स्वरूपासिद्धातिव्याप्तिवारणाय पक्षे वर्तमान इति विरुद्धेऽतिव्याप्तिवारणाय पक्ष एवेत्यादि विशेषणानि । तत्र तत्रातिव्याप्तिमाशङ्क्य तस्य तस्य लक्ष्यत्वमेवेत्यभिप्रायेणाह **स च अनेक इति** ॥ **अविद्यमानविपक्ष इति** ॥ अनित्यस्य सर्वस्यैव पक्षत्वेन साध्याभावानिश्चयादिति भावः । **द्विविधा इति** ॥ उभयसिद्धाऽन्यतरसिद्धा इत्यर्थः । ननु विरुद्धादित्रिकेऽसिद्धसाङ्कर्यात् पृथगुपन्यासः कथम्? इत्यत आह **विरुद्धेति** ॥ उभयव्यवहारविषयत्वादुभयसमावेशोऽपि विरुद्धत्वादीनामसिद्ध्युपजीव्यत्वेन पृथगुपन्यास इति भावः ।

### *कालात्ययापदिष्टविभागः*

**(टीका) प्रमाणबाधितविषयः कालात्ययापदिष्टः । सोऽप्यनेकविधः । तत्र प्रत्यक्षबाधितो यथा 'अग्निरनुष्णः पदार्थत्वात्' इति । प्रत्यक्षबाधितैकदेशो यथा 'जलानलौ शीतलौ पदार्थत्वात्' इति । अनुमानबाधितो यथा 'देवदत्तश्चक्षूरहितः पुरुषत्वात्' इति । अनुमानबाधितैकदेशो यथा 'देवदत्तश्चक्षुर्विषाणरहितः पुरुषत्वात्' इति । आगमबाधितो**

**यथा 'सुरा ब्राह्मणेन पेया द्रवद्रव्यत्वात्' इति । आगमबाधितैकदेशो यथा 'सुरासोमौ ब्राह्मणेन पेयौ द्रवद्रव्यत्वात्' इति ॥**

**(टिप्पणी)** कालात्ययापदिष्टं निरूपयति । तुल्यबलसाध्याभावज्ञानस्याप्रतिबन्धकत्वादाह **प्रमाणबाधितविषय इति** ॥ प्रमाविषयसाध्याभाववत्पक्षवृत्तिरित्यर्थः । पूर्ववदनिव्याप्तिशङ्कानिरासाय बुद्धिवैशद्य-प्रकटनाय वाऽऽह **सोऽप्यनेकविध इति** ॥ **अनुमानबाधित इति** ॥ चक्षुषोऽतीन्द्रियत्वेन रूपप्रतीत्या अनुमेयत्वादिति भावः ।

*प्रकरणसमलक्षणम्*

**(टीका) स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः । यथा 'विमतं मिथ्या दृश्यत्वात्' इति । सत्यत्वेऽप्यस्य प्रयोक्तुं शक्यत्वात् । उभयत्र त्रैरूप्यश्च वादि-प्रतिवादिनोराभिमानिकमिति नासम्भवः ॥**

**(टिप्पणी)** प्रकरणसमं निरूपयति **त्रिरूप इति** । पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपरूपत्रयोपेत इत्यर्थः । उदाहरति **यथेति** ॥ अत्र विमते व्यावहारिकसत्तोपेते पक्षे सपक्षे शुक्तिरूप्यादौ सत्त्वाद् विपक्षे ब्रह्मणि चासत्त्वात् त्रिरूपोपेतत्वमिति भावः । परपक्षे विमतं न मिथ्या दृश्यत्वादित्यत्र त्रितयोपेतत्वमस्त्येव । प्रपञ्चे पक्षे सपक्षे ब्रह्मणि विपक्षे शशविषाणादौ सत्त्वादिति वादिप्रतिवादिभ्यां त्रिरूपत्वेनाभिमतः ।

**(टीका) समबलतयाऽभिमतप्रमाणविरुद्धः सत्प्रतिपक्षः । तत्र प्रत्यक्षविरुद्धो यथा 'विमतः शङ्खः शुक्लः शङ्खत्वात्' इत्यत्र प्रत्यक्षात् 'पीतः किं न स्यात्'? इति । अनुमान-विरुद्धो यथा 'आकाशं नित्यम् अमूर्तद्रव्यत्वात्' इत्यत्र 'आकाशमनित्यम् अस्मदादिबाह्येन्द्रियग्राह्यगुणाश्रयत्वात्' इत्यनुमानात् अनित्यमपि किं न स्यात् इति । आगमविरुद्धो यथा 'प्रधानं न स्वतन्त्रं जडत्वात्' इत्यत्र कापिलागमात् 'स्वतन्त्रमपि किं न स्यात्' इति ॥**

**(टिप्पणी)** सत्प्रतिपक्षं निरूपयति **समबलतयेति** ॥ प्रमाणविरुद्धः सत्प्रतिपक्ष इत्यर्थः । न तु व्याप्तिपक्षधर्मते बलं येन प्रत्यक्षागमाभ्यां सत्प्रतिपक्षो न स्यादिति भावः । अत एव प्रत्यक्ष-विरोधमुदाहरति **तत्रेति** ॥ प्रत्यक्षस्यापि प्रमाजननानुकूलसकलसम्पत्तिमत्तयाऽभिमतत्वादिति भावः ।

*उदाहरणाभासनिरूपणम्*

**(टीका) उदाहरणरूपेषु कैश्चिद्युक्ताः कैश्चिद्रहिता उदाहरणाभासाः। ते च अनेकप्रकाराः। तत्र साधर्म्योदाहणे तावत् साध्यवैकल्यं यथा मनोऽनित्यं मूर्तत्वात् 'यन्मूर्तं तदनित्यं यथा परमाणुः' इति। साधनवैकल्यं यथा, 'यथा कर्म' इति। उभयवैकल्यं यथा, 'यथाऽऽकाशम्' इति।**

**(टिप्पणी)** क्रमप्राप्तमुदाहरणाभासं निग्रहस्थानं लक्षयति **उदाहरणेति**। दृष्टान्तताप्रयोजकरूपेष्वित्यर्थः। कैश्चिद्युक्ता इति स्वरूपोत्कीर्तनम्। लक्षणं तु दृष्टान्तताप्रयोजकरूपेषु कैश्चिद्रहिता इति। उद्भाव्यताप्रयोजकविशेषरूपेण प्रदर्शयितुमाह ते **चेति** ॥ **यथा परमाणुरिति**। धर्मिग्राहकमानेन परमाणोर्नित्यत्वसिद्ध्या साध्यवैकल्यमिति भावः। तस्मिन्नेव प्रयोगे दृष्टान्तभेदेन साधनवैकल्यमुदाहरति **यथा कर्मेति**। अद्रव्यत्वेन परिमाणस्यैवाभावादवच्छिन्नस्य तस्य सुतरामभावात् साधनवैकल्यमित्यर्थः। पूर्वप्रयोग एवोभयवैकल्यमुदाहरति **यथाऽऽकाशमिति**। एवमन्यत्राप्यूह्यम्।

**(टीका) आश्रयहीनं यथा, 'यथा शशविषाणम्' इति। अव्याप्त्यभिधानं यथा,'मूर्तत्वात् घटवत्' इति। विपरीतव्याप्त्यभिधानं यथा, 'यदनित्यं तन्मूर्तं यथा घटः' इति। वैधर्म्योदाहरणे साध्याव्यावृत्तिर्यथा, 'यदनित्यं न भवति तत् मूर्तं न भवति यथा कर्म' इति। साधनाव्यावृत्तिर्यथा, 'यथा परमाणुः' इति। उभयाव्यावृत्तिर्यथा, 'यथा घटः' इति। आश्रयहीनत्वं पूर्ववत्। अव्याप्त्यभिधानं यथा, 'मूर्तत्वात् आकाशवत्' इति। विपरीतव्याप्त्यभिधानं यथा 'यन्मूर्तं न भवति तदनित्यं न भवति यथाऽऽकाशम्' इति।**

**(टिप्पणी) आश्रयहीनमिति** ॥ अप्रसिद्धसाध्यसाधनसहचाराधिकरणमित्यर्थः। **अव्याप्तीति** ॥ व्याप्त्यनभिधानमित्यर्थः। व्याप्यव्यापकयोर्व्यत्यासेनाभिधानं विपरीतव्याप्त्यभिधानम्। यद्योगप्राथम्याभ्यां व्याप्यस्याभिधातुमुचितत्वादिति भावः। व्यतिरेकोदाहरणेऽपि व्याप्यवैकल्यमुदाहरति **साध्याव्यावृत्तिर्यथेति** ॥ तत्र साध्यव्यावृत्तेरेव व्याप्यत्वात्। एवं व्यापकवैकल्यमुदाहरति **साधनाव्यावृत्तिरिति** ॥ साधनव्यावृत्तेरेव व्यापकत्वादिति भावः। तद्व्यावृत्तेरेव हेत्वभावव्यापकत्वादिति भावः। परमाणौ मूर्तत्वसत्त्वेन साधनाव्यावृत्तिरित्यर्थः। **पूर्ववदिति**। शशविषाणवदित्यर्थः।

**(टीका) सन्दिग्धसाध्यो यथा, 'अयं महाराज्यं करिष्यति सोमवंशोद्भूतत्वात् राजपुत्रान्तरवत्' इति । सन्दिग्धसाधनो यथा 'अयं न सर्वज्ञः रागादिमत्त्वात् रथ्या-पुरुषवत्' इति । सन्दिग्धोभयो यथा 'देवदत्तपुत्रः स्वर्गं गमिष्यति धर्मवत्त्वात् देवता-न्तरवत्' इति । सन्दिग्धाश्रयो यथा 'यथा भविष्यदेवदत्तपुत्रः' इति । एतेष्वेव प्रयोगेषु सन्दिग्धसाध्याव्यावृत्तो यथा 'यथा अन्यो राजपुत्रः' इति ।**

**(टिप्पणी)** निश्चितोदाहरणाभासमुक्त्वा सन्दिग्धतदाभासानाह **सन्दिग्धेत्यादिना ॥ राजपुत्रेति ।** तत्रापि महाराज्यकर्तृत्वस्यानिश्चयादिति भावः । **रथ्यापुरुषवदिति ॥** अत्र यद्यप्यसार्वज्ञसत्त्वे रागादिमत्त्वमपि आवश्यकमिति तन्निश्चये हेतुसन्देहोऽनुचितः । तथापि व्याप्त्यनभिसन्धानदशायामेतद् बोध्यम् । **भविष्यदिति** । भाविनि मानाभावेन देवदत्तपुत्रस्य सन्दिग्धत्वादिति भावः । अन्वयिनि सन्दिग्धोदाहरणाभासमुक्त्वा व्यतिरेकिणि तमाह **एतेष्वेवेति ॥ यथा अन्य इति ॥** महाराज्यकर्तृत्वरूपसाध्याभावस्यान्यस्मिन्ननिश्चितत्वादिति भावः ।

**(टीका) सन्दिग्धसाधनाव्यावृत्तो यथा 'यथा समस्तशास्त्राभिज्ञः' इति । सन्दिग्धोभयाव्यावृत्तो यथा 'यथा रथ्यापुरुषः' इति । सन्दिग्धाश्रयः पूर्ववदिति ॥**

**(टिप्पणी) समस्तशास्त्राभिज्ञ इति ।** अयं न सर्वज्ञो रागादिमत्त्वात् यः सर्वज्ञः स न रागादिमान् यथा समस्तशास्त्राभिज्ञ इत्यत्र समस्तशास्त्राभिज्ञे रागाद्यभावस्यानिश्चयात् । यद्यपि सार्वज्ञनिश्चये रागादिमत्त्वाभावोऽपि निश्चेतुं शक्यत एव तदनिश्चये सन्दिग्धोभयव्यावृत्तत्वापत्तिरिति । तथापि व्याप्त्यत्वाप्रतिसन्धानदशायामेतदुदाहरणमिति मन्तव्यम् । **यथा रथ्यापुरुष इति ॥** देवदत्तः स्वर्गं गमिष्यति धर्मवत्त्वात् यो न स्वर्गगमनकर्ता स न धर्मवान् यथा रथ्यापुरुष इत्यत्र रथ्यापुरुषे साध्यसाधन-व्यावृत्तेरयोग्यत्वेन निश्चेतुमशक्यतया सन्दिग्धोभयाव्यावृत्तत्वमिति भावः । यद्यपि य एव पूर्वमन्वये दृष्टान्तः स एवोदाहर्तुमत्राप्युचितः । तत्रान्वयसन्देहे व्यतिरेकस्यापि सन्दिग्धत्वात् । तथापि रथ्यापुरुषस्य पामरत्वेन तस्यैव दृष्टान्तौचित्यादिति भावः । **पूर्ववदिति ॥** भविष्यद्देवदत्तपुत्रवदित्यादावित्यर्थः ।

**(टीका) तर्कपराहतिश्च प्रागुदितात्माश्रयादिप्रसङ्गदुष्टत्वमिति ॥**

**(टिप्पणी)** तर्कपराहतिमाह **तर्कपराहतिश्चेति ॥** आत्माश्रयादिरूपविरोधितर्ककालीनमित्यर्थः । यद्यपि प्रतिकूलतर्कानुग्राह्यप्रमाणमस्ति न वा । अस्ति चेदधिकबलं समबलं वा । आद्ये बाधः । द्वितीये

सत्प्रतिपक्षता। नास्ति चेदसत्तर्कत्वाद् विरोधित्वाभाव एव । तथाप्यनुग्राह्यप्रमाणापरिस्फूर्तावपि प्रतिकूलतर्कस्य प्रतिबन्धकत्वावधारणादस्य पार्थक्यम् । न च प्रतिकूलतर्कसत्त्वे व्याप्त्यग्रहादसिद्ध्यन्तर्भावः । व्यभिचारवदुपजीव्यत्वेनास्य भिन्नत्वात् ।

**(टीका) अनुकूलतर्काभावे तु उपाधिव्यभिचारशङ्कया व्याप्यत्वासिद्धिर्भवति।**

**यद्यप्युदाहरणाभासादयो हेत्वाभासेष्वन्तर्भवन्ति । तथापि तद्रूपेणोद्भाव्यत्वात् पृथगुपादानमिति।**

**(टिप्पणी)** नन्वेवमनुकूलतर्काभावोऽपि निग्रहस्थानान्तरं स्यादित्यत आह **अनुकूलतर्काभावे तु** इति । उपजीव्यत्वेऽपि निग्राहकताया निग्रहस्थानान्तरोपजीवननियमेन नायं पृथगिति भावः । निग्रहस्थानान्तरं स्यादित्युपजीवनमेवाह **व्यभिचारशङ्कयेति** ॥ नन्वेवमुदाहरणाभासस्यापि न निग्रहस्थानान्तरत्वं स्यात् । हेत्वाभासरूपनिग्रहान्तरसङ्कीर्णत्वादित्यत आह **यद्यपीति** ॥ हेत्वाभासरूपनिग्रहस्थानान्तरपर्यवसितस्यापि तस्य साध्यविकलो दृष्टान्त इत्येवोद्भाव्यं न तु व्यभिचरितो हेतुरिति ध्वनितुं पृथगुपन्यास इत्यर्थः ।

**(टीका) एतेषु यानि निग्रहस्थानानि तत्वतस्तानि विरोधादिष्वेवान्तर्भूतानि । वक्तृदोषाणां प्रतिज्ञाहान्यादीनां कथमुपपत्तिवचनदोषेषु विरोधादिष्वन्तर्भाव इत्यत उक्तं संवादानुक्तियुता इति॥**

**(टिप्पणी)** परनिरूपिताशेषनिग्रहस्थानानि विरोधादिष्वन्तर्भावयिष्यन्नाह **एतेष्विति** ॥ यद्वा ननु भ्रान्तिप्रतिपन्नोद्भावितानैकान्तिकादौ वस्तुगर्भविरोधादिलक्षणाभावाद् विभागन्यूनतेत्याशङ्क्याह **एतेष्विति** ॥ तत्रानैकान्तिकत्वादिभ्रान्तिप्रतिपन्नत्वं परेणोद्भावितं न वा । उद्भावितं चेन्निग्रह एव नास्ति । अनैकान्तिकत्वोद्भावयितुस्तु निरनुयोज्यानुयोग एव निग्रहः । उद्भावितं चेदुत्तरार्हे तूत्तराप्रतिभैव निग्रह इति न विभागन्यूनत्वमिति भावः । ननूपपत्तिवचनदोषाणां स्वरूप वाक्येन विशिष्य निर्देशात् पुनः संवादानुक्तियुक्तत्वेन निर्देशो निरर्थक इत्यतस्तन्निवर्तनीयामाशङ्कामाह **वक्तृदोषाणामिति** ॥

**(टीका) शक्तिवैकल्यात् विप्रतिपन्नप्रमेयाङ्गीकारः संवादः । वक्तव्ये प्राप्ते शक्तिवैकल्यादेव तूष्णीम्भावोऽनुक्तिरिति।**

**(टिप्पणी) संवादेति** ॥ अयमभिसन्धिः । विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहः । ते च पुरुषनिष्ठे । विरोधादेरपि तदनुमापकत्वं वचनद्वारा पुंनिष्ठतयैव । न तु वस्तु स्वतो दुष्टम् । तदुक्तं वाचस्पतिना । आकाशे निशातमसिं व्यापारयतः पुरुषस्यापराधो न त्वसेः शतपत्रभेदनसमर्थस्येति । तथा च विप्रतिपत्त्यप्रतिपत्त्युन्नायकत्वाविशेषेण कथं नोपपत्तिवचनदोषेष्वन्तर्भावः प्रतिज्ञाहान्यादीनामिति । उक्तमर्थं मूलवाक्येन योजयितुं व्याचष्टे **शक्तिवैकल्यादिति** ॥ कथाङ्गसम्यज्ज्ञानाभावादित्यर्थः । एवमग्रेऽपि । यद्यप्येवं विप्रतिपत्तावप्यप्रतिपत्तिरस्तीति न द्वैविध्यम् । तथापि अप्रतिपत्तेर्विप्रतिपत्तौ निग्रहोत्कर्षस्तवनार्थं पृथगभिधानमिति ।

न केवलमयं न जानाति, अपि तु विरुद्धं जानातीति पुरुषनिग्रहवत्त्वेन पुरुषनिष्ठतां सम्पादयितुमाह **अङ्गीकार इति** ॥ भवति कथायामतिविरुद्धप्रतिपत्तिमानयं तद्विरुद्धवक्तृत्वात्, कथाङ्गज्ञानाभाववानयं तदनुकूलवचनरहितत्वादित्यादिक्रमेण निग्रहानुमानमिति ।

*प्रत्यक्षकरणविभागः*

**(टीका)** यदुक्तम् त्रीण्येव प्रमाणानीति तदयुक्तम् । साक्षिणः पृथक्प्रमाणत्वात् इत्यतस्तस्य प्रत्यक्षान्तर्भावज्ञापनार्थं सिंहावलोकनन्यायेन तद्विभागमाह

**(मूलम्) प्रत्यक्षं सप्तविधम् ।**

**(टीका)** साप्तविध्यं कथमित्यत आह—

**(मूलम्) साक्षिषडिन्द्रियभेदेन ।**

**(टीका)** द्विविधमिन्द्रियम् । प्रमातृस्वरूपं तदतिरिक्तं चेति । तत्र स्वरूपेन्द्रियं साक्षीऽत्युच्यते । स च ज्ञानरूपः । तस्य आत्मस्वरूपत्वम् । तद्धर्माश्च सुखादयो बहिश्चाकाशकालादयोऽपि विषयाः । सुखादीनां भिन्नेन्द्रियविषयत्वे कदाचिदपरोक्षभ्रमविषयतापातात् । अनन्यथात्वनियमः साक्षिण एव हि धर्मः न त्वन्यस्य । न च कालादेरसाक्षिविषयत्वम् । रूपाद्यभावेन चक्षुराद्यविषयत्वात् । मनसो बहिरस्वातन्त्र्याभ्युपगमात् । अननुसंहितव्याप्तीनामपि प्रतीतेः नानुमानात् तज्ज्ञानम् । जातिबधिराणामप्युपलम्भेन नागमविषयताऽपीति ।

**अस्वरूपं च षड्विधम्। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमनोभेदात्। एवमिन्द्रियाणां भेदेन तत्सन्निकर्षात्मकं प्रत्यक्षमपि सप्तविधमिति। इदं च न सार्वत्रिकमिति।**

**(टिप्पणी)** इन्द्रियसन्निकर्षः प्रत्यक्षमित्युक्तत्वात् साक्षिणोऽपीन्द्रियत्वमाह **द्विविधमिति** ॥ **सुखादीनामिति** ॥ आत्मधर्मापरोक्षाणामित्यर्थः । ननु सुखादिप्रत्ययग्यानन्यथात्वनियमात् न तथेत्यत आह **अनन्यथेति** ॥ तन्नियमबलादपि साक्षिवेद्यत्वमेवायाति । अन्यथा नियम एव न स्यादिति । **रूपाद्यभावेन इति** ॥ द्रव्यग्राहकबहिरिन्द्रियव्यवस्थापकगुणाभावादित्यर्थः । चक्षुराद्यविषयत्वाद् बहिरिन्द्रियाविषयत्वादिरित्यर्थः । **बहिरस्वातन्त्र्यात् इति** ॥ आत्मनिष्ठसमवायनिरूपकान्याग्राहकत्वादित्यर्थः । **अननुसंहितेति** ॥ न चैतदसिद्धम् । अनुभवापलापे त्वन्मते त्वात्मनोऽपि सुखाद्यनुमेयत्वमेव स्यात् । न च अननुसंहितव्याप्तीनामपि योऽहं सोऽहमिति प्रत्ययान्न तथा । नहि प्रकृतेऽपि दीयतां दृष्टिरिति भावः ।

*प्रत्यक्षविभागः*

**(टीका) चतुर्विधं हि प्रत्यक्षम् । ईशलक्ष्मीयोग्ययोगिप्रत्यक्षभेदेन । तत्र ईशलक्ष्मीप्रत्यक्षं सर्वदा स्वरूपेन्द्रियसन्निकर्षात्मकमेव । स्वातन्त्र्यपारतन्त्र्याभ्यां तद्विशेषः । योगिनामयोगिनां च आमुक्तेः उभयविधेन्द्रियसन्निकर्षात्मकम् । तत्र योगिनां देशकालवस्तुस्वभावव्यवहितार्थमपि विषयीकरोति । अयोगिनां तु देशकालाद्यव्यवहितमेवेति।**

**द्विविधं चैतत् । अतीतवर्तमानतावच्छिन्नविषयम् । यथा 'सोऽयं घटः' इति प्रत्यभिज्ञाहेतुसंस्कारसहकृतम्। वर्तमानविषयं च। यथा 'अयं घटः' इत्यादिज्ञानहेतुरिति॥**

**(टिप्पणी)** कुतो नैतत् सार्वत्रिकमित्यत आह **चतुर्विधं हीति** ॥ हिशब्दो हेतौ । ईश्वरलक्ष्मीप्रत्यक्षयोरेकविधत्वादित्यर्थः । नन्वीश्वरलक्ष्मीप्रत्यक्षयोः किमिति पृथगुपन्यास इत्यत आह **स्वातन्त्र्यपारतन्त्र्याभ्यामिति** ॥ **अतीतेति** । यद्यप्यनागतवर्तमानत्वावच्छिन्नविषयत्वमपि सम्भवतीति त्रैविध्यं वक्तुमुचितं तथाप्यतीतपदस्य कादाचित्काभावप्रतियोगिपरत्वेन स्वजन्यसंस्कारसहकृतत्वासहकृतत्वाभ्यां वा द्वैविध्यं द्रष्टव्यम् ।

**(टीका) निर्विकल्पकसविकल्पकभेदात् द्विविधं प्रत्यक्षमित्येके । यत् द्रव्यगुणादिस्वरूपमात्रावगाहि न तु तद्विशेषणविशेष्यभावविषयं तत् निर्विकल्पकम् । यथा**

**'यत्किञ्चिदेतत्' इति, ज्ञानसाधनम्, प्राथमिकम् । संज्ञागुणकर्मजातिविशिष्टार्थविषयं सविकल्पकम् । यथा 'शुक्लो ब्राह्मणो गच्छति' इति, द्वितीयम् इति ।**

**निर्विकल्पकमेव प्रत्यक्षमित्यपरे । तदेतदयुक्तम् । गुणादेर्द्रव्येणात्यन्तभेदस्य निर्विशेषाभेदस्य च अभावेन विशिष्टबोधस्यैव साक्षिसिद्धत्वात् ।**

**(टिप्पणी) किञ्चिदेतदिति ॥** वैशिष्ट्यानवगाहीत्यर्थः । अन्यथा किञ्चित्त्वस्यापि विशेषणत्वेन तद्वैशिष्ट्यविषयकत्वे पूर्वोक्तविरोधादिति । **गुणादेरिति ॥** यद्यपि परस्य विशिष्टबोधे न विप्रतिपत्तिः । अपि तु तस्य साक्षात्त्वे ज्ञातेरपोहरूपत्वेनालीकविषयतया विशिष्टस्येन्द्रियसन्निकर्षाजन्यतया साक्षात्त्वाभावादित्यत्र तात्पर्यम् ।

अत्र वदन्ति । दण्डवानिति प्रतीतिवद् रूपवानिति प्रतीतेर्गुणादेर्द्रव्येणात्यन्तभेद एव । न च दण्डस्य संयुक्तत्वाद् विशिष्टबुद्धिरुचिता न तु गुणादेः, द्रव्येण सम्बन्धाभावादिति वाच्यम् । विशिष्टबुद्धिबलेन सम्बन्धस्यापि स्वीकार्यत्वात् । न च तद्बलेनाभेद एव सिद्ध्यतीति वाच्यम् । सविशेषाभेदस्य क्वचिदप्यदर्शनात् । न च समवायवत् प्रतीतिबलेनात्रैव दर्शनमस्त्विति वाच्यम् । विशेषस्य निर्वक्तुमशक्यत्वेन सविशेषाभेदानङ्गीकारात् । न च एतादृशप्रतीतेरपि सम्बन्धिभिन्नसम्बन्धसाध्यत्वे दण्डी पुरुष इतिवन्नीली घट इत्यपि प्रयोगः स्यादिति वाच्यम् । अप्रयोगादेवाप्रयोगसम्भवात् । कथमन्यथा तेनैव सम्बन्धेन गुणी घट इति प्रयोगः ।

किञ्च द्रव्ये गन्धरसादिव्यवहारप्रयोजको विशेषः किं प्रत्येकं भिन्न उताभिन्न एव । नाद्यः । अपसिद्धान्तात् । न द्वितीयः । एकस्मात् तावद्विचित्रव्यवहारानुपपत्तेः । अन्यथा घट एव तथेति कृतं विशेषेण । अपि च विशेषः किं घटाद् भिन्नोऽभिन्नो वा । नाद्यः । स्वयमनङ्गीकारात् । द्वितीयेऽपि किं निर्विशेषाभेदः सविशेषाभेदो वा । न प्रथमोऽनभ्युपगमादेव । न चरमोऽनवस्थानादिति । अत्र ब्रूमः । नीलो घट इति प्रतीतिरत्यन्तभिन्नदण्डमित्राभ्यां व्यावर्तमाना सविशेषाभेदमाक्षिपति । तथा हि । नेयं समानाधिकरणा विशिष्टबुद्धिरत्यन्तभिन्ने दण्डो घट इति । नाप्यविशेषाभिन्ने घटो घट इति । तस्मादुभयस्माद् व्यावर्तमाना विलक्षणं विषयमुपादाय निवर्तत इति । न चैवं तावता भेद एव सिद्ध्यतीति वाच्यम् । तयोर्विरोधेनैकत्र वृत्त्यभावात् । न च संयोगतदभाववदवच्छेदभेदेनाविरोध इति (वाच्यम्) । तत्राप्यैकाधिकरण्य एव विरोधात् । लाघवादन्यत्र तथा दर्शनाच्च । नागृहीतविशेषणन्यायेन प्रतीतेरवच्छेदकनिग्राभावगोचरत्वात् । तद्वदवच्छेदकभेदाभावात् (अत्र) । न च एकस्मादेव विशेषात् कथं

तावद्विचित्रबुद्धिव्यवहारयोरुपपत्तिरिति वाच्यम् । एकस्मादेवाग्निसंयोगात् तत्तत्प्रागभावरूपसहकारिभेदेन विचित्ररूपरसादिकार्यवदुपपत्तेः । अवच्छेदकभेदेन वोपपत्तेश्च । एकस्मिन् स्वरूपसम्बन्धभेदस्य तत्रैव पर्यवसानात् । अत एव कालान्योन्याभावसत्त्वाविशेषेऽपि स घटः कालभिन्न इति प्रतीतिरुपपद्यते । न तु कालः कालभिन्न इति ।

न चैवं तर्ह्येकस्माद् घटादेव तथाऽस्त्विति वाच्यम् । घटस्य तेन रूपेणासिद्धेः । अन्यथाऽऽकाशादेव सूर्यस्य परिस्पन्दाद्युपगमसम्भवे कालस्य तत्राप्यसिद्धिप्रसङ्गः । शब्दसमवायिकारणत्वेनोपस्थितेन धर्म्यन्तरोत्पादकधर्मान्तरकल्पने एकधर्मिपरिशेषापत्तिरिति यदि तर्हि प्रकृतेऽपि दीयतां दृष्टिः । विशेषकृत्याधायकत्वेन प्रथमं घटस्यासिद्धेः । ननु विशेषोऽपि घटाभिन्न एवेति कथं पूर्वोक्तपरिहार इति वाच्यम् । घटाभिन्नत्वेऽपि सविशेषत्वात् । न चैवमनवस्था । विशेषान्तरास्वीकारात् । यथा व्यावर्तिका जातिः स्वत एव व्यावृत्ता । किञ्चिद्धि वस्तु स्वत एव व्यावृत्तम् । न तु व्यावर्तकान्तरमपेक्षते । तथाऽऽन्यविशेषको विशेषः स्वत एव विशिष्टो न तु विशेषकान्तरमपेक्षत इति । विशेषपदार्थे चैतत् तवापि समानमिति । अन्यथाऽनवस्थापत्तेर्विशेषयोरविशेषापत्तेर्वेति । एतावांस्तु विशेषः । स तव तु नित्यद्रव्यवृत्तिरेव. मम तु तुल्यन्यायेन नित्यानित्यद्रव्यवृत्तिरपीति दिक् । ननु रूपरसयोर्घटाभिन्नत्वे च रूपग्रहे रसग्रहापत्तिरिति चेत् । न । निर्विशेषाभिन्नत्वस्योपाधित्वात् । इष्टापत्तिर्वा । न चैवं रूपाभिलाप इव रसाभिलापापत्तिः । अभिलापस्य भिन्नकारणप्रयोज्यत्वात् । अत एव तवापि रूपाभिलापे न परिमाणाभिलापनियमः । तयोरेकवित्तिवेद्यत्वनियामात् । न च प्रकृते कारणमेवंरूपा नास्तीति वाच्यम् । रसाभिलापविशेषे रासनज्ञानस्यैव हेतुत्वात् । अत एवाभिलापविशेषप्रयोजकीभूतज्ञानजनकत्वमादाय रासनत्वचाक्षुषत्वादिकमप्युपपद्यते ।

### *तार्किकोक्तेन्द्रियार्थसन्निकर्षनिराकरणम्*

**(टीका) एतेनैतदपि निरस्तम् । यदाहुः 'सन्निकर्षः षोढा भिद्यते । संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषण-विशेष्यभावश्चेति । तत्र चक्षुःस्पर्शनाभ्यां संयोगेन घटादिज्ञानं, मनसा आत्मज्ञानम् । तैः संयुक्तसमवायेन स्वविषयद्रव्यसमवेतगुणकर्मसामान्यज्ञानं, घ्राणेन गन्धज्ञानं, रसनेन रसज्ञानम् । तैरेव संयुक्तसमवेतसमवायेन गुणकर्मसमवेतसामान्यज्ञानम् । श्रोत्रेण समवायेन शब्दज्ञानम् । तेनैव समवेतसमवायेन शब्दसमवेतसामान्यज्ञानम् । तत्तदिन्द्रियैर्विशेषण-**

विशेष्यभावेन स्वस्वविषयवृत्तिसमवायाभावज्ञानम् । सोऽप्युक्तपञ्चविधसम्बन्धसम्बद्ध-विशेषणविशेष्यभावत्वेन पञ्चविधः । यथा 'घटे रूपसमवायः' इत्यादि । यथा च 'इह भूतले घटाभावः' इत्यादि ।

न हि द्रव्यात् गुणाऽदिकमन्यत् । येन तत्सम्बन्धः समवायः सम्भवति ।

(टिप्पणी) गुण इति ॥ द्रव्यादेरिति ॥ तथा च संयोगो भेदस्तदुभयविशेषणता चेति प्रत्यासत्ति-त्रयमेवेति भावः ।

*तार्किकमतेन स्मृतिप्रामाण्याक्षेपः निरासश्च*

(टीका) ननु स्मृतिः केवलप्रमाणम् न वा । आद्ये केवलस्योत्पत्तिमतोऽनुप्रमाण-जन्यत्वं वाच्यम् । अतः तद्धेतोः संस्कारस्य प्रामाण्यमङ्गीकार्यम् । ततश्च नोक्तविभागो युक्तः । न हि संस्कारो यादृच्छिकसंवादी । येनप्रमाणमपि केवलस्य हेतुः स्यात् । चक्षुरादिसाम्यात् । न चासावुक्तेऽन्तर्भवति । अनिन्द्रियसन्निकर्षरूपत्वात् । अज्ञातस्यैव करणत्वात् नानुमानागमयोः । द्वितीये केवलप्रमाणलक्षणस्यातिव्याप्तिः । स्मृतेरपि यथार्थज्ञानत्वात् इत्यत आह—

(मूलम्) मानसप्रत्यक्षजा स्मृतिः ।

(टीका) भवत्येव स्मृतिः केवलप्रमाणम् । न चैवं संस्कारस्य पृथक्प्रामाण्या-भ्युपगमप्रसङ्गः । स्मृतेर्मानसप्रत्यक्षत्वाभ्युपगमात् । द्विविधं हि ज्ञानं मनो जनयति । तत्तदिन्द्रियाधिष्ठातृत्वेन तत्तदिन्द्रियविषयम्, स्वातन्त्र्येण स्मरणञ्चेति । संस्कारस्तु प्रत्यासत्तिमात्रम् । न तावता प्रत्यक्षजन्यत्वाभावः प्रत्यभिज्ञावदेवेति ।

न च वाच्यमतीतेन मनसः सन्निकर्षायोगेनाप्रत्यक्षजन्यत्वं स्मृतेरिति । अतीता-ऽदिविषययोगिप्रमायामपि तथात्वापातादिति ।

(टिप्पणी) उत्तरवाक्याभिव्यक्त्यशङ्कां निराचिकीर्षुराह **नन्विति** ॥ ईश्वरीयव्यावर्तनार्थमाह **उत्पत्तिमत इति** ॥ यादृच्छिकसंवादी प्रमाणमनियत इत्यर्थः। **इन्द्रियाणीति** ॥ संस्कारस्य प्रमायामकारणत्वं प्रमानियमावच्छेदकरूपाभावाद्वा भ्रमं प्रत्यपि कारणत्वाद्वा । नाद्यः । इन्द्रियवदेव किञ्चिद्रूपसम्भवात् । न

द्वितीयः । तथा सत्यसति अतीन्द्रियवदेव प्रमाणत्वसम्भवादित्यर्थः । नन्वनिन्द्रियसन्निकर्षरूपत्वेऽप्यनुमानादावन्तर्भवत्वित्यत आह **अज्ञातस्यैवेति** ॥ **द्विविधं ज्ञानमिति** ॥ द्विविधां प्रमामित्यर्थः । अतो मानसप्रमात्वादिभ्रमसम्भवात् त्रैविध्यमपि न दोष इति । **संस्कारस्त्विति** ॥ अन्वयव्यतिरेकाभ्यां कारणीभूतपूर्वानुभवव्यापारत्वेन सहकारिमात्रमित्यर्थः । अत एव मनसः पृथगिन्द्रियत्वोपन्यासः । अन्यथा पराभिमताया मानसप्रमायाः साक्षिरूपत्वेनान्यत्र मनसोऽस्वातन्त्र्येण तद्विरुद्धेतेति भावः । **अतीतादीति** ॥ न च तत्र योगजो धर्म एव सन्निकर्षः । अत्रापि संस्कारस्यैव सन्निकर्षत्वसम्भवात् । मनोरूपेऽन्द्रियसन्निकर्षरूपत्वाच्च नाधिक्यमपीति भावः ।

**(टीका) स्मृतिः केवलप्रमाणमेव न भवति । गृहीतमात्रग्राहित्वात् । अनुवादवत् । अतः कथं प्रत्यक्षप्रमाणजन्यत्वम् इत्यत आह—**

**(मूलम्) स्मृत्यनुवादयोर्नाप्रामाण्यम्**

**(टीका) न हि गृहीतग्राहित्वेन स्मृतेरनुवादस्य चाप्रामाण्यं वाच्यम् । तथा सति प्रत्यक्षादिसिद्धार्थानुवादकस्य 'अग्निर्हिमस्य भेषजम्' इत्यादेरप्रामाण्यप्रसङ्गात् । अतो गृहीतग्राहित्वेऽपि स्मृतेरनुवादवत् प्रामाण्यमेव यथार्थत्वात् इति ।**

**(टिप्पणी) यथार्थत्वादिति** । तावन्मात्रस्यैवानुप्रमाणजन्यत्वापादकत्वात् प्रमापदप्रवृत्तिनिमित्तत्वाच्चेति भावः ।

**(टीका) अन्यस्त्वाह । न स्मृतिः प्रमाणम् अयथार्थत्वात् । न हि यदा यादृशोऽर्थः स्मर्यते तदाऽसौ तादृशः पूर्वावस्थाया निवृत्तत्वात् । अतो नानुप्रमाणजन्यत्वमिति । तत्राह—**

**(मूलम्) यथार्थत्वानुभवात् ।**

**स्मृतेर्नाप्रामाण्यमित्यनुवर्तते । न हि यदा यादृशोऽर्थो विषयीक्रियते तदा तस्य तादृशत्वे प्रमाणस्य याथार्थ्यम् । तथा सति अतीतादिविषयानुमानादेः अयथार्थत्वापातात् । किं नाम ? यद्देशकालतया योऽर्थो यादृशो विषयीक्रियते तस्य तद्देशकालयोस्तादृशत्वे । तादृशं च याथार्थ्यं स्मृतेः साक्षिसिद्धम् । 'तत्र तदा असौ तादृशः' इति स्मृतिरर्थं विषयीकरोति न हि 'तत्र तदाऽसौ न तादृशः' इति ।**

**(टिप्पणी) न प्रमाणमिति ॥** न प्रमाणपदवाच्येत्यर्थः । अतो न साध्याविशेषः । **तदाऽसौ तादृश इति ॥** विशिष्टज्ञानसामान्यसामग्रीभागस्य विशेषणवति मानत्वस्याभावादिति भावः । तदेव उपपादयति **पूर्वेति ॥** विशिष्टज्ञानसामान्यसामग्र्याश्च अयं स्वभावोऽतीताद्यगोचरत्वसामग्र्या वा । नाद्य इत्याह **तथा सतीति ॥** न द्वितीयः । स्मृतेरपि विशेषणातीतत्वगोचरत्वादित्याह **तत्र तदासाविति ॥**

**(टीका) न च वाच्यं न निवृत्तपूर्वावस्थतया स्मृतिरर्थं विषयीकर्तुमीष्टे । तथा अननुभवात् । अननुभूतविषयत्वे अतिप्रसङ्गात् इति । अननुभूतैतावन्मात्रविषयत्वस्य साक्षिसिद्धत्वेनातिप्रसङ्गायोगात् । तदिदमुक्तम् यथार्थत्वानुभवादिति ॥**

**(टिप्पणी) तदिदमिति ॥ अनुभवत्वतः** वस्तुत इत्यर्थः । कथमेतावताऽप्यन्तर्भाव इत्यतोऽभिप्रायं स्फोरयन्नेव वारयति **शक्तिवैकल्यादिति ॥**

**(टीका) किञ्च स्मृतिप्रामाण्याङ्गीकारे अनिष्टाभावात् तदङ्गीकारो युक्त इत्याह—**

**(मूलम्) अहानेश्च ।**

**(टीका) हानिपदमनिष्टमात्रोपलक्षणम् ।**

**एतेनैव 'तर्को न प्रमाणम्, किन्तु प्रमाणानामनुग्राहकः । प्रमाणविषयत्वविपर्ययशङ्का व्यवच्छेदस्तदनुग्रहः' इत्येतदपास्तम् । तस्याप्यनुमानवत् यथार्थत्वानुभवात् अहानेश्च इति ।**

**(टिप्पणी)** नन्वन्वययोग्यताविरहो विरोधः, आकाङ्क्षाया अभावोऽसङ्गतिः । तयोर्न प्रतिज्ञाहान्यादीनामन्तर्भावः । अनन्वितानाकाङ्क्षितोपस्थापकत्वाभावादिति । वस्तुतोऽन्वितानुपस्थापको व्यापारो विरोधः, आकाङ्क्षितानुपस्थापको व्यापारोऽसङ्गतिरित्यर्थात् । स च विरुद्धोपस्थापकत्वादविरुद्धानुपस्थापकत्वाद्वाऽविशिष्ट इति प्रतिज्ञाहान्यादीनामप्यत्रैवान्तर्भाव इति सर्वं सुस्थम् ।

**(टीका) विरोधादिषु सर्वनिग्रहस्थानानामन्तर्भाव इत्युक्तम् । तत्प्रदर्शनार्थं [1]विरोधस्वरूपं तावद् विवेचयति—**

**(मूलम्) विरोधो मानस्ववाक्याभ्याम् ।**

**(टीका) द्विविध इति शेषः ।**

[1]. अयं प्रचलितः पाठः । विरोधे तावद विषयं - पाठान्तरम् ।

**(टिप्पणी)** नन्वन्वययोग्यताविरहो विरोध इत्यनेन सामान्यतो विरोधस्य प्रदर्शितत्वात् पुनः किमर्थं विशेषतस्तत्प्रदर्शनमित्यत आह **विरोधादिष्विति** । अत्र विरोधे इदमन्तर्भवतीदमपीति विशिष्यविरोधनिरूपणं विना न सम्भवतीत्यतस्तन्निरूपणं विशिष्येत्यर्थः । मानस्ववाक्याभ्यां विरोधः किमित्याकाङ्क्षाया असमाप्तत्वादाह **द्विविध इतीति** । प्रकृते विवक्षित इति शेषः । तथा च प्रकृते मानस्ववाक्याभ्यां विवक्षितो विरोधो द्विविध इत्यन्वयः । ननु मानस्ववाक्याभ्यां विरोधो द्विविध इत्यसङ्गतम् ।

**(टीका) विरोधो द्विविधः । समयबन्धादिरूपवत्यां कथायां सर्वरूपसाधारणोऽसाधारणश्चेति । तत्रासाधारणः प्रमाणेन स्ववाक्येन चेति द्विविधो भवति ।**

**(टिप्पणी)** साधारणासाधारणभेदेन पुनर्विधाद्वयस्य सत्त्वादित्यत आह **विरोधो द्विविध इति** । तथाच साधारणोऽसाधारणश्चेति सामान्यविभागः । साधारणविरोधस्यावान्तरविभागोऽयमतो नासङ्गतमिति भावः । **समयबन्धादीति** ॥ समयबन्धादिघटितायां कथायां कथाघटकवाक्यस्य व्यापको विरोधः साधारण इत्युच्यत इत्यर्थः । **असाधारण** इति । कथाघटकवाक्यैकदेशव्यापको हेत्वाभासरूप इत्यर्थः । अत्रानुमितिप्रतिबन्धकज्ञानविषयोपस्थापकत्वं विरुद्धत्वं द्रष्टव्यम् । तच्च विरोधिनि प्रमाणे क्रियायां चाविशिष्टम् । न च क्रियाविरोधस्थले क्रियाज्ञानमेव प्रतिबन्धकमतः कथं प्रतिबन्धकज्ञानविषयोपस्थापकत्वं क्रियाया इति वाच्यम् । स्वोपस्थितिजनकत्वस्य स्वस्मिन्नपि सत्त्वात् । प्रत्यक्षे विषयस्यापि हेतुत्वात् । तेन सामान्यतो ज्ञानानन्तरं विशेषजिज्ञासायां विशेषविभाग उपपद्यते । अन्यथा तदनुपपत्तेः ।

न चान्वययोग्यताविरहो विरोध इत्यनेनैव सामान्यतो ज्ञानमिति वाच्यम् । तस्याप्युक्त एव पर्यवसानात् । तथाहि । अन्वययोग्यतेत्यत्रान्वयः सामानाधिकरण्यं सम्बन्धमात्रं वाऽन्वयबोधो वा । नाद्यः । सामानाधिकरण्ययोग्यताविरहस्य विरुद्धवचनयोरभावात् तयोरेकांशवृत्तित्वात् । असमानाधिकरणार्थोपस्थापकत्वं तदर्थ इति चेत् । न । तावन्मात्रस्योपरि सविता भूमेरालोकवत्त्वादित्यादावतिव्यापकत्वात् । न च विरुद्धार्थोपस्थापकत्वं तदिति वाच्यम् । किमिदमर्थे विरुद्धत्वं परस्पराभावव्याप्यत्वं वा परस्परधीप्रतिबन्धकधीविषयत्वं वा । नाद्यः । उपरि सवितेत्यादावेव गतत्वात् । द्वितीयस्य तु मदुक्त एव पर्यवसानात् । न द्वितीयः । प्रमाणवचनक्रियादीनां वृत्तिमत्त्वात् । न तृतीयः । अन्वयबोधयोग्यताविरहस्य मदुक्तभिन्नस्य निर्वक्तुमशक्यत्वादिति ।

**(टीका) स्ववाक्यविरोधं विभज्य दर्शयति—**

**(मूलम्) स्ववाक्यविरोधोऽपसिद्धान्तजातिरूपेण ।**

द्विविध इति शेषः । पूर्वाचार्यवचनस्यापि स्वाभ्युपगतत्वेन स्ववाक्यत्वात् अपसिद्धान्तः स्ववाक्यविरोधो भवति ।

**(टिप्पणी)** प्रमाणविरोधस्तन्मतसिद्धप्रमाणसङ्ख्यया विभक्तप्राय एवेत्यभिप्रायेण स्ववाक्यविरोध-मात्रविभाजकं मूलमवतारति **स्ववाक्यविरोध इति** ॥ नन्वपसिद्धान्ते स्ववाक्यविरोधरूपत्वं कथमस्तु पूर्वाचार्योक्तविरोधरूपत्वात् तस्येत्यत आह **पूर्वाचार्यवचनस्यापीति** । तथाच स्ववाक्यविरोध इत्यनेन स्वीकृतप्रमाणभाववाक्यविरोध एव विवक्षितः । स्वीकृतप्रमाणभावं च वाक्यं पूर्वाचार्यस्यापीत्यपसिद्धान्तः स्ववाक्यविरोधेऽन्तर्भवतीत्यर्थः । वस्तुतस्तु नैयायिकोऽहमित्यादिना सामान्यतः पूर्वाचार्योक्तस्यापि स्वयमप्युक्तत्वात् स्ववाक्यविरोध इति यथाश्रुतमेवापसिद्धान्तसङ्ग्राहकमिति मन्तव्यम् ।

**(टीका) स्वव्याहतिर्जातिः । एकवाक्यविषयत्वान्नापसिद्धान्तेऽनिप्रसङ्गः । त्रिविधा स्वव्याहतिः । एकवाक्यगतपदादेरन्योन्यप्रतिस्पर्धित्वम्, स्वक्रियाविरोधः, तद्वाक्यन्यायेन तद्वाक्यविरोधश्चेति ।**

**(टिप्पणी)** जातिसामान्यलक्षणमाह **स्वव्याहतिर्जातिरिति** । स्ववाक्यविरोधी व्यापारो जातिरित्यर्थः । स च व्यापारः क्वचिद् वाक्यं क्वचित् क्रिया क्वचित् तद्वाक्यविरोधिसूचकं तदेव वाक्यमिति । नन्वपसिद्धान्त-स्यापि स्ववाक्यविरोधिव्यापारत्वेन तस्यापि जातित्वमेवेत्यत आह **एकवाक्येति** ॥ पूर्वाचार्यवाक्ये पारिभाषिकं स्ववाक्यत्वं न तु स्वोच्चरितत्वं प्रकृते च तादृशं स्ववाक्यत्वं विवक्षितमतो नातिप्रसङ्ग इति भावः । यद्वा जातेर्विशिष्य तदुक्तव्याघातरूपत्वादपसिद्धान्तस्य तु सामान्यत इति नातिप्रसङ्ग इति भावः । वक्तृभेदेन पदादेर्विरोधेऽपि जातित्वाभावादाह **एकवाक्येति** ॥ एकोक्तवाक्येत्यर्थः । यद्वा विशिष्यैकोक्तवाक्येत्यर्थः । पदादेरित्यत्रापि पदेन वाक्यपरिग्रहः । अन्योन्यप्रतिस्पर्धित्वम् अन्योन्यविरोध्यर्थोपस्थापकत्वम् । **तद्वाक्यन्यायेनेति** ॥ स्वसूचितविरोधः स्वस्मिन्नित्यर्थः ।

**(टीका) तत्र समयबन्धादौ प्रमाणविरोधादिप्रपञ्चः स्वयमेवोदाहर्तव्य इति सूचयन् आद्यजातिं तावत् प्रतिज्ञायामुदाहरति—**

**(मूलम्) जातिः 'न मेये मानापेक्षा' इत्यादिका ।**

**मानसापेक्षं हि ज्ञेयं मेयमुच्यते । तस्य प्रमाणनिरपेक्षत्वप्रतिज्ञा 'मे माता वन्ध्या' इतिवत् व्याहता भवति । आदिपदेन समयबन्धादावपि इयमेवोदाहर्तव्येति सूचयति ।**

**(टिप्पणी)** ननु प्रमाणविरोधमनुदाहृत्य कथं जातिमेवोदाहृतवानत आह **तत्रेति** ॥ सुगमत्वाली-च्युपेक्षितवानिति भावः । **समयबन्धादाविति** ॥ कथायाः पादचतुष्टयेऽपि तन्मतसिद्धप्रमाणविरोधः स्वयमेवोदाहरणीय इत्यर्थः । विरोधादीत्यत्रादिपदेनासाधारणविरोधपरिग्रहः । **प्रतिज्ञायामिति** ॥ मेयं न मानसापेक्षमिति प्रतिज्ञायामित्यर्थः । कथमत्र स्वव्याघात इत्याशङ्कायामाह **मानसापेक्षं हीति** ॥ **समयबन्धादावपि** ॥ प्रमेये प्रमाणं न वक्तव्यमित्येवंरूपसमयबन्धादावित्यर्थः ।

**(टीका) द्वितीयजातेरपीदमेवोदाहरणम् जातिरिति । 'मेयं मानानपेक्षम्' इति वदति । तज्ज्ञापनाय प्रमाणं चाभिधत्ते । अतो 'मूकोऽहम्' इतिवत् स्वक्रियाविरोध इति ।**

**(टिप्पणी)** द्वितीयजातेरुदाहरणान्तराभावान्मूले न्यूनत्वं परिहरति **द्वितीयजातेरिति** ॥ एतदेवोप-पादयति **मेयं मानानपेक्षमित्यादिना** ॥

**(टीका) तृतीयाया अप्येतदेवोदाहरणम् । जातिरिति । तत्कथम् ? इत्यत आह–**

**(मूलम्) मेये मानापेक्षाऽस्तीति च ।**

**तेनैव न्यायेन सिद्धत्वात् । यथा 'मेये मानापेक्षा नास्ति' इत्येतन्मेयं मानापेक्षम् । अन्यथा तत्प्रतिज्ञावैयर्थ्यात् । तन्न्यायेनैव 'विप्रतिपन्नमेयेऽपि मानापेक्षाऽस्ति' इत्यस्य अर्थस्य साधयितुं शक्यत्वात् इयमेव प्रतिज्ञा तृतीयजात्युदाहरणं भवति ।**

**(टिप्पणी)** न्यूनत्वं परिहरन्नाह **तृतीयाया इति** ॥ तृतीयजात्युदाहरणोपपादनपरं मूलमवतारयति **तत् कथमिति** ॥ न्यायमेवाह **यथेति** ॥ **साधयितुं शक्यत्वादिति** ॥ तथा च त्वत्प्रतिज्ञयैव स्वविरोधी अर्थः सूचित इत्यर्थः ।

**(टीका) न केवलमियं जातिः स्ववाक्यविरोधान्तर्गता । किं तु मानविरोधेऽपि इत्याह—**

**(मूलम्) मानविरोधश्च ।**

**'विप्रतिपन्नं प्रमेयं प्रमाणसापेक्षं प्रमेयत्वात् मेये मानापेक्षा नास्तीत्येतन्मेयवत्' इत्यनुमानसम्भवात् । प्रमाणविरोधे चेयं जातिरन्तर्भवतीति पूर्ववृत्त्या योजनीयम् ।**

**(टिप्पणी)** जातित्रयेऽपि मानविरोधस्य असम्भावितत्वात् तृतीयजातिमात्रपरतया मूलमवतारयति **न केवलमियमिति** ॥ मानमेवाह **विप्रतिपन्नमिति** ॥ न्यूनं मूलं पूरयति **प्रमाणविरोधे चेति** ॥ अध्याहारापेक्षयाऽऽवृत्तेरेव श्रूयमाणपदसन्निधानमात्रकल्पनारूपतया लघुत्वादाह **पूर्वावृत्त्येति** ॥

**(टीका) तदनेन प्रतिज्ञासन्न्यासविरोधापसिद्धान्तानां निरनुयोज्यानुयोगे च जातेः विरोध एवान्तर्भावः सूचितो भवति । सन्न्यासस्य मानसिद्धापलापरूपत्वात् । प्रतिज्ञाविरोधस्य एकवाक्यगतपदादिविरोधरूपत्वात् । अपसिद्धान्तस्य साक्षात् ग्रहणात् । परोक्तजातेः प्रतिषेधात्मकतृतीयजातिरूपत्वादिति ।**

**(टिप्पणी)** विशिष्यनिरूपणप्रयोजनं दर्शयति **तदनेनेति** ॥ **जातेरिति** ॥ परोक्तजातेरित्यर्थः । प्रतिज्ञासन्न्यासः कुत्र विरोधेऽन्तर्भवतीत्यत आह **मानसिद्धापलापेति** ॥ तथाच मानविरोध एव तदन्तर्भाव इति भावः । **एकवाक्यगतेति** ॥ तथाच स्वव्याहतावेव तदन्तर्भाव इति भावः । **साक्षादिति** ॥ विरोधान्तर्गतत्वेन स्वयमेवोक्तत्वादित्यर्थः । न च अनेन अन्तर्भावः सूचितो भवतीति विरुद्धापसिद्धान्तादिसूचनाभावादिति वाच्यम् । समुदायमभिप्रेत्य सूचनस्योक्तत्वादिति भावः । **प्रतिषेधेति** ॥ विरोधात्मकेत्यर्थः ।

### *परोक्तजातिनिरूपणम्*

**(टीका) सिद्धमपि दूषणासमर्थमुत्तरं जातिः । असामर्थ्यं च द्विविधम् । साधारणमसाधारणं च । तत्र साधारणं स्वव्याहतिः । असाधारणं तु युक्ताङ्गहीनत्वम् अयुक्ताङ्गाधिकत्वम् अविषयवृत्तित्वञ्चेति । द्वयं च क्वचित् प्रत्येकं क्वचिद् अङ्गाङ्गिभावेन ।**

**(टिप्पणी)** प्रसङ्गात् परोक्तजातिं लक्षयति **सिद्धमपीति** ॥ एतच्च छलेऽतिव्याप्तिवारणाय । तस्या विद्यमानार्थकत्वात् । तथाच अकल्पितदूष्यं दूषणासमर्थमुत्तरं जातिरित्यर्थः । छलस्य कल्पितदूष्यत्वात् । स्वोक्तजातौ परोक्तजातेरन्तर्भावबोधनार्थमसामर्थ्यं विभज्य आह **असामर्थ्यं चेति** ॥ **स्वव्याहतिरिति** ॥ अत एव मदुक्तजात्यन्तर्भाव इति भावः । **असाधारणमिति** ॥ अत्र युक्ताङ्गहीनत्वायुक्ताङ्गाधिक्याविषयवृत्तित्वरूपत्रितयात्मकासाधारणं द्विविधमिति योजना । **प्रत्येकमिति** ॥ एकैकमित्यर्थः । क्वचिदङ्गाङ्गिभावेन क्वचित्परस्परसाहित्यापन्नत्वेनेत्यर्थः ।

**(टीका) ताश्च प्रतिधर्मोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः । सर्वत्र प्रमादः प्रतिभाक्षयो वा अवसरः । आरोप्यमाणदोषभ्रान्तिः फलम् ।**

**(टिप्पणी)** सामान्यलक्षणसङ्गृहीताः कियन्त्यस्ता इत्याकाङ्क्षायामाह **ताश्चेति** ॥ ननु स्वव्याघातकमुत्तरमेतत् अतस्तल्लक्षणनिग्रहप्रकरणेऽनुचितमित्यत आह **सर्वत्रेति** ॥ **प्रतिभेति** ॥ ननु प्रतिभाक्षयेऽपि कथं स्वव्याघातकमुत्तरं वदेत् तस्मिन्नुक्तेऽपि निग्रहापातात् । अन्यथा अप्रतिभया शिरस्ताडनमपि कुर्यादिति चेन्न । ततः प्रथमकक्ष्यायामेव निग्रहो मास्त्वित्यभिप्रायेण वा वादिनः स्वव्याघातकत्वाद्यपरिस्फूर्तौ जय एव स्यादित्यभिप्रायेण वा प्रयोगोपपत्तेः । शिरस्ताडनादौ तु नैवमिति भावः । अवसरः प्रयोगकाल इत्यर्थः । किमर्थं जातिप्रयोग इत्यत आह **आरोप्यमाणेति** ॥ भ्रान्त्युत्पादनार्थं प्रयोग इत्यर्थः ।

### *प्रतिधर्मसमः*

**(टीका) तत्रानभ्युपेतयुक्ताङ्गेन प्रतिप्रमाणेन प्रतिपक्षतया प्रत्यवस्थानं प्रतिधर्मसमः। स च साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः। वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः। यथा 'यदि महानससाधर्म्यात् ह्रदवैधर्म्यात् द्वाभ्यां वा धूमवत्वात् पर्वतोऽग्निमान् तर्हि ह्रदसाधर्म्यात् द्रव्यत्वात् निरग्निमान् किं न स्यात् अविशेषात्' इति । तथा 'महानसवैधर्म्यात् पर्वतत्वाद् अनग्निकः किं न स्यात्'।**

**(टिप्पणी)** प्रथमोद्दिष्टत्वात् प्रतिधर्मसमालक्षणमाह **तत्रेति** ॥ पूर्वोक्तजातिमध्य इत्यर्थः । समबलप्रमाणविरोधव्यावर्तनायाह **अनभ्युपेतयुक्ताङ्गेनेति** ॥ अत्र व्याप्तेरङ्गभूताया अनभ्युपगमात् सहचारदर्शनमात्रेणैवास्याः प्रवृत्तेरिति भावः । ननु परैः साधर्म्यवैधर्म्यसमयोरप्युद्दिष्टत्वात् तदुभयं प्रकृते कुतो नोद्दिष्टमित्यत आह **स चेति** ॥ प्रतिधर्मसम एव परैर्द्विधोद्दिष्टः । अत्र तु विरोधिधर्मत्वेन दूषकतावच्छेदकैक्याद् एकीकृत्योद्देश इति नोक्तदोष इति भावः । उदाहरति **यथेति** ॥ वैधर्म्याद् ह्रदवैधर्म्यादित्यर्थः । द्वाभ्यां वा महानससाधर्म्यह्रदवैधर्म्याभ्यां वेत्यर्थः । धूमे द्वयस्यापि सत्त्वात् सर्वत्रोदाहरणमाह **धूमवत्त्वादिति** ॥ न च द्वाभ्यामित्यनेन साधर्म्यवैधर्म्ययोर्भेदो लभ्यते, अतः कथमेवमिति वाच्यम् । व्याप्तिद्वित्वस्यैव विवक्षितत्वात् व्याप्यद्वित्वस्याविवक्षितत्वात् । तथाच अन्वयव्याप्तेर्व्यतिरेकव्याप्तेर्व्याप्तिभ्यां वा यदि धूमवान् पर्वतोऽग्निमानित्यन्वयः । उभयव्याप्त्याश्रयः क्वचिदेकः क्वचिद् भिन्न इत्यन्यदेतदिति । अत एवाग्रे एकत्र हेतौ रूपद्वयालाभाद् भेदेनोपन्यास इति भावः ।

**(टीका) एवं द्वाभ्यां प्रत्यक्षाऽदिना च प्रत्यवस्थानोदाहरणं द्रष्टव्यम्।**

**(टिप्पणी) द्वाभ्यां** द्रव्यत्वपर्वतत्वरूपसाधर्म्यवैधर्म्याभ्यामित्यर्थः । **प्रत्यक्षादिनेति** ॥ तद्यथा अयं शुक्लः शङ्खत्वादितरशङ्खवदिति प्रयुक्ते यथाऽनुमानात् शुक्लः तथा प्रत्यक्षात् पीत एव किं न स्यात् प्रमाणत्वाविशेषात्, एवमियं व्यक्तिर्न गवयपदवाच्या व्यक्तित्वाद् गोव्यक्तिवदित्युक्ते यद्यनुमानात्र गवयपदवाच्या तदा अनवगतसङ्गतिगवयपदसमभिव्याहृतवाक्यविषयत्वात् व्यक्तिर्न स्यादविशेषात्, एवं यूपे हस्तिबन्धनं न कर्तव्यम् अविहितत्वादित्युक्ते यूपे यूपे हस्तिनं बध्नीयादित्यनेन कर्तव्यमेव न कुत इत्यादि । न च मानान्तरेण प्रतिरोधः । तुल्यबलत्वाभिमतत्वसाध्याभावबोधकत्वादेर्दूषकताबीजस्य तत्रापि सत्त्वादिति ।

**(टीका) अत्र युक्ताङ्गहीनप्रतिप्रमाणोपलम्भो द्वारम् । सत्प्रतिपक्षत्वमारोप्यम् । व्याप्त्याद्यभावात् युक्ताङ्गहानिः । तदनपेक्षायां 'नेदं साधकं सत्प्रतिपक्षत्वात्' इति जात्युत्तरमपि न दूषणं पदार्थत्वात् इति व्याघात इति ॥**

**(टिप्पणी) युक्ताङ्गहीनेति** ॥ अत्र युक्ताङ्गहीनत्वमभ्युपगमसिद्धं द्रष्टव्यम् । न तु वास्तवमेव । पर्वतो वह्निमान् द्रव्यत्वादित्युक्ते धूमवत्त्वान्महानसाधर्म्याद् वह्निमानेव न कुत इत्यस्याप्यसदुक्तिकस्य जातित्वात् । न च अयं सत्प्रतिपक्ष एव । व्याप्तेर्युक्ताङ्गस्यानभ्युपगमात् । सहचारमात्रं पुरस्कृत्य प्रयोगत् । अत एव असदुक्तिके समीचीनस्यापि विषयस्य वाद्युक्तापराधेन दुष्टत्वादिति । **व्याप्त्याद्यभावादिति** ॥ व्याप्त्यादेरङ्गभूतस्याभ्युपमाभावादित्यर्थः । युक्ताङ्गहानिरित्युपलक्षणम् । अयुक्ताङ्गाधिक्यमविषयवृत्तित्वं चापि द्रष्टव्यम् । साधर्म्यमात्रस्यायुक्तस्याङ्गत्वोपगमात् । असत्प्रतिपक्ष एव सत्प्रतिपक्षत्वारोपाच्च । असाधारणं दुष्टत्वबीजमुक्त्वा साधारणं तदाह **तदनपेक्षायामिति** ॥ युक्ताङ्गानपेक्षायामित्यर्थः ।

*उत्कर्षसमः*

**(टीका) वादिसाधनसामर्थ्येन साध्यस्येव व्याप्तिं विना कस्यचिदनिष्टधर्मस्य दृष्टान्तात् पक्षे उत्कर्षः उत्कर्षसमः । यथा 'यदि धूमवत्वात् महानसवत् अग्निमान् पर्वतः तर्हि तत एव स्थाल्यादिमानपि स्यात् । अविशेषात्' इति ।**

**(टिप्पणी)** उद्देशक्रमानुसारेणोत्कर्षसमालक्षणमाह **वादिसाधनसामर्थ्येनेति** ॥ अत्र **साध्यस्येव** इति न लक्षणघटकम् । तेन वादिसाधनेनैव कस्यचिदनिष्टधर्मस्य पक्षेऽविद्यमानस्य दृष्टान्तेह साधनेन

सहदृष्टस्य पक्षे उत्कर्षः आपादनमुत्कर्षसमा जातिरित्यर्थः । नन्विदं पक्षाद् दृष्टान्तेऽनिष्टधर्मापादनाव्यापकम् । न च तदसम्भवि । पर्वतो वह्निमान् धूमवत्त्वान्महानसवदित्युक्ते यदि धूमवान् महानसोऽग्निमान् स्यात् तर्हि पर्वतवत् शिलावानपि स्यादविशेषात् । तथाच धूमवत्त्वं वह्न्यप्रयोजकमेवेत्येवंरूपतत्सम्भवात् । न च तदसङ्ग्राह्यमेव । तस्यापि सामान्यलक्षणाक्रान्ततया विशेषलक्षणानाक्रान्तत्वेन विभागव्याघातादिति चेत् । न । साहचर्यमात्रपुरस्कृतगमकत्वयोः सिषाधयिषितसाध्यसाधनयोरन्यतरेण पक्षदृष्टान्तान्यतरस्मिन्नविद्यमानधर्मारोपणमुत्कर्षसम इत्यस्य विवक्षितत्वात् । **दृष्टान्तात् पक्षे उत्कर्ष** इत्यस्योपलक्षणत्वात् । एतेन साधनेनेव साध्येनापि यदि वह्निमान् स्यात् तर्हि स्थाल्यादिमानपि स्यादित्यापादनसम्भवात् तदव्याप्तिरपि परिहृता वेदितव्या । पक्षे साधनप्रयुक्तोत्कर्षोदाहरणमाह **यथेति** ॥ उत्थानबीजं प्रयोगनिमित्तमित्यर्थः ।

**(टीका) अत्र साधनसाहचर्यदर्शनमुत्थानबीजम् । विशेषविरुद्धत्वमारोप्यम् । व्याप्त्यभावात् युक्ताङ्गहानिः । तदनङ्गीकारे 'नेदं साधकं विशेषविरुद्धत्वात् नित्यत्वसाधककृतकत्ववत्' इति प्रतिषेधहेतावपि नित्यत्वसाधककृतकत्ववत् तत एव हेतोर्धूमवत्वस्यामूर्तवृत्तित्वं च स्यादित्युत्कर्षसाम्यात् व्याघात इति ॥**

**(टिप्पणी)** असाधारणं दुष्टत्वबीजमाह **व्याप्त्यादीति** ॥ साधारणं तदाह **तदनङ्गीकार इति** ॥ इदमुपलक्षणम् । अविषयवृत्तित्वमपि व्याप्यविशेषविरुद्ध एव विशेषविरुद्धत्वापादनादिति । **विशेषविरुद्धत्वादिति** ॥ अत्र विशेषपदं सम्पातायातम् । विरुद्धत्वादित्येव हेतुः । तेन नित्यत्वसाधनकृतकत्वे न साधनवैकल्यम् । अन्यथा तस्य शुद्धविरुद्धत्वेन विशेषविरुद्धत्वाभावात् तदापत्तेः । वैयर्थ्याच्च । विरुद्धत्वमात्रस्यैव साधकत्वप्रयोजकत्वादिति । न च असिद्धिः । विशेषविरुद्धेऽपि विरुद्धत्वस्य सत्वादिति । **तत एव हेतोः** विरुद्धत्वादेवेत्यर्थः ।

*अपकर्षसमः*

**(टीका) दृष्टान्ते साध्यस्य साधनस्य वा व्यापकं किञ्चित् धर्ममारोप्य व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति पक्षे तन्निवृत्त्या साध्यसाधनयोरन्यतरापकर्षः अपकर्षसमः ।**

**(टिप्पणी)** अपकर्षसमां लक्षयति **दृष्टान्त इति ॥ साध्यस्येति ॥** व्यापकं किञ्चिद् धर्ममारोप्य व्यापकत्वविशिष्टं कञ्चिद् धर्ममारोप्येत्यर्थः । तेन स्थाल्यादौ सहचारमात्रेण व्याप्यव्यापकयोर्व्यापकत्व-स्यारोपो न तु स्थाल्यादेरिति दोषानवकाशः । शुद्धायास्तस्या अनारोपेऽपि व्यापकत्वविशिष्टाया-स्तत्रासत्वेनारोपसम्भवात् । व्यापकनिवृत्त्या व्याप्यनिवृत्तिरित्यन्तमनुकूलतर्ककथनपरम् । पक्ष इत्युपलक्षणम् । दृष्टान्तेऽपि द्रष्टव्यम् । तेन सम्बन्धसहचारमात्रपुरस्कृतव्यापकत्वस्य धर्मस्य व्यावृत्त्या पक्षदृष्टान्तयोरन्यतरस्मिन् सिषाधयिषितसाध्यसाधनयोरन्यतरापकर्षोऽपकर्षसमः । यद्वा सहचरितमात्र-धर्मव्यावृत्तिमात्रात् सहचरितधर्मान्तरव्यावृत्त्या परानिष्टापादनमपकर्षसम इति लक्षणं बोध्यमिति । ननु व्यापकानुपलब्ध्या साध्यस्य हेतोर्वा बाधः स दूषणमेवातो न जातिरिति । न । साहचर्यमात्रस्या-दृष्टव्यभिचारत्वाद् दृष्टोपाधिकत्वमात्रविशेषितस्य व्यापकत्वस्य विवक्षितत्वात् । एतादृशव्यापकनिवृत्तेश्च सिद्धत्वेऽपि दूषणासमर्थत्वात् । तथाऽपि साध्यापकर्षपक्षे प्रकरणसमतोऽविशिष्ट एव । हेत्वपकर्षपक्षे त्वसम्भवि । तस्य स्पष्टदृष्टत्वादिति चेत् । न । प्रकरणसमायां यद्यपि बाधदेशना तथापि स्वसाधनस्य बलवत्त्वमपुरस्कृत्य सा तत्रोच्यते । इह तु स्वयं विवक्षितव्यापकत्ववशाद् यादृशव्यापकानुपलब्धित्वं तदेव बलवत्त्वमित्यभिमानात् तत्पुरस्कृत्येति विशेषात् । अत एव स्पष्टदृष्टस्यापि साधनस्य बाधनमिति घटते । अत एव प्रतिरोधदेशनेऽप्यस्य न साधर्म्यवैधर्म्ययोरन्तर्भावः । तत्र प्रतिरोधाननुकूलमेव बलं पुरस्कृत्य प्रवृत्तिरिह तु यथोक्तमेवाभिमानिकं बलमनुरुद्ध्याहीनबलेनैव प्रतिरोधास्सङ्गनादिति ।

**(टीका) यथा महानसे अग्निमत्त्वस्य धूमवत्त्वस्य वा व्यापकं स्थाल्यादिमत्त्वं पर्वतात् व्यावर्तमानं तत् व्यावर्तयति । व्यापकाभिमतव्यावृत्त्युपलम्भः अत्रोऽत्थानबीजम् । साध्यापकर्षे बाधितविषयत्वं सत्प्रतिपक्षत्वं वा आरोप्यम् । साधनापकर्षे असिद्धत्वम् । व्याप्त्यभावात् युक्ताङ्गत्यागः । तदनभ्युपगमे 'नेदं साधकं बाधितत्वात् अनुष्णत्वसाधकपदार्थत्ववत्' इति प्रतिषेधहेतावपि पदार्थत्वे असाधकत्वं बाधित-विषयत्वं वा सर्वधर्मिनिष्ठत्वेन व्याप्तं दृष्टमिति धूमवत्वात् व्यावर्तमानमसाधकत्वाद्यपि व्यावर्तयतीत्यपकर्षसाम्यात् व्याहतिरिति ॥**

**(टिप्पणी)** उदाहरति **महानस इति ॥ व्यापकाभिमतेति ॥** व्यापकत्वाभिमतेत्यर्थः । उत्थानबीजं प्रयोगे उक्तिसम्भवः । दूषकताप्रयोजकमारोप्य दोषमाह **साध्यापकर्ष इति ॥** इदं त्वधिकबलत्वपुरस्कारे । तदपुरस्कारे त्वाह **सत्प्रतिपक्षत्वं वेति ॥** साधनापकर्षे आरोप्यं दोषमाह **साधनापकर्ष इति ॥** एवं

दृष्टान्तेऽप्यपकर्षे दोषाशेषो द्रष्टव्यः । यद्यपि दृष्टान्ते साध्यापकर्षो न सम्भवति । पक्षे साध्यस्य सन्दिग्धत्वेन तद्व्यापकत्वस्य पक्षवृत्तिधर्मे आरोपयितुमशक्यत्वात् । तथापि साधनापकर्षः सम्भवत्येवेति तदभिप्रायेणैव पक्षदृष्टान्तयोरित्यादि लक्षणे प्रवेशितमित्यवधेयम् । असाधारणं दुष्टत्वबीजमाह **व्याप्त्यादीति** ॥ आपाद्यव्यावृत्तिप्रतियोगिन आपादकव्यावृत्तेरेवापाद्यव्यावृत्तिनिरूपितव्याप्त्याद्यभावादित्यर्थः । प्रतियोगिनोर्व्याप्यव्यापकभावाभावेऽनुयोगिनोऽपि तथाभावनियमादिति । साधारणदुष्टत्वबीजमाह **तदनभ्युपगम इति** ॥ सर्वधर्मिनिष्ठत्वेन केवलान्वयित्वेनेत्यर्थः । तद्व्यावर्तमानं केवलान्वयित्वं व्यावर्तमानमित्यर्थः ।

### *वर्ण्यसमः*

**(टीका) पक्षमात्रविवक्षितरूपवद्धेतुमत्त्वतदभावयोः सपक्षस्यापि साध्यत्वापादनं वर्ण्यसमः । असिद्धार्थत्वम् आरब्धसाध्यज्ञापनशक्तिमत्त्वं व्याप्तिग्राहकप्रमाणशून्यत्वं संशयसमानविषयत्वं स्वरूपविशेषश्चेत्येतानि हेतोः पक्षमात्रविवक्षितरूपाणि।**

**(टिप्पणी)** वर्ण्यसमालक्षणमाह **पक्षमात्रेति** ॥ हेतुमत्त्वतदभावयो ऋते साध्यत्वापादनमित्यर्थः । तेन हेतुमत्त्वतदभावाभ्यामित्यर्थः । यद्यपि हेतुमत्त्वतदभावयोर्नापादकत्वम् । किन्तु तज्ज्ञानस्य तथापि पक्षीयसिद्ध्यनुगुणरूपमात्रविशिष्टहेतुमत्त्वतदभावान्यतरारोपेण दृष्टान्तस्य साध्यहेत्वन्यतरवत्त्वेन ख्यापनीयत्वापादनं वर्ण्यसम इति लक्षणं बोध्यम् । पक्षमात्रविवक्षितं रूपमाह **असिद्धार्थत्वमिति** ॥ साध्यवत्त्वेनानिश्चीयमानधर्मिवृत्तित्वमित्यर्थः । **आरब्धेति** ॥ आरब्धसाध्यज्ञापनम् = आरब्धसाध्यज्ञानानुकूलव्यापारः । तद्रूपशक्तिमत्त्वमित्यर्थः । स च व्यापारः साध्यज्ञानानुकूला इच्छैव । तद्वत्त्वे तेन सिषाधयिषितधर्मवत्त्वनोद्देश्यतासामानाधिकरण्यमित्यर्थः पर्यवस्यति । एतेन साध्यज्ञानानुकूलशक्तिमत्त्वं यदि व्याप्तिमत्त्वं तदा पक्षमात्रविवक्षितेत्यनेन विरोधः व्याप्तेर्दृष्टान्तेऽपि विवक्षितत्वात् । यदि पक्षधर्मितावत्त्वमित्यर्थस्तदा संशयसमानविषयत्वमित्यनेनाभेदः । सन्दिग्धसाध्यवत्त्वस्यैव पक्षत्वादित्यादि निरस्तम् । सिषाधयिषितसाध्यवद्वृत्तित्वलक्षणस्य साध्यज्ञापनशक्तिमत्त्वस्यैव प्रकृतार्थत्वादिति । **संशयेति** ॥ समानविषयकसंशयजननसमर्थसंस्कारसाचिव्यमित्यर्थः । तेन संशयस्य पूर्वं नष्टत्वेऽपि तज्जनकसंस्कारस्य सत्त्वान्न दोषः । तादृशसंस्कारस्य सिद्धिमात्रनिवर्त्यत्वात् । स्वरूपविशेषो व्यक्तिभेद इत्यर्थः ।

**(टीका)** **तत्रासिद्धार्थं पर्वत इव महानसे धूमवत्वं वर्तते न वा। आद्ये महानसोऽपि साध्यवत्वेन साध्यः स्यात्। अन्यथा साध्यवैकल्यापातात्। द्वितीये तद्रूपहेतुमत्तया साध्यः स्यात्। अन्यथा साधनवैकल्यापातात्। एवं रूपान्तरेष्वपि द्रष्टव्यम्।**

**(टिप्पणी)** तत्राद्यरूपप्रयुक्तं सपक्षस्य साध्यत्वापादनशरीरमाह **तत्रासिद्धार्थमिति** ॥ अनिश्चितसमानाधिकरणसाध्यकमित्यर्थः। तद्रूपवद्धेतुमत्तया असिद्धार्थत्ववद्धेतुमत्तयेत्यर्थः। **अन्यथेति** ॥ पक्षीयसिद्ध्यनुकूलरूपविशेषस्यैव साधनत्वादिति भावः। **एवं रूपान्तरेष्वपीति** ॥ तथाहि। आरब्धसाध्यज्ञापनशक्तिमत् पर्वत इव महानसे धूमवत्त्वं वर्तते न वा। आद्ये साधर्म्यज्ञापनस्य जातत्वात् साध्यधर्मवत्त्वेन ज्ञाप्यः स्यात्। अन्यथा साध्यवैकल्यात्। द्वितीये तद्रूपविशिष्टहेतुमत्तया साध्यं स्यादन्यथा साधनवैकल्यापातादिति। एवं व्याप्तिग्राहकप्रमाणशून्यं पर्वत इव महानसे धूमवत्त्वं वर्तते न वा। आद्ये व्याप्यत्वासिद्धिः। यद्वा व्याप्तिग्राहकं सहचारज्ञानम्। तच्छून्यत्वं साध्यज्ञानाभावाद्वा हेतुमत्त्वज्ञानाभावाद्वा। आद्ये साध्यवैकल्यमन्त्ये साधनवैकल्यमेव। द्वितीये तद्रूपविशिष्टहेतुमत्तया साध्यं स्यात्। एवं संशयसमानविषयत्वविशिष्टं वर्तते न वा। आद्ये साध्यवैकल्यमन्त्ये साधनवैकल्यम्। एवं पक्षे यो व्यक्तिविशेषः स दृष्टान्ते वर्तते न वा। आद्ये साध्यवैकल्यं तस्य साध्यसामानाधिकरण्यानिश्चयात्। अन्त्ये साधनवैकल्यमित्यादिक्रमेणेति। ननूत्कर्षसमैवायं पक्षधर्माणां दृष्टान्ते प्रसञ्जनादिति चेन्न। साधनबलेनोत्कर्षस्य प्रवृत्तेः। तत्र साधने सहचारदर्शनस्योत्थानबीजत्वात्। अस्य तु दृष्टान्तदार्ष्टान्तिकभावमात्रबलेन प्रवृत्तेः पक्षमात्रविवक्षितरूपवद्धेतुमत्त्वादर्शनस्योत्थानबीजत्वादिति भेदात्।

**(टीका)** **अत्र पक्षमात्रविवक्षितरूपवद्धेतुमत्वादर्शनमुत्थानहेतुः। साध्यसाधनवैकल्ये आरोप्ये। 'नायं दृष्टान्तः साधनाङ्गं साध्याऽदिविकलत्वात् सम्मतवत्' इत्यत्रापि यथोक्तसाध्यत्वस्य वक्तुं शक्यत्वात् व्याघातः। पक्षवृत्तिहेतुरूपाणां सपक्षवर्तिन्यपि सञ्चरणात् अविषयवृत्तित्वञ्च। अयुक्ताङ्गाधिकत्वं वा सपक्षवृत्तिहेतोरयुक्तानामेवासिद्धार्थत्वादीनामङ्गीकारादिति॥**

**(टिप्पणी)** **उत्थानहेतुः** प्रत्यवस्थाने कारणमित्यर्थः। साधारणं दुष्टत्वबीजमाह **नायं दृष्टान्त इति** ॥ **यथोक्तसाध्यत्वस्येति** ॥ साध्यविकलत्वं प्रकृतदृष्टान्त इव सम्मतेऽसिद्धार्थे वर्तते न वा। आद्ये साध्यधर्मवत्तया सम्मतस्यापि साध्यत्वापत्तिः। न हि साध्यविकले दृष्टान्तता। अन्त्ये तद्रूपविशिष्टहेतुमत्तया साध्यत्वापत्तिः। न हि साधनविकलो दृष्टान्तः सम्भवतीत्येवं क्रमेणेति। असाधारणं दुष्टत्वबीजमाह **पक्षवृत्तीति** ॥ अयुक्ताङ्गाधिकत्वमेवाह **सपक्षवृत्तीति** ॥

*अवर्ण्यसमः*

**(टीका) सपक्षमात्रविवक्षितरूपवद्धेतुमत्वतदभावयोः पक्षस्य असाध्यत्वापादनमवर्ण्यसमः । सिद्धार्थत्वं प्रवृत्तसाध्यज्ञापनशक्तिमत्त्वाभावः व्याप्तिग्राहकप्रमाणवत्त्वं निश्चयसमानविषयत्वं रूपभेदश्च इत्येतानि हेतोः सपक्षमात्रविवक्षितरूपाणि । तत्र सिद्धार्थं धूमवत्वं महानस इव पर्वते वर्तते न वा ? आद्ये साध्यस्य सिद्धत्वात् पक्षे न साध्यः स्यात् । द्वितीयेऽपि हेतोः स्वरूपासिद्धत्वेन असाध्यः स्यात् इति ।**

**(टिप्पणी)** अवर्ण्यसमालक्षणमाह **सपक्षेति** ॥ सपक्षमात्रविवक्षितरूपवद्धेतुमत्त्वतदभावान्यतरारोपेण पक्षस्यासाध्यत्वापादनमवर्ण्यसम इत्यर्थः । वर्ण्यसमावैपरीत्येन सपक्षमात्रविवक्षितरूपाण्याह **सिद्धार्थत्वमिति** ॥ **निश्चयेति** ॥ समानविषयकसंशयजननसमर्थसंस्कारसाचिव्याभाव इत्यर्थः । तेन नासिद्धार्थत्वाभेद इत्यवधेयम् । तत्राद्ये प्रत्यवस्थानक्रममाह **तत्र सिद्धार्थमिति** ॥ **हेतोरिति** ॥ सिद्धार्थत्वविशिष्टस्यैव हेतुत्वादिति भावः ।

**(टीका) एवं रूपान्तरेष्वपि द्रष्टव्यम् । अत्र सपक्षमात्रविवक्षितरूपवद्धेतुमत्तया पक्षस्यासिद्धिः कारणम् । स्वरूपासिद्ध्यादि आरोप्यम् । वर्ण्यसमवदेव दुष्टत्वमूलमिति ॥**

**(टिप्पणी) एवं रूपान्तरेष्वपीति** ॥ पूर्वव्याख्यातविपर्ययेणैतद् व्याख्यातप्रायमतो नेह वितन्यत इत्यवधेयम् । यद्यपि यथोत्कर्षापकर्षयोः पक्षदृष्टान्तान्यतरस्मिन् प्रसङ्गस्तथा वर्ण्यत्वावर्ण्यत्वयोरप्युभयत्र प्रसङ्गो वक्तुमर्हति तथापि पक्षे साध्यत्वस्य सपक्षेऽसाध्यत्वस्यापादने उक्तिसम्भवाभावान्न प्रसङ्ग उक्तः । आपादने इष्टापत्तेः । बाधितस्यैव आपाद्यत्वादिति प्रत्येकमेव जातिद्वयमुक्तमित्यवसेयम् । उत्थानबीजमाह **अत्रेति** ॥ **स्वरूपासिद्ध्यादीति** ॥ आदिपदादाश्रयासिद्धिः । साध्यनिश्चयवत्त्वेन पक्षतारूपपक्षविशेषणाभावादिति । **वर्ण्यसमवदिति** ॥ अयं पक्षो न साध्यसाधकः पक्षतारहितत्वात् सम्मतवदिति । अत्राप्यन्यत्वापादनसम्भवाद् व्याघातः । दृष्टान्तवृत्तिधर्मस्य पक्षवर्तिन्यपि सञ्चरणादविषयवृत्तित्वमयुक्ताङ्गाधिकत्वादिति भावः ।

*विकल्पसमः*

**(टीका) साधनस्य धर्मान्तरेण धर्मान्तरस्य साध्यधर्मेण धर्मान्तरस्य धर्मान्तरेण वा व्यभिचारेण साधनस्यापि साध्यव्यभिचारापादनं विकल्पसमः । तत्र साधनस्य धर्मान्तरेण व्यभिचारस्त्रिविधः । पक्षदृष्टान्तयोः पक्षयोर्दृष्टान्तयोश्चेति । तत्र आद्यो यथा 'महानसे**

**धूमवत्त्वमपर्वतत्वेन सह वर्तमानमपि यथा पक्षे तेन सह न वर्तते, तथा अत्र अग्निमत्वेन सह वर्तमानमपि पक्षे न तथा वर्तेत' इति।**

**(टिप्पणी)** विकल्पसमां लक्षयति **साधनस्येति** ॥ अत्र धर्मान्तरव्यभिचारदर्शनेन तद्दृष्टान्तेन हेतौ साध्यव्यभिचारापादनं विकल्पसम इति लक्षणम् । धर्मान्तरव्यभिचारश्च त्रिधेत्यभिप्रायेण पूर्वप्रतीकमित्यवधेयम् । आपादनक्रमस्तु सामान्यतः । यथाऽयं व्यभिचरति तथा हेतुरपि व्यभिचरेदविशेषादिति । विभक्तस्य विभागमाह **साधनस्येति** ॥ **धर्मान्तरेणेति** ॥ साध्यधर्मेण । प्रतियोगितदभावसामानाधिकरण्यं व्यभिचारोऽधिकरणद्वयेन सम्भवतीत्यत उक्तम् **पक्षदृष्टान्तयोरिति** ॥ एवमग्रेऽपि । उदाहरति **तत्राद्य इति** ॥ धूमवत्त्वं यथाऽपर्वतत्वं पर्वते व्यभिचरति तथा पर्वते वह्निमत्त्वमपि व्यभिचरेदित्यर्थः । पक्षयोरेव धर्मेण सपक्षयोरेव व्यभिचारोदाहरणमाह **द्वितीयो यथेति** ॥ यथा गिरौ शिखरे च धूमवत्त्वमुच्चत्वतदभावनीचत्वतदभावसमानाधिकरणमेवम् ।

**(टीका) द्वितीयो यथा 'यथा गिरिशिखरयोरुच्चनीचत्वाभ्यां धूमवत्वस्य व्यभिचारस्तथाऽग्निमत्वेनापि स्यात्' इति। तृतीयो यथा 'यथा महानसयोरल्पत्वमहत्वाभ्यां धूमवत्वं व्यभिचरति तथा अग्निमत्वेनापि व्यभिचरेत्' इति। धर्मान्तरस्य साध्यधर्मेण यथा 'यथा द्रव्यत्वमग्निमत्वव्यभिचारि तथा धूमवत्वमपि स्यात्' इति। धर्मान्तरस्य धर्मान्तरेण यथा 'यथा रूपं रसव्यभिचारि तथा धूमवत्वमग्निमत्वव्यभिचारि स्यात्' इति।**

**(टिप्पणी)** दृष्टान्तपक्षयोरेव व्यभिचारोदाहरणमाह **द्वितीयो यथेति** ॥ यथा गिरौ शिखरे च धूमवत्त्वं लम्बत्वतदभावनीचत्वतदभावसामानाधिकरणमेवं दृष्टान्तपक्षयोरपि वह्नितदभावसमानाधिकरणं स्यादित्यर्थः । अत्र दृष्टान्तद्वयं विकल्पेन । तेनोच्चत्ववद्वा व्यभिचरेन्नीचत्ववद्वा व्यभिचरेदित्यर्थः । अतो नाधिक्यम् । यद्वा उच्चत्वाभाव एव नीचत्वमिति नाधिक्यम् । एवमग्रेऽपि । **तृतीयो यथेति** ॥ दृष्टान्तयोरेव धर्मेण दृष्टान्तयोरेव यथा धूमवत्त्वं व्यभिचरति तथा दृष्टान्तपक्षाभ्यां वह्निमत्त्वं व्यभिचरेदित्यर्थः । आद्यविभागे द्वितीयव्यभिचारोदाहरणमाह **धर्मान्तरस्येति** ॥ तत्रैव तृतीयोदाहरणमाह **धर्मान्तरस्य धर्मान्तरेणेति** ॥ इदमुपलक्षणम् ।

**(टीका) तत्र (अत्र) क्वचिद्व्यभिचारदर्शनमुत्थानहेतुः। अनैकान्तिकत्वमारोप्यम्। अन्यत्र व्यभिचारेणात्र व्यभिचारापादने व्याप्त्यभावात् युक्ताङ्गहानिः। तदनङ्गीकारे 'नेदं साधकम् अनैकान्तिकत्वात्' इति प्रतिषेधहेतोरपि तथात्वापातेन व्याघातः' इति॥**

**(टिप्पणी)** अन्यदपि व्यभिचारोदाहरणं द्रष्टव्यमित्युत्थानहेतुप्रदर्शनव्याजेनाह [1]**तत्र क्वचिदिति** ॥ तद्यथा धर्मान्तरस्य हेतुं प्रति वा साध्यस्य धर्मान्तरं प्रति वा साध्यहेतुं प्रति वा । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा प्रमेयत्वे समानेऽपि किञ्चिद् घटत्वादि व्यभिचरति तथा कृतकत्वमप्यनित्यत्वं व्यभिचरेदिति । तृतीयं यथा । यथा धूमं वह्निर्व्यभिचरति तथा धूमोऽपि वह्निं व्यभिचरिष्यतीत्यादीति । असाधारणं दुष्टत्वबीजमाह **अन्यत्र व्यभिचारेणेति** ॥ साधारणं तदाह **तदनङ्गीकार इति** ॥ आपादने व्याप्तेरङ्गत्यानङ्गीकार इत्यर्थः । तथात्वापातेन व्यभिचरितयत्किञ्चिद्धर्मदृष्टान्तेन व्यभिचरितत्वापातेन ।

*साध्यसमः*

**(टीका) पक्षादीनां सिद्धानामपि तेनैव हेतुना साध्यत्वापादनं साध्यसमः । यथा पर्वतादिसिद्ध्यर्थमपि धूमवत्त्वमेव प्रयोक्तव्यम् । अन्यथा क्रोडीकृतधर्म्यादिविषयस्य लिङ्गस्य तत्राप्रयोजकत्वे साध्येऽपि तथात्वापातात् ।**

**(टिप्पणी)** उद्देशक्रमानुसारेणान्यजातिलक्षणमाह **पक्षादीनामिति** ॥ नन्वादिपदाद् दृष्टान्तस्य परिग्रहः । तथा च दृष्टान्ते साध्यत्वापादनं वर्ण्यसम एवेत्यत आह **तेनैवेति** ॥ तत्र साध्यत्वमात्रापादनमत्र तु तेनैवेति विशेष इति भावः । आपादनप्रकारमेवाह **पर्वतादीति** ॥ क्रोडीकृतधर्म्यादिविषयस्य धर्म्यादिविषयकसिद्धिसमर्थस्य । पक्षस्याप्यनुमितौ भानादिति भावः । **तत्रेति** ॥ धर्म्यादिसिद्धावित्यर्थः । **तथात्वापातादिति** ॥ तद्विषयकसिद्धिसमर्थत्वाविशेषादिति भावः ।

**(टीका) दृष्टान्तेऽपि साध्यसिद्ध्यर्थमयमेव हेतुः प्रयोक्तव्यः । अन्यथा पक्षेऽपि अप्रयोजकत्वापातात् । अन्यत्समानम् । तथा च तत्सिद्ध्यर्थं यावत् न प्रयुज्यते तावद् आश्रयासिद्ध्यादीति ।**

**(टिप्पणी)** आदिपदसङ्ग्राह्यमापादनप्रकारमाह **दृष्टान्तेऽपीति** ॥ वर्ण्यसमव्यवच्छेदार्थमाह **अयमेव इति** ॥ **पक्षेऽपीति** ॥ साध्याव्याप्यत्वस्याविशेषादिति भावः । साध्यवैकल्यादिकमारोप्यं वर्ण्यसमवदेव । तेनैव हेतुनेत्यादिकृत एव विशेष इत्याह **अन्यत् समानमिति** ॥ अप्रयोगे दोषमाह **तथात्वेति** ॥

**(टीका) अत्र विशिष्टसाधकत्वाभिमान उत्थानहेतुः । आश्रयासिद्ध्यादिकमारोप्यम् । एवं प्रतिषेधहेतावपि वक्तुं शक्यत्वात् व्याघातः । अयुक्ताङ्गाधिकत्वञ्च तेनैव हेतुना सेद्धेरयुक्तत्वात् । सिद्धत्वमात्रेण साध्यसिद्धिदर्शनादिति ॥**

१. 'अत्र' इति प्रचलितपाठः ।

**(टिप्पणी)** एतादृशासदुत्तरप्रयोगहेतुभूतमुक्तिसम्भवमाह **अत्र विशिष्टेति** ॥ तज्जन्यसिद्धिविषयत्व-स्येत्यर्थः । साध्यतया प्रयोगे व्यापकत्वस्य तन्त्रत्वान्न तु तज्जन्यसिद्धिविषयत्वस्येत्यभिप्रायेणोक्तम् **अभिमान इति** ॥ आश्रयासिद्ध्यादिकमित्यत्रादिपदात् पक्षसिद्ध्यर्थमिनद्धेतुत्वप्रयोगे साध्येऽप्यप्रयोजकत्व-मित्यादि । साधारणं दुष्टत्वबीजमाह **एवमिति** ॥ असाधारणं तदाह **अयुक्ताङ्गाधिकत्वं चेति** ॥ अन्यथा जात्युत्तरे-ऽप्ययं प्रसङ्ग इत्यस्योक्तत्वादिति भावः ।

**(टीका) साधनस्य साध्यप्राप्तिपक्षनिरासेन प्राप्तिपक्षमवज्ञेष्य तद्दूषणं प्राप्तिसमः । यथा धूमवत्त्वज्ञानम् अग्निमत्त्वज्ञानं प्राप्य उत्पादयति अप्राप्य वा । द्वितीयेऽतिप्रसङ्गात् प्राप्येति वक्तव्यम् । सता च प्राप्तिः इति प्रागेव अग्निमत्वज्ञानसद्भावात् [1]व्यर्थमेवानुमानम् ।**

**(टिप्पणी)** प्राप्तिसमालक्षणमाह **साधनस्येति** ॥ **निरासेनेति** ॥ अतिप्रसङ्गादिति भावः । तद्दूषणं साधनदूषणमित्यर्थः । तेन प्राप्तिमात्रबलेनाविशेषापादनात् साधनदूषणाभिधानं प्राप्तिसम इति लक्षणम् । प्रतिपक्ष-परिशेषमाह **यथेति** ॥ **अतिप्रसङ्गादिति** ॥ अप्राप्तत्वाविशेषाद् वह्निमत्त्वज्ञानवद् घटवत्त्वज्ञानमपि जनयेदित्यर्थः । **प्रागेवेति** ॥ उद्देशानुमितेः प्रागेवाग्निमत्त्वज्ञानसद्भावात् सत्त्वाविशेषेण किं कस्य साधनं स्यादिति । [1]**व्यर्थमेवानुमानम्** असाधकमेव लिङ्गज्ञानमित्यर्थः ।

**(टीका) एवं धूमवत्त्वज्ञानम् अग्निमत्त्वं ज्ञापयति प्राप्य अप्राप्य वा । द्वितीये अतिप्रसङ्गात् प्राप्य इति वक्तव्यम् । लिङ्गज्ञानस्य साध्यप्राप्तिश्च विषयविषयिभाव एव सम्भवति । तथा च धूमवत्वज्ञाने वह्निमत्वस्यापि स्फुरणात् व्यर्थमनुमानमिति ।**

**(टिप्पणी)** साधके प्रत्यवस्थानप्रकारमुक्त्वा ज्ञापके तमाह **एवमिति** ॥ **अतिप्रसङ्गादिति** ॥ वह्निमत्त्वमिव घटवत्त्वमपि ज्ञापयेदित्यर्थः । **विषयविषयिभाव एवेति** ॥ साध्येन सह संयोगसमवाययो-रसम्भावितत्वादिति भावः । **तथा चेति** ॥ एतादृक्प्राप्तिस्वीकार इत्यर्थः । **व्यर्थमिति** ॥ सिद्धसाधनादिति भावः ।

**(टीका) अप्राप्तावतिप्रसङ्गः अत्रोत्थानबीजम् । साध्यात् पूर्वं सिद्धेः, साधनविशे-षणस्याभावात् विशेषणासिद्धिरारोप्या । प्रतिषेधहेतावपि 'प्रतिषेधं प्राप्य अप्राप्य वा' इत्यादेः साम्यात् व्याघातः । अयुक्ताङ्गाधिकत्वं च कार्यप्राप्तेरयुक्तत्वात्, कारणप्राप्ति-**

1. 'एव'कारः टीकायां टिप्पण्यनुसारेण ।

**सद्भावात्, विषयविषयिभावस्य च अयुक्तत्वात्, साध्यव्याप्तलिङ्गविषयकत्वस्य च सत्त्वात् इति ॥**

**(टिप्पणी)** प्रयोक्तुरुक्तिसम्भवमाह **अप्राप्ताविति ॥ साधनविशेषणस्येति ॥** सिद्धिजनकं हि साधनमित्युच्यते । तथा च सिद्धिपूर्वं विशेषणीभूतायाः सिद्धेरभावाद् विशेषणासिद्धिरिति भावः । साधारणं दुष्टत्वबीजमाह **प्रतिषेधहेताविति ॥** असाधारणं तदाह **अयुक्ताङ्गाधिकत्वं चेति ॥** कथं तदित्यत आह **कार्येति ॥** अन्यथा कार्यमात्रानुपपत्तिप्रसङ्गादिति भावः । अतिप्रसङ्गनियामकमाह **कारणेति ॥** न च प्राप्तान्यपि कारणानि कार्यप्राप्तत्वाविशेषादकार्यमपि जनयेयुरित्यपि वाच्यम् । अत्र स्वभावस्यैव शरणत्वात् । अन्यथा कार्यमात्रानुपपत्त्यापत्तेरित्युक्तत्वादिति भावः । ज्ञापकेऽसाधारणं दुष्टत्वबीजमाह **विषयेति ॥** कथं तर्हि धूमवत्त्वं घटवत्त्वमपि न ज्ञापयतीत्यत आह **साध्यव्याप्तेति ॥** तथाच यत् साध्यव्याप्यविषयकज्ञानं तत् साध्यज्ञापकमतो नातिप्रसङ्ग इति भावः ।

*अप्राप्तिसमः*

**(टीका) प्राप्तिपक्षनिरासेन अप्राप्तिपक्षं श्लेषयित्वा तद्दूषणम् अप्राप्तिसमः । यथा, पूर्ववत् प्राप्तिपक्षस्य दुष्टत्वात् अप्राप्य इति वक्तव्यम् । न च तत् युक्तम् । न हि अप्राप्य अग्निः काष्ठं दहति । न हि अप्राप्य दीपः प्रकाश्यं प्रकाशयति । प्राप्तावुक्तानुपपत्ति-दर्शनमुत्थानहेतुः । साध्यप्राप्तेर्हेतुविशेषणत्वेन विशेषणासिद्धिरारोप्या । पूर्ववत् दुष्टत्वमूलम् इति ॥**

**(टिप्पणी)** अप्राप्तिसमां लक्षयति **प्राप्तिपक्षेति ॥** सिद्धत्वाविशेषात् किं कस्य कारणमित्यादिपूर्वोक्तदोषेण प्राप्तिपक्षं निरस्याप्राप्तिमात्रपुरस्कारेण साधनदूषणाभिधानमप्राप्तिसम इति । निरस्येत्यन्तं वस्तुगतिमनुरुध्य न तु लक्षणप्रविष्टमित्यवधेयम् । प्रत्यवस्थानप्रकारमाह **यथा पूर्ववत् प्राप्तिपक्षस्येति ॥** पूर्वोक्तदोषेणेत्यर्थः । ज्ञापके उदाहरति **न ह्यप्राप्य दीप इति ॥ साध्यप्राप्तेरिति ॥** अग्निप्रदीपादिदृष्टान्तेन साध्यप्राप्तिविशिष्टस्यैव हेतुत्वादिति भावः । **पूर्ववदिति ॥** व्याघातोऽयुक्ता-ङ्गाधिकत्वं चेत्यर्थः । साध्यप्राप्तिविशेषणस्यानङ्गत्वादिति भावः ।

*प्रसङ्गसमः*

**(टीका) सिद्धस्यापि पक्षादेः उत्पादकज्ञापकानवस्थाप्रसञ्जनं प्रसङ्गसमः । यथा, पर्वतस्यापि किम् उत्पादकम् ? तस्यापि अन्यत् इत्यनवस्था । कस्यचित् कारणाभावे अन्यस्यापि तत्प्रसङ्गात् । तथा प्रमाणेऽपि किं प्रमाणम् ? तत्राप्यन्यदित्यनवस्था । कस्यचित् प्रमाणान्तरं विना सिद्धावन्यत्रापि तथात्वापातादिति । कारणादिनियमाभिमानोऽत्र द्वारम् । तर्कपराहतिरारोप्या । जात्युत्तरेऽप्येवं वक्तुं शक्यत्वात् व्याघातः । अनवस्थाङ्गमूलक्षतेरभावात् युक्ताङ्गहानिश्चेति ॥**

**(टिप्पणी)** क्रमात् प्रसङ्गसमां लक्षयति **सिद्धस्यापीति** ॥ अपिरनौचित्यप्रदर्शनाय । सिद्धकारणज्ञापकयोरप्रस्तुतत्वेन तत्प्रश्नस्यानुचितत्वात् । न चैवमर्थान्तरमेव । अनवस्थया सिद्धत्वाभावापादनेन प्रकृतोपयुक्तत्वादिति । आदिपदात् प्रमाणादिपरिग्रहः । अनवस्थाप्रसञ्जनप्रकारमाह **यथेति** ॥ **अन्यस्यापि तत्प्रसङ्गादिति** ॥ वह्निज्ञानस्यापि अकारणत्वप्रसङ्गादित्यर्थः । ज्ञापकेऽनवस्थाप्रसञ्जनप्रकारमाह **तथा प्रमाणेऽपीति** ॥ प्रकृतसाध्येऽपि प्रमाणं विनैव सिद्धत्वापातादित्यर्थः । आदिपदात् सप्रमाणकत्वपरिग्रहः । **तर्केति** ॥ अनवस्थाख्यतर्कपराहतिरित्यर्थः । असाधारणं दुष्टत्वबीजमाह **अनवस्थाङ्गेति** ॥ अनवस्थामात्रस्यैव दोषत्वे जगद् विप्लव्येतेति भावः । **मूलक्षतेरभावादिति** ॥ अनादित्वादिति भावः ।

*प्रतिदृष्टान्तसमः*

**(टीका) हेतुं विना प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधोद्भावनं प्रतिदृष्टान्तसमः । यथा 'ह्रदवत् पर्वतो निरग्निरेव' इति । 'निरग्निकोऽपि किं न स्यात्' इति वा । अत्र हेतुरनङ्गं साध्यातिदेशे इत्यभिमान उत्थानबीजम् । बाधादि आरोप्यम् । बाधाद्यङ्गस्य अधिकबलादेरनभ्युपगमात् युक्ताङ्गत्यागः । साधनस्य हेतुसाहित्यात् । अन्यत्र तदनुपन्यासात् । तस्यानङ्गत्वे 'प्रतिदृष्टान्तो न दूषकः रासभादिवत्' इति व्याघात इति ॥**

**(टिप्पणी)** प्रतिदृष्टान्तसमं लक्षयति **हेतुं विनापीति** ॥ एतदेवाह **दृष्टान्तमात्रेणेति** ॥ बाधप्रतिरोधोद्भावनं विकल्पेन । तथा च दृष्टान्तमात्रपुरस्कारेण बाधप्रतिरोधोद्भावनं प्रतिदृष्टान्तसम इति लक्षणं द्रष्टव्यम् । उद्भावनप्रकारमाह **यथेति** ॥ सत्प्रतिपक्षे तदाह **निरग्निकोऽपीति** ॥ **साधनस्येति** ॥ साधनस्याधिकबलप्रतिहेतुसाहित्यात् । **अन्यत्र तदनुपन्यासात्** बाधानुपन्यासादित्यर्थः । अधिकेत्यत्र

समपदं दत्वा प्रतिपक्षेऽपि योजनीयम् । यद्वा साधनस्य प्रतिदृष्टान्तस्य हेतुसाहित्यादन्यत्र हेत्वसहितस्य तदनुपन्यासाद् दृष्टान्तत्वानुपन्यासादित्यर्थः । केवलस्यासाधकत्वादिति भावः । **तस्येति** ॥ अधिकबलत्वादेरित्यर्थः ।

*अनुत्पत्तिसमः*

**(टीका) पक्षादीनां प्रागुत्पत्तेः हेतुवृत्त्यभावेन असिद्ध्याद्युद्भावनम् अनुत्पत्तिसमः । यथा पर्वतस्योत्पत्तेः प्रागपि पक्षत्वात् अनुत्पन्ने तस्मिन् अवृत्तेः धूमवत्त्वस्याश्रयभागासिद्धिः इत्यादि । अत्र अनुत्पन्नस्य स्वकार्यसामर्थ्याभिमानमुत्थानकारणम् । असिद्ध्यादि आरोप्यम् । जात्युत्तरेऽप्येवं वक्तुं शक्यत्वात् व्याघातः । अनुत्पन्नस्याङ्गत्वादेरयुक्ताङ्गाधिक्यादीति चेति ॥**

**(टिप्पणी)** अनुत्पत्तिसमलक्षणमाह **पक्षादीनामिति** ॥ आदिपदादनुमित्यङ्गयावद्वस्तुपरिग्रहः । तेन धर्मिलिङ्गसाध्यदृष्टान्तज्ञानाद् भिन्नमिदं लभ्यते । तत्राद्यमुदाहरति **यथेति** ॥ उत्पत्तिप्राक्कालीनस्यापि पर्वतपदावाच्यतया तस्यापक्षत्वमिति भावः । एवं हेतावप्युत्पत्तिप्राक्कालीनस्यापि धूमस्य धूमपदवाच्यतया हेतोर्भागस्वरूपासिद्धिः । यद्वा, इदं गुरु पतनधर्मकत्वादित्युक्ते पतनोत्पत्तेः प्राक्कालीनस्य चापक्षत्वात् तत्र च हेतोरसत्त्वेन भागासिद्धिः । एवं साध्येऽपि । यथा इदं गन्धवत् पृथिवीत्वादित्युक्ते आद्यक्षणेऽगन्धस्यैव पार्थिवत्वाद् व्यभिचारो भागबाधो वा । तत्कालीनस्यापि पक्षत्वादित्यभिमानः । दृष्टान्ते यथा । आत्मा द्रव्यं गुणवत्त्वाद् घटवदित्युक्ते आद्यक्षणे निर्गुणत्वाद् भागे साधनवैकल्यम् । तत्क्षणविशिष्टस्यापि दृष्टान्तत्वाभिमानात् । एवं ज्ञानद्वारा । वायुर्द्रव्यं स्पर्शवत्त्वादित्युक्ते अस्यैव ज्ञानस्यापि तत्र हेतुत्वं वक्तव्यम् । न च तेन हेतुना तत् सम्भवति । तत्कालेऽज्ञानात् । तथा चाज्ञानभागेऽसिद्धिः । तदवस्थस्यापि पक्षत्वाभिमानात् । एवं लिङ्गादिज्ञानमादायापि स्वयमूह्यम् । उत्थानबीजमाह **अत्रानुत्पन्नस्येति** ॥ **स्वकार्यसामर्थ्याभिमानः** पक्षत्वाद्यभिदेशाभिमान इत्यर्थः । **अनुत्पन्नस्यानङ्गत्वात्** पक्षत्वाद्यनतिदेशादित्यर्थः ।

*संशयसमः*

**(टीका) सत्यपि निर्णयकारणे संशयकारणमात्रेण संशयापादनं संशयसमः । यथा 'यदि धूमवत्वात् अग्निमत्वनिश्चयः तर्हि हृदमहानससाधर्म्येण द्रव्यत्वेन तत्संशयः स्यात्'**

इत्यादि । अत्र समानधर्मादिमात्रदर्शनं तद्रहितस्यैव निश्चायकत्वाभिमानश्च उत्थानहेतुः । सत्प्रतिपक्षत्वमारोप्यम् । निर्णयकारणराहित्यस्य संशयाङ्गत्वानङ्गीकारात् संशयकारण-राहित्यस्यायुक्तस्यैव निर्णयाङ्गताङ्गीकारात् युक्ताङ्गहानिः अयुक्ताङ्गाधिक्यं च । अन्यथा दूषकादूषकसाधर्म्यादिना जातावपि संशयप्रसङ्गसाम्यात् व्याघात इति ॥

**(टिप्पणी)** क्रमागतं जात्यन्तरं लक्षयति **सत्यपीति** ॥ मात्रपदेन सामग्रीव्यवच्छेदः । तेन सामग्र्या संशयापादने नातिव्याप्तिः । **तद्रहितस्यैवेति** ॥ समानधर्मादिदर्शनाभावविशिष्टस्यैवेत्यर्थः । **सत्प्रतिपक्ष-त्वमिति** ॥ विरुद्धसामग्रीप्रतिरुद्धकार्यलिङ्गत्वमित्यर्थः । अन्याहितसंशयस्यापि विरोधित्वादिति भावः । निर्णयकारणराहित्यस्य विशेषदर्शनस्य संशयकारणराहित्यस्य संशयकारणमात्रराहित्यस्य संशयसामग्री-प्रविष्टतया तद्राहित्यस्य युक्ताङ्गत्वादिति भावः ।

*प्रकरणसमः*

**(टीका)** अङ्गीकृतानधिकबलत्वेन बाधचोदनं प्रकरणसमः । यथा 'द्रव्यत्वात् पर्वतो नाग्निमानेव' इति । अत्र प्रतिप्रमाणोपलम्भ उत्थानहेतुः । बाध आरोप्यः । बाधकत्वेऽधिकबलवत्वस्याङ्गत्वात् युक्ताङ्गहानिः । बाधकस्याधिकबलत्वानङ्गीकारे स्थापनयैव जातेर्बाधकप्राप्तेर्व्याहतिरिति ॥

**(टिप्पणी)** प्रकरणसमं लक्षयति **अङ्गीकृतेति** ॥ **अनधिकबलेनेति** ॥ तदुपादानप्रयोजनं चाङ्गीकृता-धिकबलेन बाधातिदेशव्यवर्तनमेव । उदाहरति **यथेति** ॥ असाधारणं दुष्टत्वबीजमाह **बाधकेति** ॥ साधारणं तदाह **बाधकस्येति** ॥

*अहेतुसमः*

**(टीका)** हेतोः साध्यात् पूर्वापरसहभावनिरासेन अहेतुत्वचोदनम् अहेतुसमः । यथा धूमवत्वज्ञानम् अग्निमत्वज्ञानात् अग्निमत्वाद्वा किं पूर्वभावि उतानन्तरभावि उत तेन सहभावीति । नाद्यः । साध्याभावे तस्य साधनत्वायोगात् ।

**(टिप्पणी)** अहेतुसमलक्षणमाह **हेतोरिति** ॥ अत्र पूर्वापरभावमात्रनिरसनेनेत्यन्तमुत्थान-प्रकारप्रदर्शनार्थम् । लक्षणं तु हेतुत्वाभिमतस्य समयसम्बन्धमात्रेणाहेतुत्वापादनमहेतुसम इति । उदाहरति **यथेति** ॥ अग्निमत्त्वज्ञानादग्निमत्त्वाद्वा किं धूमवत्त्वज्ञानं पूर्वभावीत्यन्वयः । उभयोपादानं

साध्यज्ञाप्यभेदेनेयं प्रवर्तत इति सूचयितुम् । **साधकत्वायोगादिति** ॥ साध्यघटितमूर्तित्वात् साधकत्वस्येति भावः । इदमुपलक्षणम् । ज्ञाप्याभावाज्ज्ञापकत्वायोगादित्यपि द्रष्टव्यम् । एवमग्रेऽप्यूहनीयम् ।

**(टीका) न द्वितीयः । साधनाभावे साध्यस्य तत्त्वायोगात् । न तृतीयः । अविशेषेण साध्यसाधनभावायोगादिति ।**

**(टिप्पणी) तत्त्वायोगादिति** ॥ साध्यत्वायोगादित्यर्थः । साधनघटितमूर्तित्वात् साध्यत्वस्येत्यर्थः। **अविशेषेणेति** ॥ निगमकाभावात् सव्येतरविषाणयोरिव साध्यसाधनभावानुपपत्तेरित्यर्थः । ननु कार्यज्ञाप्यभेदभिन्नसाध्यप्राप्त्यप्राप्तिभ्यां विकल्पेन प्रत्यवस्थानात् कार्यकारणभावप्रतिक्षेपरूपप्राप्त्य-प्राप्तिसमातः कथमस्या भेद इति चेन्न । तत्र कारणतामङ्गीकृत्याविशेषातिप्रसङ्गयोरापादनमिह तु कारणशब्दार्थ एव दूष्य इति भेदादिति भावः । अत एवेयमहेतुसमेति ।

**(टीका) प्रतितर्कप्रतीतिरत्रोत्थानहेतुः । अन्योन्याश्रयत्वमारोप्यम् । प्रतिषेधोऽपि किं प्रतिषेध्यात् पूर्वभावीत्यादेर्वक्तुं शक्यत्वात् व्याघातः । कृतौ पूर्वभाविना पश्चाद्भाविजन्म-दर्शनात् ज्ञप्तौ च यथायथं पूर्वभाव्यादिना पश्चाद्भाव्यादेः सिद्धिदर्शनात् तर्कस्य व्याप्तिहीनत्वेन युक्ताङ्गहानिश्च ।**

**(टिप्पणी) अन्योन्याश्रयत्वमिति** ॥ साधनत्वविशिष्टे सति साध्यं साध्ये च सति साधनत्व-वैशिष्ट्यमित्यन्योन्याश्रयादित्यर्थः । आदिपदाद् विशेषणासिद्धिपरिग्रहः । ज्ञप्तिपक्षमाश्रित्य साधारणं दुष्टत्वबीजमाह **प्रतिषेधोऽपीति** ॥ कृतिपक्षेऽपि ज्ञानपदमुभयत्र त्वयैवमेवोदाहर्तव्यम् । असाधारणं दुष्टत्वबीजमाह **कृताविति** ॥ तथा च यथादर्शनमेव व्यवस्थापनीयमन्यथा कार्यकारणभावोच्छेदे निरीहं जगज्जायेतेति भावः । **पश्चाद्भाव्यादेरिति** ॥ पूर्वमादिपदेनानेन पश्चादिति पदेन पूर्वं ज्ञापकतया ज्ञानोत्तरकालीनसिद्धिविषयपरिग्रहः । तेन समसमयभाविरूपरसादिसाधारण्यमस्या इत्यवधेयम् । **व्याप्तीति** ॥ यत्पूर्वभावि तत्र साधनं यत् पश्चाद्भावि तत्र साध्यमित्येवंरूपव्याप्तीत्यर्थः ।

**(टीका) साधनत्वादिव्यवहारस्य बुद्धिस्थसाध्यादिनोपपत्तेः । व्यापारेष्वन्यान-पेक्षणात् । सहभावे च सिद्ध्यसिद्धिभ्यां विशेषादिति ॥**

**(टिप्पणी)** ननु साध्याभावे तदुपहितसाधनादिव्यवहारः कथं स्यादित्यत आह **साधनत्वादीति** ॥ तदुपहितबुद्धिस्तज्ज्ञानसाध्या न तु तत्साध्या अतीतोपहितबुद्धौ व्यभिचारात् । ज्ञानं च अनागतस्यापि

सम्भवत्येवेति न व्यवहारानुपपत्तिरिति भावः । ननु साधनस्य साध्यानुकूलव्यापारे जनयितव्ये साध्यापेक्षा स्यात् तत्राह **व्यापार इति** ॥ अन्यानपेक्षणात् साध्यानपेक्षणात् । नन्वसहभूतत्वाविशेषाद् दण्डो घटमेव जनयति न पटमिति कुत इत्यत आह **सहभावे चेति** ॥ अत्र स्वभावस्यैव नियामकत्वादिति भावः । अयं स्वभाव एव कथमवधारित इत्यत आह **सिद्ध्यसिद्धिभ्यामिति** ॥ दण्डानन्तरं घटसिद्धिपटासिद्धिभ्या-मित्यर्थः । तेन अनन्यथासिद्धान्वयव्यतिरेकशालियदनन्तरं यद् दृश्यते तत् तत्साधनमित्यवधार्यत इति भावः । ननु साधनत्वं साध्यघटितं पूर्वकाले नास्तीति चेत् । साध्यस्य तत्रोपलक्षणत्वात् । किं तर्ह्युपलक्ष्यम् । कारणतावच्छेदको धर्म एव । उत्तरकालवर्तिनो धर्मस्य न कारणतावच्छेदकत्वं पूर्वकाले तस्याभावेन कारणत्वाभावप्रसङ्गादिति ।

### *अर्थापत्तिसमः*

**(टीका) व्याप्तिं विना वाग्युक्तिमात्रेण 'अर्थात् इदमाक्षिप्तम्' इत्यभिमानेनोक्त-विपरीतारोपणेन दोषाभिधानम् अर्थापत्तिसमः । यथा 'पर्वतोऽग्निमान्' इत्युक्ते अर्थात् आपद्यते 'अन्यत् अनग्निमत्' इति । तथा च साध्यविकलो दृष्टान्त इत्यादि । अत्र 'विशेषविधिः शेषनिषेधं गमयति' इत्यभिमानमुत्थानबीजम् । साध्यविकलत्वादि आरोप्यम् । व्याप्तेरभावात् युक्ताङ्गहानिः । तदनपेक्षणे 'धूमवत्वं असाधकम्' इत्युक्ते अर्थादापद्यते 'अन्यत् सर्वं साधकम्' इति । तथाच दृष्टान्ताभाव इति व्याघात इति ॥**

**(टिप्पणी)** अर्थापत्तिसमलक्षणमाह **व्याप्तिं विनापीति** ॥ वाग्युक्तिमात्रेण विशेषणवत्तया विशेष्याभि-धानमात्रेण । मात्रपदादेवकारादिव्यवच्छेदः । एतच्च स्वव्याघातकत्वसम्भवाय । अर्थादिदमित्याद्यारोपणेने-त्यन्तम् उत्थानबीजाभिमानकथनपरम् । लक्षणं तु अर्थापत्त्याभासेन स्वव्याघातकमभिधानमर्थापत्तिसमः । प्रतिज्ञायां पक्षवचने उदाहरति **यथेति** ॥ आदिपदात् पर्वतोऽग्निमानित्युक्ते अर्थादापन्नं नाग्निभिन्नवानिति तथाच धूमराहित्ये स्वरूपासिद्धिः, धूमाद् वह्निमानित्युक्ते अर्थादापद्यते प्रमेयत्वाशिर्वह्निसाधर्म्याद् वह्न्यभाववानिति प्रतिरोध इत्यादि । एवमनुमानादनित्य इत्युक्ते अर्थादापन्नं प्रत्यक्षान्नित्य इत्यादि स्वयमूह्यम् । उत्थानबीजमाह **अत्रेति** । सर्वत्र विशेषविधिः शेषनिषेधं गमयतीत्यभिमान इत्यर्थः । तेन सामान्ये प्रसक्तौ सत्यां यत्र विशेषविधिः शेषनिषेधं गमयति तत्साधर्म्येण तथात्वापादनं करोतीति भावः । असाधारणं दुष्टत्वबीजमाह **व्याप्तेरिति** ॥ पर्वताग्निमत्त्वस्यान्याग्निमत्त्वाभावे व्याप्तेरित्यर्थः । **तथा चेति** ॥ य एव दृष्टान्तीक्रियते तत्रैव पूर्ववत् साध्यवैकल्यमित्यर्थः ।

*अविशेषसमः*

**(टीका)** साधनप्रतिबन्द्या तदितरधर्मेण तद्वतां सर्वपदार्थानामविशेषापादनं अविशेषसमः । यथा 'यदि धूमवत्वात् पर्वतमहानसयोरग्निमत्वाविशेषः तर्हि द्रव्यत्वात् सर्वद्रव्याणाम् अनित्यत्वं स्यात्' इति । कस्यचिद्धर्मस्य किञ्चिदसाधकत्वदर्शनमत्रोऽत्थानबीजम् । तर्कपराहतिः आरोप्या । व्याप्तिहीनत्वात् तर्कस्य युक्ताङ्गहानिरिति । अन्यथा 'अस्य सम्प्रतिपन्नस्य च तर्कपराहतत्वेनासाधकत्वाविशेषे पदार्थत्वात् सर्वस्यानित्यत्वाविशेषः स्यात्' इति व्याघात इति ॥

**(टिप्पणी)** अविशेषसमं लक्षयति **साधनेति** ॥ साधनप्रतिबन्द्येत्युत्थानबीजकथनपरम् । लक्षणं तु साधनेतरधर्मेण साधनेतरधर्मवतामविशेषापादनमविशेषसम इति । साधनेतरेत्यनेन तूत्कर्षसमव्यवच्छेदः । तत्र साधनेनैव दृष्टान्ताविशेषापादनात् । उत्थानप्रकारमाह **यथा यदीति** ॥ सर्वद्रव्याणामित्यत्र सर्वपदं येन धर्मेणाविशेषापादनं तद्धर्माभाववत्सङ्ग्रहपरम् । तेन द्रव्यत्वाद् घटात्मनोरप्यनित्यत्वं स्यादित्यादिकमपि वार्यते । **कस्यचिदिति** ॥ यस्माद् धर्मादविशेषस्य द्रव्यत्वहेतुकानित्यत्वव्याप्तीत्यर्थः । साधारणं दुष्टत्वबीजमाह **अन्यथेति** ॥ व्याप्त्यङ्गत्वानङ्गीकार इत्यर्थः । **अस्येति** ॥ त्वद्धेतुरसाधकः तर्कपराहतत्वात् सम्प्रतिपन्नवदित्युक्ते तर्कपराहतत्वादसाधकत्वाविशेषे पदार्थत्वात् सर्वस्यापि नित्यत्वाविशेषः स्यादिति व्याघात इत्यर्थः ।

*उपपत्तिसमः*

**(टीका)** मत्पक्षेऽपि किञ्चित् प्रमाणं भविष्यतीति तदुपपादनमुपपत्तिसमः । यथा 'धूमवत्वं यथा अस्तित्वपक्षे प्रमाणं मत्पक्षेऽपि किञ्चित् भविष्यति पक्षत्वात्' इति । अत्र सामान्यतः प्रमाणसम्भावना उत्थानबीजम् । बाधः प्रतिरोधो वा आरोप्यः । तस्यापि कश्चित् दोषो भविष्यतीति वक्तुं शक्यत्वात् व्याघातः । युक्ताङ्गहानिश्च । उपन्यस्तं प्रत्यनुपन्यस्तस्य प्राबल्यादेर्बाधाद्यङ्गस्यानिश्चयादिति ॥

**(टिप्पणी)** उपपत्तिसमं लक्षयति **मत्पक्षेऽपीति** ॥ भविष्यतीतिपर्यन्तमभिप्रायकथनम् । लक्षणं तु यत्किञ्चिद्धर्मबलेन स्वपक्षे प्रमाणोपपादनात् प्रत्यवस्थानमुपपत्तिसम इति । मत्पक्षेपीत्यर्थमन्तर्भाव्य उत्थानप्रकारमाह **यथेति** ॥ **पक्षत्वादिति** ॥ प्रकृतविप्रतिपत्तिकोटित्वादित्यर्थः । **बाधः प्रतिरोधो वेति** ॥

ननु बाधपक्षे प्रकरणसमैवेयं सत्प्रतिपक्षपक्षे प्रतिधर्मसमैवेयमतः कथं भेदेनोपन्यास इति चेन्न । प्रकरणप्रतिधर्मयोर्विशिष्योद्भावितेन धर्मेण बाधप्रतिरोधाभिधानम् । अत्र तु सामान्यत इति विशेषात् । न चैतावता विशेषेण कथं भेदेनोपन्यासः । यावता यथाकथञ्चित् साधर्म्येऽपि साधर्म्योपन्यासेन बाधाभिधानं प्रकरणसम इत्यैक्यस्यापि कर्तुं शक्यत्वादिति वाच्यम् । स्वतन्त्रेच्छाया नियोगपर्यनुयोगानर्हत्वात् । अन्यथा बाधप्रतिरोधौ साक्षात्प्रतिबन्धकत्वेनानुगमय्य तद्दूषणाभासत्वेन प्रकरणप्रतिधर्मसमयोरैक्या-पत्तिरिति किं न ब्रूया इति भावः । उपन्यस्तप्रतिप्रमाणस्य बाधाङ्गप्राबल्यानिश्चयादित्युपलक्षणम् । विशिष्य व्याप्यवत्ताया अप्यनिश्चयादित्यपि द्रष्टव्यम् ।

*उपलब्धिसमः*

**(टीका) वादिवाक्यस्यावधारणे तात्पर्यमारोप्य विकल्प्य तद्दूषणमुपलब्धिसमः । यथा 'पर्वतोऽग्निमान्' इत्युक्ते किं पर्वत एवाग्निमान् ? उत पर्वतोऽग्निमानेव ? इति । नाद्यः महानसादेरप्यग्निमत्वात् । न द्वितीयः कदाचिदनग्निमत्वात् इत्यादि ।**

**वाक्यस्यावधारणे तात्पर्यावश्यम्भावाभिमानोऽत्रोत्थानबीजम् । बाधाद्यारोप्यम् । जात्युत्तरेऽपि अस्य साम्यात् व्याघातः । अयुक्ताङ्गाधिकत्वं च अन्ययोगायोगव्यव-च्छेदस्यायोगादिति ॥**

**(टिप्पणी)** उपलब्धिसमां लक्षयति **वादिवाक्यस्येति** ॥ इदं तु प्रकृताभिप्रायम् । लक्षणं तु वाद्यभि-प्रायविषयत्वेनारोपितावधारणस्य विकल्पेन दूषणाभिधानमिति वा वाक्यार्थतयाऽऽरोपितावधारणस्य विकल्पेन दूषणाभिधानमिति वेति । न चायं कल्पितदूष्यत्वाच्छलमेव । न । अत्र कल्पनाया अव्यवस्थितत्वादिदं वा अदो वेत्युपक्रमात् । छले तु कल्पनाया व्यवस्थितत्वात्, अयमर्थोऽत्रायं दोष इत्युपक्रमात् । तत्र प्रतिज्ञायामुदाहरति **यथेति कदाचिदिति** ॥ न तु सदेत्यर्थः । एवं हेतावपि द्रष्टव्यम् । यथा धूमवत्त्वादित्युक्ते किं धूमवत्त्वादेव वह्निमान् धूमवत्त्वाद् वह्निमानेव । नाद्यः । आलोकादेरपि वह्निमत्त्वात् । न द्वितीयः । धूमाद् वह्निवद् वह्निमत्त्वस्यापि सत्त्वात् । एवमवयवान्तरेऽपि द्रष्टव्यम् । बाधादीत्यादिपदेन सम्भवदनुमानयावद्दोषपरिग्रहः । **अन्ययोगायोगव्यवच्छेदस्येति** ॥ सर्वत्रावधारणार्थक-त्वस्येत्यर्थः । सर्वत्रावधारणं न वाक्यार्थः, अपि तु तात्पर्यार्थः स चानुमानिक एवेति ।

*अनुपलब्धिसमः*

**(टीका) उपलब्ध्यादिविषयिधर्माणां स्वात्मनि तदतद्रूपतां विकल्प्य उभयथा व्याघातापादनं अनुपलब्धिसमः। यथा 'उपलब्धत्वात् इदमस्ति' इत्युक्ते सा उपलब्धिः स्वस्मिन् उपलब्धितया वर्तते न वा, आद्ये नोपलब्धिः प्रमेयवदुपलब्धत्वात्। द्वितीयेऽपि तथा। प्रमेयवत् आत्मनि (स्वात्मनि) तथा अवृत्तेः। तथा च उपलब्धित्वमसिद्धम्।**

**(टिप्पणी)** अनुपलब्धिसमलक्षणमाह **उपलब्ध्यादीति** ॥ उपलब्ध्यादिविषयिधर्माणामित्यादि स्वपदार्थनिर्वचनं न तु लक्षणप्रविष्टम्। लक्षणं तु स्वात्मनि तदतद्रूपतां विकल्प्योभयथा व्याघातापादन-मनुपलब्धिसम इत्येव। अविषयिधर्मे एतादृशविकल्पानुत्थानात्। अत एव तादृशविकल्पमुखेन प्रत्यवस्थानप्रकारमाह **यथेति** ॥ **स्वस्मिन्निति** ॥ विषये स्ववृत्तितानियामकसम्बन्धेन स्वस्मिन् वर्तते न वेत्यर्थः। **तथा** नोपलब्धिरित्यर्थः। **(स्वात्मनि) आत्मनि तथेति** ॥ आत्मनि उपलब्धिरूपतयेत्यर्थः। न हि देवदत्तः स्वात्मानं प्रति न देवदत्त इति सम्भवतीति भावः। **तथाचेति** ॥ उभयथाऽप्युपलब्धेरुप-लब्धित्वाभावादित्यर्थः।

**(टीका) एवं 'अनुपलब्धेरिदं नास्ति' इत्युक्ते अनुपलब्धिः स्वात्मनि अनुपलब्धितया वर्तते चेत् प्रमेयवदसती स्यात्। अवृत्तौ घटवत् नानुपलब्धिः। अनुपलब्ध्यभावात् अनुपलब्धत्वासिद्धिः इत्यादि।**

**(टिप्पणी)** अन्यत्रापि विषयिधर्मे उक्तं प्रकारमतिदिशति **एवमिति** ॥ यद्यप्यनुपलब्धेर्न विषयिधर्मत्वमभावरूपत्वात् तथापि प्रतियोगिद्वारा परम्परयाऽस्या अपि स्वविषयत्वमस्तीत्यभिप्रेत्येद-मुक्तमिति। **वर्तते चेदिति** ॥ वर्तते चेत् साप्यनुपलब्धा जाता। तथा च पक्षीकृतप्रमेयवदियमप्यसती स्यादित्यर्थः। आदिपदात् सविषयकेच्छादेः परिग्रहः। तद्यथाऽयं प्रवृत्तिविषय इष्टत्वादित्युक्ते इच्छाऽप्यात्मनीच्छारूपतया वर्तते न वा। आद्ये नेच्छा प्रमेयवदिष्टत्वात्। द्वितीयेऽपि तथा प्रमेयवद् आत्मनि तथाऽवृत्तेरिति। उभयथाऽपीष्टत्वमसिद्धमित्यादि स्वयमूह्यम्।

**(टीका) अत्र विषयिधर्मोपलब्धिः उत्थानबीजम्। असिद्ध्याद्यारोप्यम्। 'असिद्धो हेतुः' इत्यत्रापि असिद्धिः स्वात्मनि तथा वर्तते न वेति जातावपि सम्भवात् व्याघातः। अयुक्ताङ्गाधिकत्वं च स्वात्मनि तथावृत्तेरयुक्तत्वात्। विषये च तथावृत्त्या तत्त्वोपपत्तेरिति॥**

ननु बाधपक्षे प्रकरणसमैवेयं सत्प्रतिपक्षपक्षे प्रतिधर्मसमैवेयमतः कथं भेदेनोपन्यास इति चेन्न । प्रकरणप्रतिधर्मयोर्विशिष्योद्भावितेन धर्मेण बाधप्रतिरोधाभिधानम् । अत्र तु सामान्यत इति विशेषात् । न चैतावता विशेषेण कथं भेदेनोपन्यासः । यावता यथाकथञ्चित् साधर्म्येऽपि साधर्म्योपन्यासेन बाधाभिधानं प्रकरणसम इत्यैक्यस्यापि कर्तुं शक्यत्वादिति वाच्यम् । स्वतन्त्रेच्छाया नियोगपर्यनुयोगानर्हत्वात् । अन्यथा बाधप्रतिरोधौ साक्षात्प्रतिबन्धकत्वेनानुगमय्य तद्दूषणाभासत्वेन प्रकरणप्रतिधर्मसमयोरैक्यापत्तिरिति किं न ब्रूया इति भावः । उपन्यस्तप्रतिप्रमाणस्य बाधाङ्गप्राबल्यानिश्चयादित्युपलक्षणम् । विशिष्य व्याप्यवत्ताया अप्यनिश्चयादित्यपि द्रष्टव्यम् ।

*उपलब्धिसमः*

**(टीका) वादिवाक्यस्यावधारणे तात्पर्यमारोप्य विकल्प्य तद्दूषणमुपलब्धिसमः । यथा 'पर्वतोऽग्निमान्' इत्युक्ते किं पर्वत एवाग्निमान् ? उत पर्वतोऽग्निमानेव ? इति । नाद्यः महानसादेरप्यग्निमत्वात् । न द्वितीयः कदाचिदनग्निमत्वात् इत्यादि ।**

**वाक्यस्यावधारणे तात्पर्यावश्यम्भावाभिमानोऽत्रोत्थानबीजम् । बाधाद्यारोप्यम् । जात्युत्तरेऽपि अस्य साम्यात् व्याघातः । अयुक्ताङ्गाधिकत्वं च अन्ययोगायोगव्यवच्छेदस्यायोगादिति ॥**

**(टिप्पणी)** उपलब्धिसमां लक्षयति **वादिवाक्यस्येति** ॥ इदं तु प्रकृताभिप्रायम् । लक्षणं तु वाद्यभिप्रायविषयत्वेनारोपितावधारणस्य विकल्पेन दूषणाभिधानमिति वा वाक्यार्थतयाऽऽरोपितावधारणस्य विकल्पेन दूषणाभिधानमिति वेति । न चायं कल्पितदूष्यत्वाच्छलमेव । न । अत्र कल्पनाया अव्यवस्थितत्वादिदं वा अदो वेत्युपक्रमात् । छले तु कल्पनाया व्यवस्थितत्वात्, अयमर्थोऽत्रायं दोष इत्युपक्रमात् । तत्र प्रतिज्ञायामुदाहरति **यथेति कदाचिदिति** ॥ न तु सदेत्यर्थः । एवं हेतावपि द्रष्टव्यम् । यथा धूमवत्त्वादित्युक्ते किं धूमवत्त्वादेव वह्निमान् धूमवत्त्वाद् वह्निमानेव । नाद्यः । आलोकादेरपि वह्निमत्त्वात् । न द्वितीयः । धूमाद् वह्निवद् वह्निमत्त्वस्यापि सत्त्वात् । एवमवयवान्तरेऽपि द्रष्टव्यम् । बाधादीत्यादिपदेन सम्भवदनुमानयावद्दोषपरिग्रहः । **अन्ययोगायोगव्यवच्छेदस्येति** ॥ सर्वत्रावधारणार्थकत्वस्येत्यर्थः । सर्वत्रावधारणं न वाक्यार्थः, अपि तु तात्पर्यार्थः स चानुमानिक एवेति ।

*अनुपलब्धिसमः*

**(टीका) उपलब्ध्यादिविषयिधर्माणां स्वात्मनि तदतद्रूपतां विकल्प्य उभयथा व्याघातापादनं अनुपलब्धिसमः। यथा 'उपलब्धत्वात् इदमस्ति' इत्युक्ते सा उपलब्धिः स्वस्मिन् उपलब्धितया वर्तते न वा, आद्ये नोपलब्धिः प्रमेयवदुपलब्धत्वात्। द्वितीयेऽपि तथा। प्रमेयवत् आत्मनि (स्वात्मनि) तथा अवृत्तेः। तथा च उपलब्धित्वमसिद्धम्।**

**(टिप्पणी)** अनुपलब्धिसमलक्षणमाह **उपलब्ध्यादीति** ॥ उपलब्ध्यादिविषयिधर्माणामित्यादि स्वपदार्थनिर्वचनं न तु लक्षणप्रविष्टम्। लक्षणं तु स्वात्मनि तदतद्रूपतां विकल्प्योभयथा व्याघातापादनमनुपलब्धिसम इत्येव। अविषयिधर्मे एतादृशविकल्पानुत्थानात्। अत एव तादृशविकल्पमुखेन प्रत्यवस्थानप्रकारमाह **यथेति** ॥ **स्वस्मिन्निति** ॥ विषये स्ववृत्तितानियामकसम्बन्धेन स्वस्मिन् वर्तते न वेत्यर्थः। **तथा** नोपलब्धिरित्यर्थः। **(स्वात्मनि) आत्मनि तथेति** ॥ आत्मनि उपलब्धिरूपतयेत्यर्थः। न हि देवदत्तः स्वात्मानं प्रति न देवदत्त इति सम्भवतीति भावः। **तथाचेति** ॥ उभयथाऽप्युपलब्धेरुपलब्धित्वाभावादित्यर्थः।

**(टीका) एवं 'अनुपलब्धेरिदं नास्ति' इत्युक्ते अनुपलब्धिः स्वात्मनि अनुपलब्धितया वर्तते चेत् प्रमेयवदसती स्यात्। अवृत्तौ घटवत् नानुपलब्धिः। अनुपलब्ध्यभावात् अनुपलब्धत्वासिद्धिः इत्यादि।**

**(टिप्पणी)** अन्यत्रापि विषयिधर्मे उक्तं प्रकारमतिदिशति **एवमिति** ॥ यद्यप्यनुपलब्धेर्न विषयिधर्मत्वमभावरूपत्वात् तथापि प्रतियोगिद्वारा परम्परयाऽस्या अपि स्वविषयत्वमस्तीत्यभिप्रेत्येदमुक्तमिति। **वर्तते चेदिति** ॥ वर्तते चेत् साप्यनुपलब्धा जाता। तथा च पक्षीकृतप्रमेयवदियमप्यसती स्यादित्यर्थः। आदिपदात् सविषयकेच्छादेः परिग्रहः। तद्यथाऽयं प्रवृत्तिविषय इष्टत्वादित्युक्ते इच्छाऽप्यात्मनीच्छारूपतया वर्तते न वा। आद्ये नेच्छा प्रमेयवदिष्टत्वात्। द्वितीयेऽपि तथा प्रमेयवद् आत्मनि तथाऽवृत्तेरिति। उभयथाऽपीष्टत्वमसिद्धमित्यादि स्वयमूह्यम्।

**(टीका) अत्र विषयिधर्मोपलब्धिः उत्थानबीजम्। असिद्ध्याद्यारोप्यम्। 'असिद्धो हेतुः' इत्यत्रापि असिद्धिः स्वात्मनि तथा वर्तते न वेति जातावपि सम्भवात् व्याघातः। अयुक्ताङ्गाधिकत्वं च स्वात्मनि तथावृत्तेरयुक्तत्वात्। विषये च तथावृत्त्या तत्त्वोपपत्तेरिति॥**

**(टिप्पणी) स्वात्मनीति ॥** प्रमेये यथा विषयविषयिभावेन वृत्तिस्तथा स्वात्मन्ययुक्तत्वादित्यर्थः । वस्तुतस्तु एतस्याः स्वोपलब्धिरूपत्वेऽपि विषयोपलब्धिरूपत्वं नापैतीत्याह **विषये चेति ॥** अन्यथा स्वप्रकाशत्वबुद्धिर्न स्यादिति भावः । तथा वृत्त्याविषयविषयिभावेन वृत्त्या तत्त्वोपपत्तेः उपलब्धित्वोपपत्तेरिति ।

*नित्यसमः*

**(टीका) विवक्षितस्य कस्यचिद्धर्मस्य तदतद्रूपतां विकल्प्य तद्दूषणेन धर्मिणः तद्विशिष्टत्वभङ्गो नित्यसमः । यथा 'शब्दोऽनित्यः' इत्युक्ते अनित्यत्वं नित्यमनित्यं वा। आद्ये शब्दस्य नित्यत्वं स्यात्। न हि धर्मो नित्यः धर्मी चानित्य इति युज्यते। द्वितीये यदाऽनित्यत्वाभावस्तदा शब्दस्य नित्यत्वमिति सारूप्येण । वैरूप्येण तु अनित्यत्वं शब्दात् भिन्नमभिन्नं वा । आद्ये अनवस्था । द्वितीये अन्यतरमात्रावशेषे आश्रया-सिद्ध्यादीत्यादि ।**

**(टिप्पणी)** नित्यसमं लक्षयति **विवक्षितस्येति ॥** विधेयधर्मस्येत्यर्थः । तद्दूषणेन तदतद्रूपत्व-दूषणेन । तद्विशिष्टत्वभङ्गः विधेयधर्मविशिष्टत्वभङ्गः । **न हि धर्मो नित्य इति ॥** विधेयधर्मिणोऽभावे तन्निरूपितधर्म-त्वाभावापत्तेरिति भावः । परस्परविरोधे प्रकारान्तराभावादिति भावः । **सारूप्येणेति ॥** यद्धर्मविशिष्टत्वभङ्गः तद्धर्मविशिष्टत्वाविशिष्टत्वविकल्पेनेत्यर्थः । वैरूप्येण यद्धर्मविशिष्टत्वभङ्गः तद्विजातीयधर्मविशिष्टत्वाविशिष्टत्वविकल्पेन । **अनवस्थेति ॥** धर्मस्य धर्मिभिन्नत्वे सोऽपि धर्मो यत्किञ्चिद्धर्मवानेवं सोऽपीत्यनवस्थेत्यर्थः । **अन्यतरमात्रावशेष इति ॥** अभेदे ह्यनित्यत्वं वा स्यात् शब्दो वा स्यात् । तत्राद्ये आश्रयासिद्धिः द्वितीये बाध इत्यर्थः । द्वितीयादिपदात् प्रयोगान्तरपरिग्रहः । तद्यथा घटो रूपवानित्युक्ते रूपवत्त्वं घटाद् भिन्नमभिन्नं वा। आद्येऽनवस्था द्वितीयेऽन्यतरमात्रावशेष इति । **आश्रयासिद्ध्यादीति ॥** इदं स्वयमूह्यम् ।

**(टीका) अत्र धर्मधर्मिभावदर्शनमुत्थानबीजम् । तर्कपराहतिरारोप्या । धर्मधर्मि-भावनिरासे जातेरप्यनुत्थानात् व्याघातः। तर्कस्य व्याप्त्यभावात् युक्ताङ्गहानिश्चेति ॥**

**(टिप्पणी) व्याघात इति ॥** इदमसाधकं तर्कपराहतत्वादित्युक्ते तर्कपराहतत्वं पक्षाद् भिन्नमभिन्नं वेत्यादि विकल्पेन जात्युत्तरेऽपि धर्मधर्मिभावानुपपत्तेरित्यर्थः । **तर्कस्येति ॥** यद्येवं धर्मः स्यात् तदा धर्म्यभिन्नं स्यादित्यादितर्कस्येत्यर्थः । धर्मत्वस्य धर्मिभिन्नत्वव्याप्त्याद्यभावादित्यर्थः ।

*अनित्यसमः*

**(टीका) वादिसाधनप्रतिबन्द्या धर्मान्तरेण सर्वस्य साध्यधर्मवत्त्वापादनमनित्यसमः। यथा 'यदि महानसवत् धूमवत्त्वात् पर्वतोऽग्निमान् तर्हि सत्त्वात् सर्वमप्यग्निमत् स्यात्' इति। अविशेषसमायां तु सर्वाविशेषमात्रापादनम्। अन्यत् समानम्।**

**व्याप्त्यभावात् युक्ताङ्गहानिः । तदनभ्युपगमे 'यदि असाधकप्रतिबन्दीग्रस्तत्वात् इदमसाधकं तर्हि पदार्थत्वात् सर्वमप्यसाधकं स्यात्' इति व्याघात इति ॥**

**(टिप्पणी)** अनित्यसमलक्षणमाह **वादिसाधनेति** ॥ वादिसाधनेतरधर्मेण सर्वस्य साध्यधर्मवत्त्वापादनमनित्यसमः । वस्तुतस्तु पक्षसाधारणेन केनचिद्धर्मेण विपक्षस्य सपक्षत्वाद्यापादनमनित्यसमः । तेन यत्र सर्वमनित्यं स्यादिति नापादितं किन्तु ह्रदोऽग्निमान् स्यादित्येवापादितम् । तत्सङ्ग्रहोऽप्यविकल इति प्राचीनलक्षणानुसारेणापादनप्रकारमाह **यथेति** ॥ नन्वविशेषसमैवेयमत आह **अविशेषसमायां त्विति** ॥ तत्र सर्वधर्मवत्त्वं सर्वत्र स्यादित्यापादनमत्र तु साध्यधर्मवत्त्वं स्यादिति विशिष्यापादनमिति न सङ्कर इति भावः । यद्वा तत्र सर्वस्याविशेषः स्यादिति सर्वप्रतियोगिकाविशेषापादनमत्र तु निष्प्रतियोगिकसाध्यधर्मवत्त्वापादनमतो न सङ्कर इति भावः । **अन्यत् समानमिति** ॥ यत्किञ्चिद्धर्मस्य किञ्चिदसाधकत्वदर्शनेनोत्थानकारणं तर्कपराहतिरारोप्येत्यविशेषसमासमानमित्यर्थः । साध्यधर्मवत्त्वेन सत्त्वादेर्व्याप्त्यभावादित्यर्थः ।

**(टीका) पक्षादीनामन्यतमस्यासिद्धिमुद्भाव्य तत्साधकत्वेन स्वयमेवोत्प्रेक्षितस्य दूषणेन वादिसाधनभङ्गः कार्यसमः । यथा 'पर्वतोऽग्निमान्' इत्युक्ते पर्वतस्यैवाभावादाश्रयासिद्धिः । 'यदि प्रतीयमानत्वात् सोऽस्तीत्युच्यते तन्न । शुक्तिरजतादौ व्यभिचारात्' इति।**

**व्यवहर्तव्यद्वैतमत्र हेतुरुत्थानस्य । तत्तदङ्गासिद्धिरारोप्या । अस्य जातावपि तुल्यत्वेन व्याघातः। उत्प्रेक्षितदोषेण वाद्युक्तस्यासाधकत्वोक्तेरविषयवृत्तित्वं चेति ॥**

**(टिप्पणी)** कार्यसमं लक्षयति **पक्षादीनामिति** ॥ अनुमित्यङ्गानामित्यर्थः । वाद्युक्तस्य दूषणेन वादिसाधनभङ्गरूपे सदुत्तरेऽतिव्याप्तिनिरासाय स्वयमेवेति । **व्यवहर्तव्यद्वैतमिति** ॥

१. प्रचलितपाठेषु 'शब्द'पदं नास्ति ।

व्यवहारविषयसत्त्वासत्त्वमित्यर्थः । **तत्तदिति** ॥ यस्याङ्गस्यासिद्धिमुद्भाव्यासाधकत्वोत्प्रेक्षेत्यर्थः । **अविषयवृत्तित्वं चेति** ॥ वाद्युक्तस्यैव प्रतिवादिदूषणविषयत्वादिति भावः ।

*छललक्षणम्*

**(टीका) अथ निरनुयोज्यानुयोगांशस्य छलस्यापि उक्तान्तर्भावमाह—**

**(मूलम्) छलमसङ्गतम् ।**

**परोक्तस्यार्थान्तरं परिकल्प्य तद्दूषणेन परोक्तभङ्गः छलम् । परोक्तदूषणस्यैव सङ्गतत्वेन अनुक्तारोपितदूषणं छलम् असङ्गते अन्तर्भवति ।**

**(टिप्पणी) अथेति** ॥ परोक्तजातीनां प्रमाणविरोधेऽन्तर्भाववचनानन्तरमित्यर्थः । **असङ्गतमिति** ॥ असङ्गतमिति चानुविधेयाकाङ्क्षाविषयार्थानुपस्थापकाभिधानमित्यर्थः । असङ्गत्यन्तर्भावप्रयोजकं रूपं लक्षणत्वेनाह **परोक्तस्येति** ॥ अनभिप्रेतार्थदूषणेन परोक्तभङ्ग इत्यर्थः । **सङ्गतत्वेनेति** ॥ परेण यदुक्तं तद्दूषणस्यैव मध्यस्थानुविधेयाकाङ्क्षितत्वेनेत्यर्थः ।

**(टीका) न केवलमसङ्गतं छलम् । किं तर्हि ? इत्यत आह—**

**(मूलम्) अन्यच्च**

**असङ्गतात् अन्योऽर्थदोषो विरोधः । तत्राप्यन्तर्भवति छलम् । छलवाक्यस्याप्यर्थान्तरं परिकल्प्य दूषणसम्भवेन स्ववचनन्यायेन स्वविरोधेऽन्तर्भावात् ।**

**निरनुयोज्यानुयोगांशान्तरद्वयस्याप्यसङ्गतान्तर्भावमाह—**

**(मूलम्) अन्यच्च ।**

**उक्तात् छलात् जातेश्च अन्यत् निरनुयोज्यानुयोगांशद्वयं च असङ्गतमेव । प्राप्तस्यैव हान्यादेरुद्भावनप्राप्तकाल एव ग्रहणस्य च सङ्गतत्वात् ।**

**(टिप्पणी)** असङ्गतादिति भावप्रधानो निर्देशः । छलस्यासङ्गतत्वेन तदन्यत्वाभावात् । उपधेयसङ्करेऽप्युपाधेरसङ्करादिति भावः । अर्थदोष इति त्वसङ्गतेरन्या । अनुमितिदोषो विरोधे पर्यवस्यति ।

ा चान्यत्वाविशेषणेन एकत्वमेवास्तु अन्यथा तत्तत्तदन्यत्वभेदेन बहवोऽनुमितिदोषाः स्युरिति वाच्यम् । ष्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हत्वादिति । वाक्यत्वाच्छलस्य विरोधमध्येऽपि वाक्यविरोध ष्वान्तर्भावमाह **छलवाक्यस्येति** ॥ **जातेरिति** ॥ परोक्तजातेरित्यर्थः । **अंशद्वयमिति** ॥ अप्राप्तोद्भावनमकालोद्भावनं चेत्यर्थः । **प्राप्तस्यैवेति** ॥ अन्यथोन्मत्तकलहत्वापत्तेरिति भावः । **प्राप्तकाल एवेति** ॥ अन्यथोत्कृष्टवादित्वस्याज्ञानादिति भावः ।

**(टीका) निग्रहस्थानान्तरस्यापि असङ्गतान्तर्भावमाह—**

**(मूलम्) अन्यच्च ।**

**उक्तात् अन्यदपि निग्रहस्थानं किञ्चित् असङ्गतमेव । यथा अर्थान्तरम् । प्रकृतोपयोगिन एव सङ्गतत्वात् । परबोधनार्थं प्रवृत्तस्य तदङ्गपदप्रयोग एव सङ्गत इति निरर्थकमपि । अत एव अविज्ञातार्थम् । अपार्थकस्य स्फुटस्तत्रान्तर्भावः ।**

**(टिप्पणी)** सामान्यतो ज्ञानेनान्तर्भावस्य ज्ञातुमशक्यत्वाद् विशिष्यान्तर्भावनीयस्वरूपमाह **यथा अर्थान्तरमिति** ॥ अर्थान्तरस्य प्रकृतानुपयोग्यभिधानत्वेनानाकाङ्क्षितत्वादसङ्गत्यन्तर्भूतत्वमिति भावः । **परबोधनार्थमिति** ॥ पदार्थानुपस्थापकेऽप्याकाङ्क्षितानुपस्थापकाभिधानत्वसत्त्वादिति भावः । **अत एवेति** ॥ यत एव प्रकृतवाक्यार्थबोधानुकूलपदार्थोपस्थितिजनकशब्दस्यैवाकाङ्क्षितत्वमत एवाविज्ञातार्थमपादृशमसङ्गतमेवेत्यर्थः । यद्यप्यविज्ञातार्थस्य नासन्नप्रभेदत्वेनानाकाङ्क्षत्वं तथाऽप्यासन्नप्रयोगस्यैव मध्यस्थाद्याकाङ्क्षितत्वेनोक्तरूपनिराकाङ्क्षत्वसत्त्वात् । न चैवं प्रतिज्ञाविरोधादेरप्यसङ्गत्यन्तर्भावः स्यादविरुद्धप्रतिज्ञाया एव मध्यस्थाकाङ्क्षितत्वादिति वाच्यम् । अनेन रूपेण तस्याप्यसङ्गत्यन्तर्भूतत्वात् । उपधेयसङ्करेऽप्युपाधेरसङ्कर इति भावः । **स्फुट इति** ॥ अपार्थकस्य निराकाङ्क्षप्रभेदत्वान्निराकाङ्क्षेऽसङ्गतेऽन्तर्भावः स्फुट इत्यर्थः ।

**(टीका) अप्राप्तकाले तु अवयवविपर्यासादि निग्रहस्थानमेव न भवति अर्थाविरोधात् छन्दोभङ्गादिवत् । अर्थविरोधि असङ्गतमेव । विवक्षितक्रमानुल्लङ्घने हि सङ्गतिः स्यात् । अन्यथानुभाषणं च, उक्तानुवादस्यैव सङ्गतत्वात् । प्राप्तदूषणोद्भावनस्यैव सङ्गतत्वेन पर्यनुयोज्योपेक्षणमपि असङ्गतिरेवेति ।**

**(टिप्पणी) अप्राप्तकाले त्विति ॥** इदं तु यदैवमेव समयबन्धः यथाकथञ्चिद् व्याप्तिविशिष्टपक्षधर्मतोपस्थितिजनकं वाक्यं वक्तव्यं न तु क्रमेणेवेति तदा । यदि तु न तथा समयबन्धस्तदाऽनाकाङ्क्षिताभिधानमेवेति तदप्यसङ्गतमेवेति स्मर्तव्यम् । आदिपदादवयवविपर्यासपरिग्रहः । **अर्थाविरोधादिति ॥** अन्वयबोधप्रतिबन्धाभावादित्यर्थः । समयबन्धानुसारेणेति । **विरोधीति ॥** अन्वयबोधविरोधीत्यर्थः । तथा समयबन्धाभावेनाकाङ्क्षाया अभावादिति भावः । एतदेवाह **विवक्षितक्रमेति ॥** तथैवाकाङ्क्षाकल्पनादिति भावः । **अर्थेति ॥** स्वीकृतक्रमानुसारेणोक्तावकाङ्क्षा भवतीत्यर्थः । तदुल्लङ्घने तु विवक्षितक्रमोल्लङ्घनेन कथमयं (एवं) वदतीति जिज्ञासया व्याकुलीभावादर्थबोधविरोधित्वमिति भावः । **अन्यथानुभाषणमिति ॥** वाद्यनुक्तानुभाषणमप्यसङ्गतमेवेत्यर्थः । प्राप्तेऽपि यद् दूषणमादौ लब्धं तदुपेक्ष्यान्योद्भावनेऽनाकाङ्क्षैवेत्यर्थः ।

**(टीका) एवमुक्तादन्यच्च यथासम्भवमुक्तान्तर्भूतं द्रष्टव्यमित्याह**

**(मूलम्) अन्यच्च ।**

**यथा, प्रतिज्ञाहानिः संवादे, अन्तर्भवति । अर्थतो हानिरसङ्गतावपि । प्रकृतदोषपरिहारे प्राप्ते 'अन्यथाऽस्तु' इत्यस्य सङ्गत्यदर्शनात् । एवं प्रतिज्ञान्तरमपि । अविशिष्टदूषणाभ्युपगमात् तद्दूषणपरिहारस्यैव सङ्गतत्वात् । हेत्वन्तरमप्यनेनोक्तम् । न्यूनाधिके न्यूनाधिकयोः । तत्र अवयवन्यूनमदूषणमित्युक्तम् ।**

**(टिप्पणी) प्रतिज्ञाहानिरिति ॥** शब्दतः प्रतिज्ञाहानिरित्यर्थः । शक्तिवैकल्यात् प्रमाणविरुद्धाङ्गीकाररूपत्वात् प्रतिज्ञाहानिरिति भावः । **असङ्गतावपीति ॥** संवादेऽसङ्गतौ चेत्यर्थः । न च शब्दतो हानिरप्यसङ्गतौ कुतो नान्तर्भवतीति वाच्यम् । दुष्टः पक्षो मास्त्वित्येवमात्मिकाया अर्थतो हानेः पूर्वदूषणापरिहारकत्वेनासङ्गतत्वात् पूर्वदूषणपरिहारस्यैव परिषदा काङ्क्षितत्वादिति भावः । **अविशिष्टेति ॥** अविशिष्टोक्तदूषणपरिहारे आकाङ्क्षा न तु दुष्टप्रतिज्ञान्तर इत्यर्थः । हेत्वन्तरमिवाधिकरूपदोषान्तर्भूतमित्यर्थः । **हेत्वन्तरमिति ॥** अविशिष्टोक्तदूषणपरिहार एवाकाङ्क्षाप्रदर्शनेन हेत्वन्तरमप्यसङ्गत्यन्तर्भूतत्वेनोक्तमित्यर्थः । **न्यूनाधिकमिति ॥** परोक्तन्यूनमधिकं च निग्रहस्थानं वाचनिकन्यूनाधिकरूपदोषान्तर्भूतमित्यर्थः । नन्वनेनावयवन्यूनमपि वाचनिकदोषान्तर्भूतमिति प्राप्तम् । तच्चानियतावयववादिनस्ते विरुद्धमत आह **तत्रेति ॥** एतच्च वादिनोराकाङ्क्षानुसारेण द्रष्टव्यम् । तेन यदा वादिनः पञ्चावयव एवाकाङ्क्षा तदा न्यूनमपि निग्रहस्थानमेवेति ।

**(टीका) एवम् आभासानुद्धारः अनुकूलतर्कानुक्तिश्च। अबुभुत्सितोक्तेरेव दोषत्वात्। र्कस्य पृथक्प्रमाणत्वात्। पुनरुक्तमधिकम्।**

**(टिप्पणी) एवमिति ॥** यथाऽवयवन्यूनं न दूषणमुपपत्तिज्ञानस्य तावताऽप्युपपन्नत्वात् थाऽऽभासानुद्धारोऽनुकूलतर्कानुक्तिश्च न दूषणमित्यर्थः। इदमपि पूर्ववदाकाङ्क्षानुसारेणैवेति स्मर्तव्यम्। **बुभुत्सितोक्तेरेवेति ॥** अत्रैवकारेण बुभुत्सितानुक्तिमात्रव्यवच्छेदकेनाऽभासोद्धारानुकूलतर्कयोरपि भुत्सादशायामनुक्तिर्दूषणमेवेति लभ्यते। तेनायमर्थः। अबुभुत्सितोक्तिर्दूषणमनाकाङ्क्षिताभिधानरूपत्वात्। त्वबुभुत्सितानुक्तिरपि अप्रयोजनकत्वादतिप्रसङ्गाच्चेति। आभासोद्धारानुकूलतर्कयोः समयबन्धानुसारेण दाचिदेव बुभुत्सितत्वादिति भावः। तर्कानुक्त्यदोषत्वे युक्त्यन्तरमप्याह **तर्कस्येति ॥** तथा च थमप्रमाणोपन्यासेन प्रमाणान्तराकाङ्क्षाया अभावात् तर्कानुपन्यासो न दूषणमिति भावः। यदि तु साक्षात् ाध्यसाधकतयाऽऽकाङ्क्षाविरहेऽपि व्याप्तिग्राहकतया कस्यचित् तदाकाङ्क्षा तदा दनुक्तिर्दूषणमेवेत्यवधेयम्।

**(टीका) उक्तात् अन्यत् अननुभाषणं न्यूनम्। तूष्णीम्भावः अनुक्तौ। अज्ञानम् प्रतिभा विक्षेपश्च, यत्किञ्चिदुक्तावपि प्रकृतोपयोगाभिमानाद्यभावात्।**

**(टिप्पणी) उक्तादन्यदिति ॥** अन्यथानुभाषणादन्यत् यत् तदनुवाददुष्यैकदेशानुवाददूषणमात्रा-वादात्मकमित्यर्थः। तूष्णीम्भावरूपाया अप्रतिभाया क्वान्तर्भाव इत्यत आह **तूष्णीम्भाव इति ॥** नुवादं विना तूष्णीम्भाव इत्यर्थः। अत एवानूद्य तूष्णीम्भावरूपाया अप्रतिभायाः पृथगन्तर्भावं वक्ष्यति। न्वज्ञानविक्षेपयोर्नास्यार्थो मया ज्ञायते, प्रयोजनमस्ति तस्मिन्नवसिते वक्ष्यामीत्याद्युक्तिसत्त्वात् थमेनयोरनुक्तावन्तर्भाव इत्यत आह **यत्किञ्चिदुक्तावपीति ॥**

**(टीका) न ह्यनुक्तिरप्यात्यन्तिकी। किं तु ? प्रकृतोपयोगाभिमानादिना अनुक्तिः। तानुज्ञायाः प्रयोजनविशेषात् पृथगन्तर्भावं वक्ष्यतीति। न चानेन त्रिविधो विरोध त्यादेर्गतार्थता। अनुमानविरोधविवेकाभावे हेत्वाभासादेरुक्तान्तर्भावाप्रतीतेरिति।**

**(टिप्पणी) न ह्यनुक्तिरपीति ॥** तथा चोक्तिसामान्याभावो नानुक्तिरूपो दोषः, अपि तु प्रकृतोप-क्तत्वेनाभिमतोक्त्यभावः। स चाज्ञानविक्षेपयोरस्त्येवेति भावः। ननु मतानुज्ञायाः पृथगन्तर्भावः कुतो क्ष्यते यावताऽन्यच्चेत्यादिनाऽसङ्गतावेवान्तर्भावस्य वक्तुं शक्यत्वात्। स्वस्य चोरत्वपरिहारे प्राप्ते त्वमपि ार इत्यस्य सङ्गत्यदर्शनादत आह **मतानुज्ञाया इति ॥** तथा च प्रयोजनविशेषात् पृथगन्तर्भाववचनं न

त्वन्यच्चेत्यादिना अन्तर्भावासम्भवादिति भावः । ननु विरोधो मानस्ववाक्याभ्यामित्यनेन त्रिविधो विरोध इत्यादेः पुनरुक्तत्वमत आह **न चानेनेति** ॥ सप्रयोजनं पुनर्वचनं न पुनरुक्तमिति भावः । वस्तुतस्तु पौनरुक्त्यमेव नास्ति प्रथमस्य सामान्यतो विरोधविभागोक्तिरूपत्वात् । द्वितीयस्यानुमानविरोध-विभागोक्तिरूपत्वात् । न हि विभिन्नप्रकारकज्ञानजनकत्वेऽपि तदित्यवधेयम् ।

*छलविभागः*

**(टीका) छलं त्रिविधम् । वाक्छलं सामान्यछलं उपचारछलञ्चेति । तत्र मुख्यार्थ-विवक्षया प्रयुक्तस्य मुख्यार्थान्तरकल्पनया तद्दूषणं वाक्छलम् । अभिप्रायान्तरकल्पनया तद्दूषणं सामान्यछलम् । अमुख्यार्थाभिप्रायेण प्रयुक्तस्य मुख्यार्थकल्पनया दूषणमुपचारछलम् ।**

**(टिप्पणी)** छलस्य विशेषतो लक्षणं वक्तुमादौ विभागमाह **छलं त्रिविधमिति** ॥ **मुख्यार्थकल्पनयेति** ॥ एकमुख्यार्थकल्पनया प्रयुक्तस्य तद्भिन्नवृत्तिकल्पनया दूषणं वाक्छलमित्यर्थः । तेन मुख्यार्थकल्पनया प्रयुक्तस्यामुख्यार्थकल्पनया दूषणमतिरिक्तं न भवति । अग्रिमद्वयस्य तदनन्तर्भावात् । **अभिप्रायान्तर इति** ॥ शक्यतावच्छेदकाश्रयैकव्यक्त्यभिप्रायेण प्रयुक्तस्यासम्भवदपरव्यक्त्यभिप्रायकत्व-कल्पनया दूषणं सामान्यच्छलमित्यर्थः । ननु लक्ष्यतावच्छेदकैकव्यक्त्यभिप्रायेण प्रयुक्तस्या-सम्भवदपरव्यक्त्यभिप्रायकत्वकल्पनया दूषणेऽधिकत्वापत्तिरिति चेन्न । अतिप्रसक्तधर्मस्य लक्ष्यतावच्छे-दकत्वाभावायैव हि व्यक्तिर्लक्षणया शाब्दबोधविषयः । तन्मात्रवृत्तिधर्मस्यैव तथात्वात् । अतिप्रसक्त-धर्मेऽवच्छेदकत्वग्राहकप्रमाणाभावात् । तात्पर्यानुपपत्त्यादेर्ग्राहकस्य विशेषधर्ममात्रनिष्ठत्वात् । अत एवावच्छेदके न लक्षणेति वदन्ति । व्यक्तेरेवानतिप्रसक्तत्वात् । आकाशपदे शब्दाश्रयत्वशक्त्यभाववत् । यद्वा वृत्तिविषयतावच्छेदकाश्रयैकव्यक्त्यभिप्रायेण प्रयुक्तस्यासम्भवत्तदाश्रयापरव्यक्त्यभिप्रायकल्पनया दूषणं सामान्यछलमित्यर्थः । तेन नोक्तदोषः । **अमुख्यार्थाभिप्रायेणेति** ॥ उपचारवृत्तिव्यत्यय उपचारछलमित्यर्थः । विनियमश्च मुख्यवृत्त्या उपचारान्तरेण वेति । तेनानभिप्रेतोपचारान्तर-कल्पनयैवाभिप्रेतोपचारदूषणं सङ्गृहीतं भवति । अन्यथा यथाश्रुतेन तस्यासङ्ग्रहे विभागव्याघातापत्तिरिति ।

**(टीका) तत्र वाक्छलादेरसङ्गताद्यन्तर्भावस्फुरणायोपलक्षणतया वाक्छलमुदा-हरति—**

**(मूलम्) गृष्टिविवक्षया 'गाम् आनय' इत्युक्ते पृथिवीविवक्षया 'गवा-यनमशक्यम्' इतिवत् ।**

एकवारप्रसूता गौः गृष्टिः । द्वितीयं यथा 'अनूचानोऽयं ब्राह्मणः' इत्युक्ते 'युक्तमेव हि ाह्मणे अनूचानत्वम्' इति सम्भावनाभिप्रायेण परेणाभिहिते ब्राह्मणत्वस्य हेतु-ताभिप्रायकल्पनया 'नैवं, व्रात्ये व्यभिचारात्' इति प्रतिषेधः । तृतीयं यथा 'सिंहो देवदत्तः' त्युक्ते 'नैवम्, सटाद्यभावात्' इति । अत्र 'गवानयनं न विधेयम् अशक्यत्वात्' त्यादिच्छलवाक्ये 'गवा नयनम्' इत्येतदयुक्तं अनन्वितत्वात्' इत्यादेश्छलस्य वृत्तेर्विरोधत्वं ज्ञातव्यम् ।

**(टिप्पणी) तत्रेति** ॥ विशिष्टान्तर्भाव्यस्वरूपे प्रदर्शितेऽन्तर्भावज्ञानमिति ॥ रनुयोज्यानुयोगाद्येष्वेवमेव स्वयमुदाहरणं द्रष्टव्यमिति सूचयन्नेव निरनुयोज्यानुयोगप्रभेदे छले ःस्फूर्तिकत्वात् वाक्छलोदाहरणमाहेत्यर्थः । **गृष्टिविवक्षयेति** ॥ यद्यप्येकवारप्रसूतगवाभिप्रायेण गोपदोक्तौ क्षणैव विशेषधर्मावच्छेदेन शक्त्यभावात् । तथा चोपचारछलमेवेदं न तु वाक्छलमिति । तथापि विवक्षयेत्येवाभिप्रेतं गोपदस्य नानार्थत्वाद् विशेषसमर्पणाय गृष्टिविवक्षयेति विशेषोक्तिर्न तु तत्प्रकारको धोऽप्यभिप्रेत इति द्रष्टव्यम् । उपलक्षणीयमुदाहरणं स्वयमाह **द्वितीयं यथेति** ॥ सामान्यछलं यथेत्यर्थः । **क्तमेव हीति** ॥ वेदाध्ययनकर्तृत्वब्राह्मणत्वयोः सामानाधिकरण्यमात्राभिप्रायेण प्रयुक्तस्य यतसामानाधिकरण्याभिप्रायकल्पनया दूषणमित्यर्थः । असङ्गताद्यन्तभवित्यत्रादिपदग्राह्यत्वविरोधे लस्यान्तर्भावमाह **अत्रेति** ॥ पृथिव्यानयनं न विधिपदजन्यज्ञानविषयः कृत्यसाध्यत्वादित्यर्थः । तिसाध्यविधिपदजन्यज्ञानविशेष्यत्वादिति भावः । **अनन्वितत्वादिति** ॥ पृथिव्यानयनयोः स्परमन्वयायोग्यत्वेन विशिष्टस्य पक्षस्याज्ञानादित्यर्थः । **विरोधत्वमिति** ॥ स्ववचनन्यायेन । स्ववचन-रोधत्वमित्यर्थः ।

**(टीका) रूढ्या योगेन वा प्रतिपाद्योऽर्थो मुख्यः । बहुलप्रयोगमात्रसिद्धा रुढिः । ाब्दप्रवृत्तिनिमित्तविवक्षया प्रवृत्तिर्योगः ।**

**(टिप्पणी)** मुख्यार्थविवक्षया वाक्छलमित्यत्र का मुख्यवृत्तिरित्याकाङ्क्षायामाह **रूढ्या योगेन** ते ॥ यद्वा मुख्यामुख्यवृत्त्योर्भेदाज्ञाने तद्भेदप्रयुक्तः छलस्यापि भेदो ज्ञातुं न शक्यत इत्यत आह

१. टीकाटिप्पण्योः प्रतीकग्रहणे आनुगुण्यं नोपलभ्यते । महान्तः प्रमाणम् ।

**रूढ्यायोगेन वेति** ॥ समुदायशक्त्या समुदितशक्त्या वेत्यर्थः । योगस्यापि रूढिविशेषत्वाद् विकल्पानुपपत्तिरतस्तद्व्यावृत्तं रूढिपदार्थमाह **अखण्डेति** ॥ विभक्त्यन्तनावच्छेदकधर्मावच्छिन्न-वृत्तिरित्यर्थः । यद्यपि पाचकपदादवयवभूतपाकपदशक्तेरपि पाक इत्यादावेवंरूपसहितत्वमस्त्येव तथापि यदा योगत्वं तदा न रूढित्वमित्युभयोर्भेदेनोपन्यास इति । यद्वा एतदस्वरसादेवाह **बहुलेति** ॥ इदं तु स्वरूपकथनपरमन्यस्यासाधकत्वात् । योगस्यापि कदाचित् प्रयोगसिद्धत्वमस्तीत्यत आह **मात्रेति** ॥ योगस्य च वृत्त्या कारणादरसिद्धत्वमप्यस्तीत्यर्थः । **शब्दप्रवृत्तीति** ॥ शाब्दबोधप्रकारीभूतोपाधिघटक-पदार्थोपस्थापकतया प्रवृत्तिरित्यर्थः । अस्ति च पाचकमित्यादौ शाब्दबोधप्रकारीभूतपाककर्तृत्वघटक-पाकाद्युपस्थापकतया पाकादिपदप्रवृत्तिः ।

**(टीका) अखण्डवृत्ती रूढिः अवयववृत्तिर्योग इति वा। गौण्या लक्षणया वा वृत्त्या शब्दबोध्योऽर्थः अमुख्यः। मुख्यार्थगुणयुक्तार्थान्तरवृत्तिर्गौणी। मुख्यार्थसम्बन्धिन्यर्थान्तरे वृत्तिर्लक्षणेति।**

**(टिप्पणी)** नन्विदं नीलं घटमानयेत्यादौ नीलपदादावतिव्यापकं, तत्रापि शाब्दबोधप्रकारीभूतनील-घटत्वघटकपदार्थोपस्थापकत्वसत्त्वादतो लक्षणान्तरमाह **अवयववृत्तिरिति** ॥ विभक्त्यन्तैकदेशवृत्ति-रित्यर्थः । नीलं घटमित्यादौ नीलपदस्य विभक्त्यन्तत्वेन तदेकदेशत्वाभावान्नातिव्याप्तिः । नीलघटमित्यादौ तु सङ्ग्राह्यत्वमेवेति भावः । **गौण्या लक्षणया वेति** ॥ सादृश्येन सादृश्यान्यसम्बन्धेन वेत्यर्थः । तेन शक्तिभिन्नसम्बन्धेन शाब्दबोधविषयोऽमुख्य इत्युक्तं भवति । सादृश्यपदस्य पदसम्बन्धरूपत्वादिति । **मुख्यार्थेति** ॥ स्वशक्यसादृश्येन बोधकत्वं गौणत्वमित्यर्थः । **मुख्यार्थानुपपत्ताविति** ॥ इदं यद्यपि गौण्यामतिव्याप्तं यथाश्रुतं तथापि सादृश्यान्यसम्बन्धेन स्वाशक्यबोधकत्वं लाक्षणिकत्वमिति विवक्षितम् । मुख्यार्थेत्यादिकं तु स्वाशक्यबोधकत्वे सहकारीत्यादिना ।

**(टीका)** हेत्वाभासादेः क्वान्तर्भाव इत्यतस्तं वक्तुमनुमानविरोधविभागमाह—

**(मूलम्) त्रिविधो विरोधः।**

**अनुमानस्य साधारणोऽसाधारणश्च सम्भावित इति शेषः । कथं त्रैविध्यमित्यत आह—**

**(मूलम्) प्रतिज्ञाहेतुदृष्टान्तभेदेन**

(टीका) अत्र प्रतिज्ञापदेन पक्षोऽप्युपलक्ष्यते।

**(टिप्पणी)** पौनरुक्त्यं परिहरन्नेवोत्तरग्रन्थमवतारयति **हेत्वाभासादेरिति** ॥ सप्रयोजनत्वाद् शेषविभागरूपत्वाच्च न पौनरुक्त्यमिति भावः । विरोधमात्रस्य त्रिविधत्वाभावात् प्रतियोगिविशेषं रूपयति **अनुमानस्येति** ॥ नन्वनुमानविरोधो मानविरोधेऽन्तर्भवति मानविरोधश्च साधारणो नानुमाने विध इत्यत आह **साधारणोऽसाधारणश्चेति** ॥ तथा च न केवलं मानविरोधः साधारण एव अपि साधारणोऽपि । अत एव पूर्वमुक्तम् । द्विविधो विरोधः साधारणोऽसाधारणश्चेत्यादीति भावः । तादृशोऽपि त्रिविधो विरोधो न सर्वत्रेत्यत आह **सम्भावित इति** ॥ तथा चानुमानस्य विद्यमानो विरोधो धात्रयानवच्छिन्नो न भवतीत्येवं वाक्यार्थो न तु विधात्रयावच्छिन्नः सर्वत्र वर्तत एवेतीति भावः । **क्षोऽपीति** ॥ यद्यपि साध्यविशिष्टपक्षवचनस्य प्रतिज्ञात्वेन प्रतिज्ञापदं स्ववाच्यविषयत्वा-शेषादुभयोपलक्षकमेव । अन्यथा साध्यमप्युपलक्ष्यत इत्येवोच्येत । तथापि साध्यवचनं प्रतिज्ञेति तमालम्ब्येदमुक्तमिति स्मर्तव्यम् ।

(टीका) हेतुपदेन लिङ्गं च। तथा दृष्टान्तपदेनोदाहरणम्। विरोधस्योभयदूषणत्वात्। तिज्ञादिभेदेन साधनांशानां त्रैविध्यात् तद्विरोधस्त्रिविधः। विरोधपदं संयोज्य वा योज्यम्। अ)तत्र प्रतिज्ञाविरोधः साधारणः। अन्यावसाधारणौ।

**(टिप्पणी)** **हेतुपदेनेति** ॥ यद्यपि हेतुपदं लिङ्गवाचकमेव भूयःप्रयोगात् । तथापि तिज्ञासमभिव्याहारानुरोधेन हेतुशब्दस्य हेतुवाचकशब्दपरत्वनियमेनेदमुक्तमिति । **उदाहरणमिति** ॥ दाह्रियमाणमित्यर्थः । **उभयदूषणत्वादिति** ॥ उभयनिरूप्यत्वादित्यर्थः । **प्रतिज्ञादिभेदेनेति** ॥ तिज्ञाविषयादिभेदेनेत्यर्थः । तेन प्रतिज्ञाविषयादिभेदेनानुमानांशानां त्रिविधत्वात् त्रिविधनिरूपितोऽनुमान-रोधोऽपि त्रिविध इत्यर्थः । नन्वेतावता विधात्रयोपन्यासः शाब्दो न किन्त्वार्थ इत्यत आह **रोधपदमिति** ॥ तथा च प्रतिज्ञाहेतुदृष्टान्तविरोधभेदेनेति पर्यवसाने तदुपन्यासः शाब्द इति भावः । धारणासाधारणभेदभिन्नोऽनुमानविरोध इति पूर्वमुक्तम्। तत्र कः साधारण इत्यपेक्षायामाह अ(त)त्रेति ॥

*प्रतिज्ञाविरोधलक्षणम्*

(टीका) प्रतिज्ञाविरोधं लक्षयति—

**(मूलम्) प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोधः।**

अत्र प्रमाणविरोध एव हेत्वाभासानामन्तर्भावात् तस्य ग्रहणम्, न स्ववाक्यविरोधस्य।

(टिप्पणी) ननु विरुद्धार्थप्रतिज्ञा विरुद्ध इत्येव कुतो नोक्तमत आह **अत्रेति** ॥ तथाच हेत्वाभासानामर्थदोषत्वेन प्रमाणविरोध एवान्तर्भावो न स्ववाक्यविरोध इति सूचयितुं सामान्यनोऽनुपादानमिति भावः ।

(टीका) हेतुविरोधं दर्शयति—

**(मूलम्) हेतुस्वरूपासिद्धिरव्याप्तिश्चेति हेतुविरोधः**

अत्र प्रथमहेतुशब्देन लिङ्गमुच्यते। यत् यत्र वादिना विवक्षितं तत्र तस्याप्रमितिः स्वरूपासिद्धिः।

(टिप्पणी) हेतुस्वरूपासिद्धावपि हेतुविरोधौ स्तः तत् कुतो द्वैविध्यमेवेति चेन्न । तयोरव्याप्तावेवान्तर्भावादिति । हेतुशब्दस्य हेत्वर्थकशब्दपरतया व्याख्यातत्वात् । प्रकृते भ्रमं वारयति **अत्रेति** ॥ द्वितीयहेतुशब्दस्य पूर्वोक्तपरत्वमिति भावः ।

(टीका) दृष्टान्तविरोधं दर्शयति—

**(मूलम्) साध्यस्य साधनस्य वा अननुगमो दृष्टान्तविरोधः।**

उभयोर्वेति ग्राह्यम्। अननुगमो अनुगत्यप्रमितिः। साधर्म्यदृष्टान्तस्यायं विरोधः। साध्यस्य साधनस्य उभयोर्वा व्यावृत्त्यप्रमितिर्वैधर्म्यदृष्टान्तविरोधोऽपि द्रष्टव्यः। अनेन पक्षसाधनदृष्टान्तलक्षणराहित्यं प्रतिज्ञाहेत्वादिविरोधलक्षणं सूचितं भवति। तल्लक्षणविभागादि सङ्ग्रहेणैव ज्ञापयितुमियमुक्तिः।

(टिप्पणी) **अनुगत्यप्रमितिरिति** ॥ साध्यतावच्छेदकतावच्छिन्नस्य साधनतावच्छेदकावच्छिन्नसाधनाप्रमितिरित्यर्थः। **साधर्म्यदृष्टान्तस्येति** ॥ ननु स्वार्थानुमानाभासाव्यापकमिदं तत्र प्रतिज्ञादेरभावात्। किञ्च हेतुविरोधादेरङ्गस्यासत्त्वेन त्रैविध्यानुपपत्तिरित्यत आह **अनेनेति** ॥ तथा च प्रतिज्ञादिरुपलक्षणतयोपलक्ष्यस्य साध्यलक्षणराहित्यादेरनुगतस्य सत्त्वेन च न पूर्वोक्तदोष इति भावः । साध्यलक्षणं विरोधिप्रमाणाभाववत्त्वं तद्राहित्यम् । साधनलक्षणं समुचितदेशवृत्तित्वे सति व्याप्तत्वं

१. अस्य वाक्यस्य मूलं नोपलब्धम् ।

द्राहित्यम् । दृष्टान्तलक्षणं व्याप्यव्यापकप्रमाविषयत्वं तद्राहित्यमित्यर्थः । इयमुक्तिरिति विशेषोक्तित्वलेन ायतं सामान्यलक्षणं सूचयितुमेव (इति) । अन्यथा सामान्यतो ज्ञानाभावेन जिज्ञासाविरहाद् ़शेषाभिधानानर्थक्यप्रसङ्गादिति ।

(टीका) बाध एव प्रमाणविरोध इति मन्वान आह । सप्रतिसाधनोऽप्यन्यो- ़नुमानविरोधोऽस्ति । अतः कथमेवं त्रैविध्यम् ? इति । तत्राह—

**(मूलम्) प्रतिज्ञायाः समबलविरोध एव सप्रतिसाधनः ।**

(टीका) द्विविधो हि प्रतिज्ञायाः प्रमाणविरोधः प्रबलप्रमाणेन समबलेन चेति । आद्यो ाधकत्वेन । द्वितीयः प्रतिबन्धकत्वेन । तत्र योऽयं प्रतिज्ञायाः समबलेन प्रमाणेन विरोधः स ़प्रतिसाधनसंज्ञो भवति । अतो युक्तमुक्तमिति ।

एवकारेणास्य हेतुविरोधत्वं व्यवच्छिनत्ति । प्रतिज्ञामात्र एवास्य स्फुरणात् । याप्त्यादिहेत्वङ्गस्यानेनाखण्डितत्वाच्च । एतेन प्रबलप्रमाणविरोधस्यापि हेतुविरोधत्वं त्युक्तम् ।

(टिप्पणी) प्रमोपहितत्वैव प्रमाणत्वमित्यभिप्रायस्य शङ्कामुत्थापयति **बाध एवेति** ॥ प्रमास्वरूप- ग्यत्वं प्रमाणत्वं प्रकृते विवक्षितमित्यभिप्रायेण सिद्धान्तमवतारयति **तत्राहेति** ॥ **बाधकत्वेनेति** ॥ ाध्याभावप्रमाजनकत्वेनेत्यर्थः । **प्रतिबन्धकत्वेनेति** ॥ कारणीभूताभावप्रतियोगित्वेनेत्यर्थः । तिज्ञाविरोधीति शेषः । **उक्तमिति** ॥ प्रतिज्ञायाः समबलविरोध एवेत्यादिकमित्यर्थः । तदनेन करणसमान्तर्भावोऽप्यत्रैव सूचित इति स्मर्तव्यम् । हेतुभेदाभेदयोरप्रयोजकत्वादिति । न च ानध्यवसितस्तथापि पृथक् तस्याव्याप्त्यादावेवान्तर्भावादिति । **प्रतिज्ञामात्र एवेति** ॥ बाधवत् साक्षात् तिज्ञार्थधीप्रतिबन्धकत्वाद् विरोधिनिश्चयवद् विरोधिनिश्चयसामग्र्या अपि साक्षादेव प्रतिबन्धकत्वादिति ावः । **एतेनेति** ॥ हेतुविषयकतया प्रतिबन्धकतायां गौरवेणेत्यर्थः ।

(टीका) उपाधिविरोधोऽप्यन्योऽस्तीत्याह—

**(मूलम्) स एवोपाधिदोषोऽपि ।**

(टीका) नोपाधिः स्वयमेव दोषः । किं तु दोषोन्नायक एव । स चोपाधिना उन्नेयो दोषः

उपाधिदोषः प्रतिज्ञायाः समबलविरोध एवान्तर्भवतीति नोक्तविरोधः। प्रकृतसाध्यव्यापकः प्रकृतसाधनाव्यापकः उपाधिः । स हि पक्षात् व्यावर्तमानः साध्यं व्यावर्तयन् प्रतिपक्षोन्नायको भवति । उपाध्यभावस्य साध्याभावे [1]लिङ्गभावात् । उपाधेर्हि पक्षात् व्यावृत्तिः स्वव्यावृत्त्या साध्यव्यावर्तने शक्तिश्चापेक्षिता।

**(टिप्पणी) स एवेति ॥** समविरोध एवेत्यर्थः । कथमुपाधिदोषः स इत्यपेक्षायामाह **नोपाधिरिति ॥** बाधवद् वह्न्यभावानवगाहित्वात्, अनैकान्तिकवद् व्याप्त्याद्यभावरूपत्वाभावादिति भावः । **नोक्तविरोध इति ॥** त्रैविध्यविरोध इत्यर्थः । उन्नायकताप्रयोजकरूपमाह **प्रकृतेति ॥ साध्याभावे [1]लिङ्गभावादिति ॥** साध्याभावव्याप्यत्वादित्यर्थः । कथमुभयमुन्नायकताप्रयोजकमत आह **उपाधेरिति ॥** उपाधिव्यावृत्ते-र्व्याप्तिपक्षधर्मतासम्पादकतयोभयं प्रयोजकमित्याखण्डलकार्थः ।

(टीका) तत्र साध्यव्यापक इत्येवोक्ते साधनव्यापकस्य साधनस्येव पक्षे वर्तमानत्वात् साध्यव्यापकोऽप्युपाधिर्न पक्षात् साध्यं व्यावर्तयेदिति साधनाव्यापकत्वं ग्राह्यम् । तावत्येवोच्यमाने साध्याव्यापकस्य पक्षात् व्यावृत्तावपि साध्यव्यावर्तन-सामर्थ्याभावात् वैयर्थ्यं स्यादिति साध्यव्यापकत्वमपि ग्राह्यम् । तथा च साधना-व्यापकत्वात् पक्षात् व्यावृत्त उपाधिः साध्यव्यापकत्वात् व्यापकनिवृत्त्या व्याप्य-निवृत्तिरिति साध्यं व्यावर्तयतीति।

उपाधिगतव्याप्यत्वोपजीवनात् सोपाधिको हेतुर्व्याप्यत्वासिद्धो भवतीत्येके । साध्यरहितस्य पक्षस्यैव विपक्षत्वात् तत्र वर्तमानो हेतुः व्यभिचारी स्यादित्यपरे । तत् एवकारेण व्यवच्छिद्यते। यदा उपाधिव्यावृत्त्या पक्षे साध्याभावः सिद्धः तदैव परा-नुमानं दुष्टं स्यादिति पश्चाद्भाविना दोषेण पिष्टं पिष्टं स्यादिति।

**(टिप्पणी) व्याप्यत्वासिद्धो भवतीति ॥** स्वस्य व्याप्यत्वे परव्याप्त्युपजीवनानुपपत्तिरिति भावः । व्यभिचारोन्नायकतया ये दूषकत्वं मन्यन्ते तन्मतमाह **साध्यरहितस्येति ॥** चरमपक्षमादौ दूषयति **यदेति ॥** ननु पक्षे साध्याभावसिद्धिरेव कथं स्यादित्यत आह **साध्याभावेति ॥** अन्यथा पक्षस्य विपक्षत्वाभावेन व्यभिचारोऽपि न स्यादिति भावः ।

---

1. लिङ्गत्वात इति प्रचलितपाठः ।

(टीका) साध्याभावाविनाभाव्यभावत्वस्य अवश्याभ्युपगमनीयत्वात् प्रथमप्राप्तारित्यागेन दोषान्तरान्वेषणे गौरवं च स्यात् । [1]विषमव्याप्तौ व्याप्यत्वासिद्ध्यनुपत्तिश्चेति ।

(टिप्पणी) ननूभयोः प्रतिबन्धसमर्थत्वेन प्रतिबन्धकत्वे प्रथमस्यैव किं विनिगमकमत आह थमेति ॥ ननु साध्याभावसिद्धिश्च प्रबलप्रमाणविरोधोऽय समबलस्याबाधकत्वात् । तथा च कथं मबलविरोधान्तर्भाव इति चेत् । किमेतावता । प्रतिज्ञाविरोध एवास्यान्तर्भावो न तु थगित्येवास्माकमनुमनः पक्षो न तु सप्रतिसाधन एवास्यान्तर्भाव इत्यपि । एवकारोऽप्येतदर्थक एव । न वं व्यभिचारोन्नायकतया दूषकत्वनिरासः किमर्थः, यावता तथा दूषकत्वेऽप्यव्याप्तावेवान्तर्भावस्य वक्तुं क्यत्वादिति वाच्यम् । वस्तुगतिमनुरुध्य तथा निरासात्, न तु पृथक्त्वशङ्कयेति । प्रथमपक्षदूषणमाह विषम)व्याप्तेरिति ॥ विषमव्याप्तस्योपाधेः साध्यव्याप्यत्वाभावेन तद्व्याप्त्युपजीवनानुपपत्तेरिति भावः । न्तुतन्तु समव्याप्तोपाधिज्ञानेऽपि इदं व्याप्यं न भवतीति निश्चेतुमशक्यमेव यावतोभयोरपि याप्यत्वसम्भवादिति ।

(टीका) प्रतिज्ञाविरोधादेरुदाहरणमाह—

(मूलम्) सर्व एते दृश्यत्वानुमाने द्रष्टव्याः ।

'विवादपदं मिथ्या दृश्यत्वात् यत् दृश्यं तत् मिथ्या यथा शुक्तिरजतं तथा चेदं दृश्यं स्मान्मिथ्या' इत्येतदनुमानं प्रतिज्ञाविरोधादीनामुदाहरणं ज्ञातव्यमिति ।

(टिप्पणी) अनुमानविरोधत्रैविध्यस्य सप्रतिसाधनोपाध्याधिक्येनायुक्ततामाशङ्क्याधिक्ये रस्ते आश्रयासिद्ध्याद्याधिक्यप्रयुक्तत्रैविध्यायोगनिरासस्य उचितत्वेन मध्ये दृश्यत्वानुमानदोषदर्शनस्यायुक्ततामाशङ्क्य तत्परिहारं सूचयितुमाह प्रतिज्ञाविरोधादेरिति ॥ आश्रयासिद्ध्यादेर्दोषस्यैव निराकरिष्यमाणत्वेन दोषीभूतसप्रतिसाधनाद्यन्तर्भावकथनेन सकलानुमानदोषोक्तौ र्यवसितायां सर्वानुमानदोषैकोदाहरणसौलभ्येन मध्ये दृश्यत्वानुमाने सकलदोषप्रदर्शनमित्येव वचनेन ङ्कापरिहारः सूचितः । दृश्यत्वस्य साधने प्रमाणविरोधाद्यभावेन कथं सर्वदोषोदाहरणतेत्याशङ्क्य श्यत्वेन मिथ्यात्वानुमानत्वपथं दर्शयितुमाह विवादपदमिति ॥ मिथ्येति ॥ दसद्विलक्षणमित्यर्थः । मिथ्याशब्दोऽनिर्वाच्ये वर्तते इति पञ्चपादिकादर्शनात् । दृश्यत्वादिति ॥ अभिन्ननित्यज्ञानविषयत्वादित्यर्थः । तेन विज्ञानानन्दादिशब्दानां परापरसामान्यवाचित्वस्य

विवरणकाराभिमतत्वेन, स्वभिन्नज्ञानान्वस्य वृत्तावपि सत्त्वेन तद्विषयतया ब्रह्मणि व्यभिचारशङ्का निरस्ता । शुक्तिरजतवदिति ॥ अवयवानारब्धरजतवदित्यर्थः । सद्विलक्षणं रजतमसद्विलक्षणं ज्ञाना-करणकज्ञानविषयत्वात् घटवदिति दृष्टान्ते सदसद्विलक्षणत्वसिद्धौ न साध्यवैकल्यमिति पूर्वपक्ष्याशयः । यद्यपि चाद्वैतिनां भट्टरीत्या प्रयोग इति त्र्यवयवप्रयोग एवोचितः । तथापि उदाहरणादित्र्यवयवस्यापि प्रयोगस्य सूचनायोपनयादिप्रदर्शनम् ।

(टीका) तत्कथमित्यतः प्रतिज्ञायाः प्रबलप्रमाणविरोधं तावदुपपादयति—

**(मूलम्) प्रत्यक्षागमादिभिर्जगतः सत्यत्वात् ।**

'सन् घटः' इत्यादिप्रत्यक्षेण, 'विश्वं सत्यम्' इत्याद्यागमेन, 'विवादपदं सत्यम् अर्थक्रियाकारित्वात्' इत्याद्यनुमानेन च जगतः सत्यत्वावधारणात् जगन्मिथ्या इति प्रतिज्ञा प्रबलप्रमाणविरुद्धा भवति ।

**(टिप्पणी)** वक्ष्यमाणहेतूनामधिकत्वेन यथासङ्ख्यं पूर्वोक्तदोषोपपादकत्वायोगाद् योग्यतावलेन तत्तदुपपादनार्थत्वं सूचयन्नुत्तरग्रन्थं प्रबलप्रमाणविरोधोपपादनार्थत्वेन व्याचष्टे **तत् कथमिति** ॥ प्रतिज्ञाविरोधादीनामुदाहरणं कथमित्यर्थः । अन्येऽपि दोषा यथासम्भवं वक्ष्यमाणहेतुभिरुपपादयिष्यन्त इति तावच्छब्दार्थः । अथवा मानसिद्धत्वानुमानविरोधस्य वक्ष्यमाणत्वेनादिपदसङ्ग्राह्यानुमानविरोधोक्ते-रानर्थक्यमाशङ्क्याह **तत् कथमिति** ॥ एवं चानुकूलतर्कसाहित्येन प्राबल्यज्ञानम् । प्रबलप्रमाणविरोधप्रदर्शनार्थमादिपदेनानुमानस्योक्तेर्न निरर्थकमिति भावः । प्रत्यक्षादेः सत्यत्वे कारकहेत्वभावात् स्वरूपसत्सत्यत्वस्य च विरोध्यनापादकत्वात् । सत्यत्वपदं तदवधारणपरतया व्याख्यास्यन् प्रत्यक्षाद्युदाहरति **सन् घट इति** ॥ सदसद्विलक्षणत्वसाधने सत्त्वज्ञानमपि विरोध्येवेति भावः । **अर्थक्रियेति** ॥ असद्विलक्षणत्वादित्यर्थः ।

(टीका) हेतोः स्वरूपासिद्धिमुपपादयति—

**(मूलम्) तत्पक्षे दृश्यत्वस्य च मिथ्यात्वात् ।**

'यत् दृश्यं तत् मिथ्या' इति व्याप्तिमङ्गीकुर्वता दृश्यत्वस्यापि मिथ्यात्वमङ्गी-कर्तव्यम् । अन्यथा दृश्यत्वस्य व्यभिचारापातात् । अतो दृश्यत्वहेतोर्मिथ्यात्वात् दृश्यत्वहेतुर्वादिनः स्वरूपासिद्ध एव ।

**(टिप्पणी)** दृश्यत्वे मिथ्यात्वकथनार्थस्योत्तरग्रन्थस्य व्याप्तिकथनार्थत्वेन दोषाभावसाधकतया ासमानस्यायुक्ततामाशङ्क्याह **हेतोरिति** ॥ दृश्यत्वस्य मिथ्यात्वे सद्विलक्षण्येन शशविषाणादिवत् ारूपेणैवाभावापत्त्याऽसिद्धिरिति तात्पर्यमिति भावः । दृश्यत्वस्य मिथ्यात्वमेव मास्तु अतो ासिद्धिरित्याशङ्क्याह **यद् दृश्यमिति** ॥ दृश्यत्वस्य मिथ्यात्वानभ्युपगमे आश्रयासिद्धिरूपहेतुविरोध एव ादिति भावः । तत्पक्ष इत्यस्य प्रयोजनं सूचयन्नाह **अत इति** ॥ **वादिन** इत्यनेन ात्यनरासिद्धिकथनार्थता सूचिता । अनिर्वचनीयासिद्ध्या साध्याप्रसिद्धिरित्येवमप्रसिद्धविशेषणत्वो-पर्थनयोत्तरग्रन्थस्य भानात् तस्य च दोषत्वाभावात्, हेतुदोषोपपादनमध्ये तत्कथनं नानुपयोगितयोच्यते, न शशविषाणादितुल्यतयाऽसिद्धिः स्यात् । किन्तु अनिर्वचनीयतयाऽसद्विलक्षणत्वमपि । एवं च दसद्विलक्षणस्यैव हेतुत्वान्न व्यभिचारो नाप्यसिद्धिरिति शङ्काशयः ।

**(टीका)** न मिथ्येत्यसदुच्यते येन हेतोः स्वरूपासिद्धिः स्यात् । किं नाम ानिर्वचनीयमेव । अतः अनिर्वचनीयदृश्यत्वस्य भावान्न स्वरूपासिद्धिरित्यत आह—

## (मूलम्) अनिर्वचनीयस्य प्रतिवादिनोऽसिद्धत्वात् ।

अनिर्वचनीयस्य दृश्यत्वस्य हेतुत्वाङ्गीकारेऽपि प्रतिवादितः स्वरूपासिद्धिर्भवत्येव । तिवादिना जगति अनिर्वाच्यदृश्यत्वस्यानङ्गीकृतत्वादिति । यथा अग्निमत्वे साध्ये लिनत्वामलिनत्वादिविशेषानपहाय धूममात्रं हेतुः तथा अनवधारितानिर्वच-ायत्वादिविशेषं दृश्यत्वमात्रं जगन्मिथ्यात्वे हेतुः किं न स्यादित्यत आह **अनिर्वच-ायस्येति** ॥

**(टिप्पणी)** तत्रानिर्वचनीयत्वं हेतुतावच्छेदके प्रविशति अथवा वस्तुतोऽनिर्वचनीये दृश्यत्वत्वमात्रं तुतावच्छेदकमिति विकल्पावभिप्रेत्य प्रथमविकल्पनिरासार्थत्वेन तावद् ग्रन्थं योजयति **निर्वचनीयदृश्यत्वस्येति** ॥ तथाच प्रतिवादिमते तादृशदृश्यत्वस्य शशविषाणादितुल्यत्वादन्यतरा-द्धिरिति भावः । द्वितीयकल्पनिरासार्थत्वेनापि ग्रन्थं योजयितुमाह **धूममात्रं हेतुरिति** ॥ त्वावच्छिन्नव्याप्यताको धूमो हेतुरिति यावत् । **अनवधारितेति** ॥**(अवधीरित)** अनवधारितः अवधीरित)तिरस्कृतः[1] अनादृतः हेतुतावच्छेदकेऽप्रवेशित इति यावत् । **दृश्यत्वमात्रमिति** ॥ यत्वत्वमात्रावच्छिन्नव्याप्यताकदृश्यत्वमिति यावत् ।

१. मातृकायां अवधीरित इति पाठ उपलभ्यते ।

**(टीका) शक्यते वक्तुं धूममात्रमग्निमत्त्वे हेतुरिति । मलिनधूमादौ वादिप्रतिवादिनोर्धूमत्वसम्मतेः । न चैवं प्रकृते । अनिर्वचनीयदृश्यत्वस्य प्रतिवादिनोऽसिद्धत्वात् । न हि गगननलिनासिद्धौ नलिनत्वसामान्यं तत्राङ्गीकर्तुं शक्यत इति ।**

**(टिप्पणी)** दृष्टान्तवैषम्योक्तिपूर्वं ग्रन्थं व्याचष्टे **शक्यत इति** ॥ वस्तुनोऽनिर्वचनीयस्योभयसिद्धत्वाभावेन तस्य सामान्यतो हेतुतेत्यपि न युक्तम् । आश्रयस्यैव सद्विलक्षणत्वेनासत्त्वापत्त्या तत्र हेतुतावच्छेदकसामान्यतो हेतुत्वायोगादित्यर्थः । न चानिर्वचनीयं दृश्यत्वमिति स्वमतस्थितिमात्रमुक्तं दृश्यत्वमात्रं वस्तुनोऽसद्विलक्षणं दृश्यत्वं वा हेतुरित्युक्तौ न कोऽपि दोष इति वाच्यम् । लाघवेन सद्विलक्षणस्यैवासिद्धिप्रयोजकतया दृश्यत्वे तदभ्युपगमेऽसिद्धिपरिहारायोगादिति भावः । एतच्छङ्कानिरासार्थत्वेन वा नहीतिग्रन्थो हिशब्दशङ्कानिरासार्थत्वमङ्गीकृत्य व्याख्येयः । भावस्तु स एव ।

**(टीका) दृश्यत्वहेतोरव्याप्तिमुपपादयति—**

**(मूलम्) आत्मनोऽपि दृश्यत्वात्**

**सत्यत्वेनाङ्गीकृतस्यात्मनो विपक्षत्वात् तत्र च दृश्यत्वहेतोर्वर्तमानत्वात् व्याप्तिहीनोऽप्यसौ भवति ।**

**(टिप्पणी)** हेतुविरोधस्य पूर्वग्रन्थेनैव सिद्धेरुत्तरग्रन्थानुपयोगमाशङ्क्याव्याप्तिरूपहेतुविरोधान्तरोपपादनार्थत्वेन व्याचष्टे **दृश्यत्वहेतोरिति** ॥ ननु विशिष्टस्यात्मनो मिथ्यात्वेन नाव्याप्तिरित्याशङ्क्याह **सत्यत्वेनेति** । नित्यं हि ज्ञानं विशुद्धचैतन्यं न च तद्विषयता जगतः सम्भवति । तस्य जगत्सम्बन्धासंगादतोऽसिद्धिपरिहाराय स्वभिन्नज्ञानविषयतयैव हेतुः । तथाच सत्यत्वेनाभिमतस्य विशुद्धचैतन्यात्मकस्यात्मनोऽपि साऽस्त्येव । मूला-विद्यानिवर्तकचरमवृत्तिविषयत्वात् । न च सा ज्ञानमेव नेति वाच्यम् । अविद्यानिवर्तकत्वाभावापत्तेः । अज्ञानमिति नञो ज्ञानविरोधिवाचित्वाभ्युपगमेनान्यस्याज्ञानाविरोधित्वात् । न च वृत्त्यवच्छिन्नचैतन्यमेवाविद्याविरोधितया तन्निवर्तकमिति वाच्यम् । तस्यापि शुद्धचैतन्यभिन्नत्वात् । न च तस्य भिन्नत्वे तद्विषयकता न शुद्धे इति वाच्यम् । एकविषयकत्वेनैवाज्ञाननिवर्तकत्वेन वृत्त्यवच्छिन्नस्य शुद्धाविषयकत्वे तद्विषयकमूलाज्ञानानिवर्तकत्वापत्तेः ।

न च ज्ञानत्वेनैवाज्ञाननिवर्तकता वृत्तिस्तु अन्या न निवृत्तिप्रतिबन्धिका । निवृत्तिप्रतिबन्धकत्वस्य नास्ति न प्रकाशत इत्यादिव्यवहारयोग्यतारूपस्यावरणस्य निवृत्त्यर्था । अत एव घटज्ञानेन

टाज्ञाननिवृत्तिर्नोपपद्यते । ज्ञानत्वेन चैतन्यस्य विरोधित्वेऽपि घटाज्ञाननिवृत्तिप्रतिबन्धक-टावरणनिवर्तकवृत्त्यभावात् । एवं च न ब्रह्मणि ज्ञानविषयतापत्तिरिति वाच्यम् । एवं हि स्वभिन्नपदवैयर्थ्यापत्तेः । चैतन्ये ज्ञानविषयत्वस्यैवाभावात् । न च ज्ञानविषयत्वमेव हेतुरस्त्विति वाच्यम् । चैतन्यस्यापि स्वविषयकत्वस्यावश्यं वाच्यत्वात् । अन्यथा तत्र मुक्तौ पदार्थान्तराभावेन तद्विषयकत्वायोगे सति स्वविषयत्वस्याप्यभावे ज्ञानरूपताव्याघातात् । न च तद्वारणार्थमेव तर्हि स्वभिन्नपदमिति वाच्यम् । वृत्त्यवच्छिन्नस्यापि ज्ञानत्वेन स्वभावभङ्गपरिहारे शुद्धविषयकत्वावश्यम्भावे व्यभिचरनादवस्थ्यात् । न च विशिष्टस्य ज्ञानत्वमेव नेति वाच्यम् । तस्यैव ज्ञानपदशक्यत्वाभ्युपगमात् । जगति विशुद्धचैतन्यविषयत्वाभावेन विशिष्टस्याज्ञानत्वे हेत्वसिद्ध्यापत्तेश्चेति भावः ।

**(टीका) एतेन व्यतिरेकदृष्टान्तात् साधनाव्यावृत्तिश्चोपपादिता भवति ।**

**(टिप्पणी)** साध्यस्येत्यादौ दृष्टान्तविरोधत्वेन वैधर्म्यदृष्टान्तविरोधस्यापि दोषत्वोक्तेः उत्तरग्रन्थे च तस्यानुक्तत्वात् एतस्यैव ग्रन्थस्य साधनव्यावृत्त्यभावप्रतिपादनार्थतामाह **एतेनेति** ॥ दृश्यत्वहेतोः केवलान्वयित्वानभ्युपगमादन्वयव्यतिरेकित्वेन वाच्यम् । तत्र व्यतिरेके आत्मैव दृष्टान्त इति दृश्यत्वसत्त्वेन साधनव्यावृत्त्यभावरूपवैधर्म्यदृष्टान्तविरोध इति भावः ।

**(टीका) शुक्तिरजतादिदृष्टान्ते साध्याननुगममुपपादयति—**

**(मूलम्) शुक्तिरजतादेरनिर्वचनीयत्वाभावात् ।**

**मिथ्यापदेन अनिर्वचनीयत्वमभिमतं वादिनः । तच्च दृष्टान्ते शुक्तिरजतादौ न विद्यते । 'असदेव रजतं प्रत्यभात्' इति बाधकप्रत्ययेन असत्त्वावधारणात् । अतः शुक्तिरजतादिदृष्टान्तः साध्यविकलो भवति ।**

**(टिप्पणी)** साध्याननुगमरूपसाधर्म्यदृष्टान्तविरोधोपपादनार्थत्वेनोत्तरग्रन्थं व्याचष्टे **शुक्तीति** ॥

साध्यवैकल्यार्थं मिथ्यात्वाभावे वक्तव्येऽनिर्वचनीयाभावोक्तिमयुक्तामाशङ्क्याह **मिथ्येति** ॥ (मिथ्यैवेति असत्त्वस्यैवावधारणेन तद्वैलक्षण्यायोगात् तद्घटितमिथ्यात्वस्य दृष्टान्तेऽभाव इत्यर्थः । असत्त्वानुभवबाधितमसद्वैलक्षण्यानुमानमिति भावः ।)

---

१. 'तथाच' इति प्रचलितपाठः ।

(टीका) तत्र साधनाननुगमं चोपपादयति—

**(मूलम्) अनिर्वचनीयदृश्यत्वाभावात् ।**

(टीका) अनिर्वचनीयं हि दृश्यत्वं साधनमभिमतम् । न तत् शुक्तिरजतादौ वर्तत इति दृष्टान्तः साधनविकलो भवति । अनिर्वचनीयतया अभिमतस्य शुक्तिरजतादेर्दृश्यत्वाभावादिति वा । शुक्त्यादेरेव दृग्विषयत्वेन 'रजतादिकं दृष्टम्' इति भ्रममात्रम् ।

(टिप्पणी) साधनाननुगमरूपसाधर्म्यदृष्टान्तविरोधान्तरोपपादनार्थं अनिर्वचनीयेत्यादिग्रन्थं व्याचष्टे **तत्रेति** ॥ असिद्धिरूपहेतुविरोधोपपादनसमये हेतुविकल्पानुरोधादिमपि ग्रन्थमुभयथा व्याख्यातुमाह **अनिर्वचनीयं हीति** ॥ एवं च मन्मते साधनवैकल्यमिति भावः । दृश्यत्वमात्रस्य हेतुत्वविकल्पपक्षेऽपि ग्रन्थं योजयति **अनिर्वचनीयतयेति** ॥ पूर्वोक्तदृश्यत्वस्य शुद्धचैतन्येऽपि सत्त्वेन व्यभिचारपरिहाराय इन्द्रियसम्प्रयोगजन्यज्ञानविषयत्वं दृश्यत्वं हेतुर्वाच्यः । तस्य च मन्मते तावच्छुक्तिरजतेऽभाव इत्यर्थः । ननु शुक्तिरजतज्ञानेऽपि इन्द्रियसंयोगजन्यत्वस्य ज्ञानमिदमिन्द्रियसंयोगजन्यं तदन्वयव्यतिरेकानुविधायित्वादित्यनुमानेन सिद्धस्य सत्त्वाज्ज्ञानविषयीभूतं तदप्यङ्गीकार्यम् । तथाच न साधनस्याभाव इत्याशङ्क्याह **शुक्त्यादेरेवेति** ॥ शुक्तिरजतज्ञानमिन्द्रियसंयोगजन्यमिति ज्ञानं भ्रम एवेति न ज्ञानानुरोधात् वस्तुतो रजतांशे पूर्वोक्तदृश्यत्वापत्तिरिति भावः । **दृष्टमिति** ॥ स्वेन्द्रियसंयोगजन्यज्ञानविषय इत्यर्थः । इन्द्रियसंयोगान्वयव्यतिरेकानुविधानं पुरोवर्त्यंश एवेति वक्तुं शुक्त्यादेरित्याद्युक्तम् ।

(टीका) तन्मतेऽपि अनिर्वचनीयस्य दृश्यत्वाभावादिति वा । तैरपि शुक्तिरजतादेः न ऐन्द्रियकदृग्विषयत्वम् अङ्गीकृतम् । प्रतीतिसमय एवोदयाभ्युपगमात् । इन्द्रियस्याधिष्ठानग्रहण एव व्यापारोररीकरणात् । शुक्त्याद्यवच्छिन्नात्माविद्याकल्पितमारोपिततयैव अवभासत इति तत्प्रक्रिया ।

(टिप्पणी) ननु दोषस्यैव तत्र सम्प्रयोगत्वात् तस्यानथात्वेऽपीन्द्रियजन्यज्ञानविषयत्वस्यैव हेतुत्वात् न मन्मते साधनाननुगम इत्याशङ्क्य परमते साधनाननुगमप्रतिपादनार्थत्वेन व्याचष्टे **तन्मतेऽपीति** ॥ तमेवोपपादयति **तैरपीति** ॥ कुतो नाङ्गीकार इत्यत आह **प्रतीतीति** ॥ प्रतीतिमात्रसत्ताकस्य प्रतीतिः प्रागसत्त्वात् प्रतीतिजनकसंयोगासम्भवात् संयोगं विनाऽनिर्वचनीय-

रजतासिद्धिप्रसङ्गभयेनेन्द्रियस्य जनकत्वानभ्युपगमाच्च उक्तद्वयत्वाभ्युपगम इत्यर्थः । तन्मते नहीन्द्रियानुविधानस्य कथमुपपत्तिरित्याशङ्क्येन्द्रियस्येत्युक्तम् ।

**(टीका) प्राक् दृष्टान्तविरोधाभिधानानन्तरं प्रतिज्ञायाः समबलप्रमाणविरोधस्य सप्रतिसाधनसंज्ञा विहिता। अतस्तेनैवक्रमेण तमुपपादयति—**

**(मूलम्) मानसिद्धत्वादिति सप्रतिसाधनत्वाच्च।**

**(टिप्पणी)** नन्वेवमिन्द्रियजन्यज्ञानविषयत्वानभ्युपगमे लिङ्गादेरपि व्यापाराभावे शुक्तिरजतस्य ज्ञानविषयत्वमेव न स्यादित्याशङ्कानिराकरणार्थं शुक्त्यादीत्युक्तम् । एषा हि तन्मतस्थितिः । सतो बोधायोगाद् देशान्तरे सतोऽपि सन्निकर्षाभावाद् अत्यन्तासतश्च ज्ञानाकारणकज्ञानविषयत्वाभावात् सदसद्विलक्षणं पुरोवर्तिरजतमुपेयम् । तत्र तस्योपादानापेक्षायां रजतावयवानामसम्भवात् शुक्त्यादेश्चाज्ञानाविषयत्वात् तदवच्छिन्नचैतन्येऽज्ञानाभ्युपगमात् तस्य चान्वयव्यतिरेकाभ्यां रजतहेतुत्वात् तदारब्धं रजतं प्रमाणवृत्तिव्यतिरेकेणैव साक्षिणा भास्यत इति प्रतिज्ञाविरोधप्रकरण एव तद्रूपतया सप्रतिसाधनोपन्यासस्योचितत्वात् दृष्टान्तविरोधानन्तर्यस्यायुक्ततामाशङ्क्याह **प्रागिति** ॥ विरोधोक्तिक्रम उपपादनक्रमे नियामक इति भावः ।

**(टीका) 'जगत् सत्यं मानसिद्धत्वात् ब्रह्मवत्' इत्यपि वक्तुं शक्यत्वात् जगन्मिथ्येति प्रतिज्ञा सत्प्रतिपक्षा भवति । चशब्देन अमानसिद्धत्वमुपाधिं सूचयति । तद्धि मिथ्यात्वव्यापकं शुक्तिरजतादौ दृष्टम् । दृश्यत्वाव्यापकं च, जगति दृश्यत्वे विद्यमानेऽप्यभावात् । अतो जगतो व्यावर्तमानं अमानसिद्धत्वं मिथ्यात्वमपि व्यावर्तयतीति।**

**(टिप्पणी)** समबलविरुद्धसाध्यसाधकप्रतिरुद्धस्य सप्रतिसाधनत्वात् विरुद्धसाध्यस्य चानुक्तेर्न्यूनतामाशङ्क्याह **जगदिति** ॥ **मानसिद्धत्वादिति** ॥ केवलान्वयिभिन्नभावधर्मवत्त्वादित्यर्थः । शक्यत्वादित्यनेनानुकूलतर्काप्रतिसन्धाने समबलतापि सम्भवतीति सूचितम् । उपाधिदोषस्यापि स त्वेत्यनेनोक्तेः । तत्रापि दृश्यत्वानुमानस्योदाहरणतया तदनुपपादने मूलस्य न्यूनतामाशङ्क्याह **चशब्देनेति** ॥ अमानसिद्धत्वम् असत्त्वप्रकारकप्रमाविषयत्वमित्यर्थः । नन्विदं न साध्यव्यापकं दृष्टान्ते शुक्तिरजतादावसत्त्वस्याभावादित्याशङ्क्याह **तद्धीति** ॥ असदेवेदं प्रत्यभादिति प्रतीतिबलेनासत्त्वस्यावधारणादिति भावः । जगत्यसत्त्वं त्वयाऽपि न स्वीकृतमित्यभिप्रेत्य साधनाव्यापकतामाह

**दृश्यत्वाव्यापकं चेति** ॥ तावता कोऽनुमानदोष इत्यत आह **अत इति** ॥ सप्रतिसाधनोन्नायकतयैवोपाधेरुपयोग इति भावः ।

**(टीका) यदुक्तं 'जगन्मिथ्या' इति प्रतिज्ञा प्रत्यक्षविरुद्धेति । तदयुक्तम् । अनुमानेन ह्येष्यत्कालीनबाध्यत्वं साध्यते । न च तदभावं गोचरयितुं प्रत्यक्षमीष्टे येन तद्विरोधोऽनुमानस्य स्यात् । वर्तमानमात्रग्राहित्वात् प्रत्यक्षस्य । न हि भिन्नविषययोर्बाध्यबाधकभावोऽस्ति । न हि भवति आमघटश्यामताप्रत्यक्षेण पाकरक्तताप्रमाणस्य बाध इत्याशङ्क्य परिहरति**

**जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वे अनुमानागमप्रामाण्यग्राहिणोऽपि प्रत्यक्षत्वाविशेषात् उत्तरक्षणे प्रामाण्यं न सेत्स्यतीति भेदादिवाक्यानामेव प्रामाण्यं स्यात् ।**

**(टीका) यो हि जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वम् अङ्गीकुर्यात् स प्रष्टव्यः जगन्मिथ्यात्वग्राहिणः अनुमानस्य 'नेह नानास्ति किञ्चन' इत्याद्यागमस्य च प्रामाण्यं केन गृह्यत इति ।**

**(टिप्पणी)** दृश्यत्वानुमाने उक्तदोषोदाहरणताया उपपादितत्वादुत्तरग्रन्थानर्थक्यमाशङ्क्य प्रबलप्रमाणविरोधोद्धारशङ्कानिरासार्थत्वं वक्तुमाह **यदुक्तमिति** ॥ सद्विलक्षणत्वे साध्यप्रविष्टे सत्त्वमबाध्यत्वं तदभावश्च साध्यप्रविष्टः । बाधश्च कालत्रयासत्त्वप्रमा । एवं च स्वकीयेदानीन्तनतादृशज्ञानाभावस्य सन्नित्यादिप्रत्यक्षेण ग्रहणेऽपि नागामितादृशज्ञानाभावग्रहणम् । योग्यमात्रग्रहण एव प्रत्यक्षस्य सामर्थ्यात् । तथा च भाविबाधकविषयानुमानस्य पूर्वं तादृशज्ञानाभावविषयप्रत्यक्षेण सह समानविषयत्वाभावान्न विरोधः । प्राक्कालीनघटश्यामताग्राहिणेव भाविरक्तताप्रत्यक्षस्येत्यर्थः । प्रामाण्यस्यान्येन ग्रहणं क्व प्रामाण्यप्रत्यक्षप्रतिबन्दीत्यतः प्रत्यक्षं परिशेषयितुमाह **यो हीति** ॥

**(टीका) न तावत् स्वेन । स्वप्रामाण्यविषयत्वाननुभवात् । नाप्यनुमानाद्यन्तरेण । अनवस्थापातात् ।**

**(टिप्पणी) स्वेति** ॥ उभयोरपि प्रपञ्चासत्त्वमात्रग्राहित्वादिति भावः । **अनवस्थानेति** ॥ नन्वत्र कथमनवस्था । मिथ्यात्वानुमानादिप्रामाण्यग्रहे प्रामाण्यग्रहस्यानावश्यकत्वात् । न च स्वविषये संशयादिप्रतिबन्धाय तदपेक्षेति वाच्यम् । अप्रामाण्यशङ्काशून्यत्वेनैव तस्य तत्प्रतिबन्धकत्वात् । न च लाघवेन गृहीतप्रामाण्यकज्ञानत्वेनैव तत्प्रतिबन्धकमिति प्रामाण्यग्रहावश्यम्भावेनानवस्थापत्तेश्चेति वाच्यम् ।

तत्रापि सत्यत्वानुमानादिप्रामाण्यग्रहे तौल्यात् । प्रत्यक्षेऽपि प्रामाण्यग्रहावश्यम्भावापतितानवस्थापत्तेरिति चेत् । न । प्रामाण्यज्ञानस्य साक्षिरूपस्य प्रत्यक्षस्य स्वप्रामाण्यविषयत्वेनानवस्थापरिहारसम्भवेन पूर्वोक्तप्रकारेणानवस्थानादित्याशयात् । यद्वाऽनवस्थाने दार्ढ्यमनुकूलतर्काराहित्यं तद्भावस्योत्तरोत्तरानुमानेष्वपि आपातसत्त्वादित्यर्थः।

**(टीका) प्रत्यक्षेण चेत् तर्हि तस्यानुमानागमप्रामाण्यग्राहिणः प्रत्यक्षस्यापि प्रत्यक्षत्वाविशेषात् वर्तमानमात्रग्राहित्वं स्यात् ।**

**(टिप्पणी)** प्रत्यक्षं परिशेषयित्वा ग्रन्थं व्याचष्टे **प्रत्यक्षेण चेदित्यादिना** ॥ अबाधितार्थकत्वं हि प्रामाण्यम् । एवं मिथ्यात्वानुमानस्याबाधितार्थकत्वं नाम कालत्रयासत्त्वप्रमाविषयत्वाभावः । तत्र प्रत्यक्षेण विषयत्वाभावप्रमाया वर्तमानाया अभावे ज्ञातेऽपि नोत्तरक्षणवर्तिन्याः प्रमाया अभावो गृहीतुं शक्य इति त्वद्रीत्यैव सिद्धम् । तथा च किञ्चिद्विषयत्वाभावप्रमाया अभावेनैव न विषयत्वाभावसिद्धिः । किञ्चिद्ब्रह्मप्रमाया अभावेऽपि ब्रह्माभावसिद्ध्या व्यभिचारात् । एवं च सत्यपि प्रामाण्यप्रत्यक्षे विषयत्वाभावरूपसत्यत्वप्रमाशब्देनानुमानेन वा कर्तुं शक्यैव । एवं नेहेत्यादेरबाधितत्वं (नाम) भेदाभावासत्वप्रमाया अभावः । तत्रापि सत्यत्वरीत्या न किञ्चित्प्रमाभावमात्रेण भेदाभावासत्त्वाभावसिद्धिरिति भेदाभावाभावरूपभेदप्रमा भेदवाक्येनाप्रत्यूहं कर्तुं शक्येति मिथ्यात्वानुमानादिप्रामाण्यग्रहोऽस्मदभिमतप्रमाणपरिपन्थी न स्यात् । तस्मात् प्रत्यक्षेण सर्वस्यापि विषयत्वाभावप्रमाया भेदाभावासत्त्वप्रमाया वा अभावग्रहणात् तयोरभावग्रहणेन मदभिमताप्रमाप्रतिबन्धो वाच्यः । एवं सति सन्निधिप्रत्यक्षेणापि सकलबाधकप्रमाविरहज्ञानात् त्वदीयानुमानं प्रबलप्रमाणविरुद्धमिति तात्पर्यम् । अक्षरार्थस्तु **वर्तमानेति** ॥ योग्येत्यर्थः ।

**(टीका) [१]तथात्वे च न तेनोत्तरक्षणे अनुमानादिप्रामाण्यसिद्धिः । जगन्मिथ्यात्वानुमानादेः उत्तरक्षणे प्रामाण्यासिद्धौ च 'द्वा सुपर्णा' इत्यादिभेदवाक्यानां 'विश्वं सत्यम्' इत्यादि विश्वसत्यत्ववाक्यानां मानसिद्धत्वाद्यनुमानानां चोत्तरक्षणे प्रामाण्यं स्यात् । परस्परविरुद्धयोः अन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वनियमादिति । न च उत्तरक्षणे अनुमानादिप्रामाण्यग्राहकं प्रत्यक्षान्तरं भविष्यतीति वाच्यम् । उक्तरीत्या तत्र प्रामाण्याभावस्य वक्तुं शक्यत्वात् ।**

---

१. इदं वाक्यं क सङ्गतमिति न स्पष्टम् ।

**(टिप्पणी) 'तथात्वे चेति ॥** उत्तरकालीनप्रमाविरहस्य सिद्धिरित्यर्थः । **प्रामाण्यासिद्धौ चेति ॥** सकलप्रमाविरहनिश्चयेन विषयाभावाभावनिश्चय इत्यर्थः । **उत्तरेति ॥** मिथ्यात्वानुमानादिप्रामाण्यज्ञानोत्तरकालेऽपि प्रमाजनकता स्यादित्यर्थः । ननु भेदादिज्ञानोत्पत्तावपि तस्य प्रमात्वं कुत इत्यत आह **परस्परेति ॥** मिथ्यात्वानुमानदिविषयाभावाभावस्य प्रमाणाभावेन सत्त्वात् तद्विषयाभावेनावश्यं भवितव्यम् । परस्पराभावरूपयोर्मध्येऽन्यतराभावेऽन्यतरसत्त्वनियमादिति तदवगाहिनो भेदादिवाक्यजन्यज्ञानस्यावश्यकं प्रामाण्यमित्याशयः । ननूत्तरकालीनाया मिथ्यात्वानुमानादिविषयाभावप्रमाया अनुमानेनैवाभावावगमात् न मिथ्यात्वानुमानादिप्रामाण्यग्रहे सत्यत्वागमादिः प्रमाजनक इत्याशङ्क्याह **न चेति ॥ उक्तेति ॥** तस्याप्यबाधितार्थवत्त्वेन ज्ञानस्यैव पूर्वरीत्या स्वार्थसत्तानिश्चयरूपत्वादनवस्थाऽनुकूलतर्कराहित्यं चेत्यर्थः ।

**(टीका) ननु न सर्वप्रत्यक्षं वर्तमानमात्रग्राहीत्युच्यते । किन्तु साक्षिव्यतिरिक्तमेव । साक्षी तु एष्यदपि गृह्णाति । अतस्तेन उत्तरक्षणेऽपि अनुमानागमप्रामाण्यं सेत्स्यति इत्याशङ्क्य परिहरति—**

**(मूलम्) तस्य साक्षिसिद्धत्वं चेत् जगत्सत्यत्वमपि साक्षिसिद्धम् ।**

**यदि अनुमानादिप्रामाण्यस्य साक्षिसिद्धत्वमुच्यते, हन्त तर्हि जगत्सत्यत्वमपि साक्षिप्रत्यक्षसिद्धमिति ब्रूमः । तथाच साक्षिणो वर्तमानमात्रग्राहित्वाभावात् तेन एष्यत्कालीनजगद्बाधाभावसिद्धिसम्भवात् प्रत्यक्षविरोधोऽनुमानस्य दुर्वार एवेति ।**

**(टिप्पणी)** ननु मन्मतेऽतीन्द्रियस्यापि मनःप्रभृतेः साक्षिवेद्यत्वेनोत्तरकालीनबाधकविरहस्य सुतरां साक्षिप्रत्यक्षेण गृहीतुं शक्यत्वात्र मदीयानुमानादिसत्त्वे सत्यत्वानुमानादिसम्भव इत्याशङ्कोत्तरत्वेनोत्तरग्रन्थं व्याचष्टे **नन्वित्यादिना ॥** एष्यदिति अयोग्यमपीत्यर्थः । ननूभयोः साक्षिमात्रशरणत्वे कथं निर्णय इत्यत आह **तथा चेति ॥** साक्षिणा प्रथमं सत्यत्वे गृहीते तद्विरोधेनानुमानासत्यत्वे न तत्र साक्षिणा प्रामाण्यग्रहः सम्भवति इति वैषम्यमित्याशयः । वस्तुतः कालत्रयासत्त्वमेव लाघवादिना बाध्यत्वं तदभावश्च वर्तमानत्वमात्रग्राहकेणापि प्रत्यक्षेण गृहीत इति तद्विरोधोऽपरिहार्य इति भावः ।

**(टीका) अन्यस्त्वाह, न प्रत्यक्षेणानुमानस्य विरोधः । प्रत्यक्षस्य तत्र तत्र शुक्तिरजतादौ व्यभिचारो दृश्यते । ततश्च न तत्प्रामाण्ये विश्वासः सम्भवति । अविश्वस्तप्रामाण्येन च कथमनुमानस्य विरोधः स्यादिति ।**

तत्राह—

**(मूलम्) व्यभिचारश्चेदागमार्थानुमानिर्दोषत्वाध्यवसाये च समः ।**

प्रत्यक्षस्य व्यभिचारदर्शनात् अविश्वसनीयत्वं वदन् वादी प्रष्टव्यः 'नेह नानास्ति किञ्चन' इत्यागमस्य अशेषभेदाभावोऽर्थः, दृश्यत्वानुमानं निर्दोषं, मानसिद्धत्वाद्यनुमानं सदोषं इत्यध्यवसायः केन प्रमाणेनेति । न तावत् स्वेनैव । अननुभवात् ।

**(टिप्पणी)** नन्वप्रामाण्यशङ्काशून्यस्य ज्ञानस्यानुमितिप्रतिबन्धकता । अन्यथा पीतभ्रमे शुक्लत्वानुमित्यभावापत्तेः । न च तत्सत्त्वप्रत्यक्षेण घटकृतकत्वादेः । शुक्तिरजतादिज्ञानसाम्येनार्थाभावेऽपि सत्त्वप्रत्यक्षसम्भवशङ्कासत्त्वात् । अतो न मिथ्यात्वानुमानादिप्रतिबन्ध इत्याशङ्कानिरासार्थत्वेनोत्तरग्रन्थं व्याचष्टे **अन्य इत्यादिना** ॥ अयमागमार्थ इत्यध्यवसायेऽनुमानिर्दोषत्वस्य चाध्यवसाये इति मूलार्थः ।

**(टीका) नाप्यागमाद्यन्तरेण । अनवस्थापातात् । प्रत्यक्षेण चेत्, तर्हि प्रत्यक्षस्य तत्र तत्र व्यभिचारदर्शनात् इदमपि प्रत्यक्षमविश्वसनीयम् । तथाच न तेनागमार्थाध्यवसायः सिद्ध्यतीति । अनुमाया अनिर्दोषत्वाध्यवसाय इति च योज्यम् । यद्यप्यत्र पूर्वोक्तमेवानिष्टं शक्यते वक्तुं तथापि तत् शिष्यैरेव शक्यते ज्ञातुमिति दूषणान्तरमेवोक्तम् । अभेदागमस्याभेदार्थत्वाध्यवसायानुपपत्तिरेवानिष्टा ।**

**(टिप्पणी)** नापीति टीकाग्रन्थः पूर्ववद् योज्यः । मानसिद्धत्वानुमाने निर्दोषत्वाध्यवसायस्य रागस्मतेः सदोषमिति स्वोक्तविरोधापत्तेश्चैतदभिप्रायेण निर्दोषशब्देऽतः प्रश्लेषमाह **अनुमाया इति** ॥ मानसिद्धत्वानुमान इत्याद्युक्तमूलदूषणं व्याख्यातुं सदोषत्वमूलानुरोधेन शङ्केति द्रष्टव्यम् । मानसिद्धत्वानुमानम् इत्याद्युक्त्वा अकारप्रश्लेषेण व्याख्या तु सदोषा या मूला तदनुरोधेन कृतेति द्रष्टव्यम् ।

ननु मिथ्यात्वानुमानादिप्रामाण्यप्रत्यक्षमेव पूर्वोक्तमादाय दूषणसम्भवे किमर्थमानमाध्यवसायादि-प्रतिपत्तिरित्यत आह **यद्यपीति** ॥

**(टीका) अधिकं चाह—**

**(मूलम्) अत उत्तरदिवसे अभेदवाक्यस्य भेदोऽर्थः स्यात् ।**

'नेहानाना' इति वाक्यस्याभेदोऽर्थ इत्यध्यवसायानुपपत्तौ भेदोऽर्थः स्यात् । परस्परविरुद्धयोः अन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वनियमादिति।

प्रत्यक्षस्य वर्तमानमात्रग्राहित्वाभ्युपमेऽप्ययं दोषः समान इति सूचयितुम् उत्तरदिवस इत्युक्तम् । तथाहि, यदि प्रत्यक्षं वर्तमानमात्रग्राहि तर्हि 'नेह नाना' इति वाक्यस्य अभेदोऽर्थ इत्यध्यवसायहेतोः प्रत्यक्षस्यापि तथात्वापत्त्या उत्तरदिवसेऽपि तदर्थत्वाध्यवसायो न स्यात् इति सिद्धं कृत्वा आह अत इति ॥

(टिप्पणी) ननु मिथ्यात्वानुमानादिप्रामाण्यप्रत्यक्षमेव पूर्वोक्तिमादाय दूषणसम्भवं को दोषः स्यादित्यत आपादने सिद्धेऽत उत्तरदिवस इत्यनर्थकमित्याशङ्कयाह **प्रत्यक्षस्येति** ॥ तथापि क्वोत्तरदिवस इत्यस्य निवेश इत्यत आह **इति सिद्धमिति** ॥ उत्तरदिवसे । अतोऽध्यवसायानुपपत्तेः । उत्तरदिवसे भेदोऽर्थः स्यादिति मूलार्थोऽनेनोक्तः ।

(टीका) दृश्यत्वानुमानिर्दोषत्वाध्यवसायायोगे अनिष्टमाह—

**(मूलम्) निर्दोषानुमायाः सदोषत्वम् ।**

निर्दोषत्वेनाभ्युपगतानुमायाः प्रत्यक्षेण क्वचित् व्यभिचारदर्शनेन अविश्वसनीयेन निर्दोषत्वाध्यवसायानुपपत्तौ सदोषत्वं स्यात् । अभावाभावे भावनियमात् ।

(टिप्पणी) सदोषनिर्दोषेत्यत्रापि अतःशब्दस्यानुषक्तस्यार्थं दर्शयितुमाह **दृश्यत्वेत्यादिना** ॥ वस्तुत उभयत्र निर्दोषत्वसदोषत्वाभावदभ्युपगमपरतया व्याख्यानम् ।

(टीका) मानसिद्धत्वाद्यनुमानं सदोषमित्यध्यवसायानुपपत्तौ दोषमाह—

**(मूलम्) सदोषानुमायाः निर्दोषत्वम् ।**

सदोषानुमायाः सदोषत्वेनाभ्युपगताया अनुमायाः ।

न केवलं प्रत्यक्षस्याविश्वसनीयत्वाङ्गीकृतौ आगमार्थाव्यवस्था । किन्तु सर्व-व्यवस्थानां प्रत्यक्षमूलत्वेन न काऽपि व्यवस्था सिध्यतीति सर्वव्यवहारोच्छेदः स्यादित्याह—

**(मूलम्) इत्यव्यवस्था।**

उक्तप्रकारसूचनार्थ इतिशब्दः।

**(टिप्पणी)** सत्यत्वानुमानेऽनवस्थाया स्वानिष्टतया पूर्वग्रन्थैकवाक्यतया व्याख्यानायोगात् परानिष्टापादनार्थत्वेन पृथग् व्याख्यातुमाह **न केवलमिति** ॥ सर्वत्राप्रामाण्यशङ्कायां भोजनादिप्रवृत्तिरपि निष्कम्पा न पृथग् व्याख्यातुं शक्या स्यादिति स्वक्रियाव्याघातोऽनेनाभिमत इति भावः। इतिशब्दं व्याचष्टे **उक्तेति** ॥

(टीका) यदुक्तं हेतुस्वरूपासिद्धिरव्याप्तिरिति हेतुविरोध इति तदयुक्तम्। आश्रयासिद्धिसाध्यासिद्धिव्यधिकरणासिद्धीनामपि हेतुविरोधित्वात् इत्यत आह

**(मूलम्) आश्रयसाध्यव्यधिकरणासिद्धयो न दूषणम्।**

आश्रयासिद्धिव्यधिकरणासिद्धी दर्शिते। ततः प्राक् साध्यधर्मस्याप्रसिद्धिः साध्यासिद्धिः। यथा 'इयं भूः शशविषाणोल्लिखिता भूत्वात्' इति।

**(टिप्पणी)** एवमुक्तानुमानदोषैकोदाहरणसौलभ्येन दृश्यत्वानुमाने तानभिधाय यत्प्रसक्तेत्यादिन्यायेन बुद्धिस्थस्याधिक्यनिराकरणस्योत्तरग्रन्थप्रयोजकत्वं च शङ्काया सूचयन्नाह **यदुक्तमिति** ॥ असिद्धीनां प्रमाभावानामित्यर्थः। **दर्शित इति** ॥ आश्रयासिद्धो यथा, व्यधिकरणासिद्धो यथेति हेत्वाभासकथने प्रागित्यर्थः। आश्रयज्ञानमात्रे सति तत्प्रमात्वव्यतिरेकेणानुमित्यभावस्यासिद्धेः, साध्याप्रसिद्धौ व्याप्त्यज्ञाने व्याप्त्यज्ञानरूपासिद्ध्यैवानुमानस्य दुष्टत्वात्। सामान्यव्याप्त्या जीवच्छरीरमित्याद्यनुमानसम्भवात्। आकाशानित्यत्वादिसाधने कृतकत्वादेर्हेत्वसिद्ध्यैव दुष्टत्वात्। पटादौ तत्साधनेन्यर्थविशेषणतयाऽधिकनिग्रहस्थानात् न दोषान्तरासङ्कीर्णदोषता पूर्वोक्तानामिति भावः।

(टीका) कुतो न दूषणमित्याह—

**(मूलम्) अतिप्रसङ्गाभावात्।**

आश्रयासिद्ध्यादीनामदूषणत्वाङ्गीकारे अनिष्टप्रसङ्गाभावात् न दूषणम्।

अतिप्रसङ्गाभावेऽपि कथमदूषणमित्याह—

**(मूलम्) अतिप्रसङ्गेन हि दोषत्वादोषत्वे कल्प्ये ।**

यस्य दोषत्वानङ्गीकारे अनिष्टप्रसङ्गः तस्य दोषत्वम् । यथा स्वरूपासिद्धेः अदोषत्वे ह्रदादेरग्निमत्वप्रसङ्गेन दोषत्वम् । यस्य च अदोषत्वानङ्गीकारे अनिष्टप्रसङ्गः तस्य अदोषत्वम् । यथा व्याप्तेः अदोषत्वानङ्गीकारे साध्यासिद्धिप्रसङ्गेन अदोषत्वम् । एवं दोषत्वादेरतिप्रसङ्गाधीनत्वात् अत्र च तदभावात् न दोषत्वम् । अत्र अदोषत्वोक्तिः दृष्टान्ततया उपयुज्यते । अतिप्रसङ्गशब्देन भावाभावावुपलक्ष्य अन्वयव्यतिरेकोक्तिर्वा ।

इतोऽपि नाश्रयासिद्ध्यादेर्दोषत्वमित्याह—

**(मूलम्) व्याप्तिरेव हि प्रयोजिका ।**

साध्यसिद्धौ हि साधनस्य व्याप्तिरेव प्रयोजिका । न तु सदाश्रयत्वं साध्यप्रसिद्धिः साध्यसाधनयोरेकाधिकरणत्वं वा । व्यतिरेकाभावात् । न हि सत्यां व्याप्तौ दोषान्तरासङ्कीर्णाश्रयासिद्ध्यादिना साध्यासिद्धिर्दृष्टेति । उपलक्षणमेतत् । विवक्षितस्थले सिद्धिश्चेति ज्ञातव्यम् । हेतुस्वरूपासिद्धिरिति ह्युक्तम् । एवकारस्तु सदाश्रयत्वादिव्यावर्तकः । व्याप्तिमत्साधनं हि विवक्षितस्थले विद्यमानं विवक्षितस्थले साध्यं प्रयोजयति ।

(टिप्पणी) नन्वेवकारेण पक्षधर्मताव्यावर्तने ह्रदादावपि वह्न्यनुमित्यापत्तिरित्याशङ्क्याह उपलक्षणमिति ॥ तत्रान्वयव्यतिरेकव्याप्त्योः साधनसाध्याभावनिष्ठयोः ज्ञानेनैव फलानुरोधेन क्वचित् पक्षवृत्तितायाः क्वचिदन्यवृत्तितायाश्च ज्ञानं प्रयोजकमिति भावः । हेतुस्वरूपासिद्धेर्दोषत्वस्य प्रागुक्तत्वात् पक्षवृत्तेश्च सर्वत्रानादरे तद्व्याघातापत्तेः तमेव साधयति व्याप्तिमदिति ॥

(टीका) किमतो यदि व्याप्तिरेव प्रयोजिकेत्यत आह—

**(मूलम्) असत्यपि व्याप्तिरस्त्येव ।**

प्रयोजिका च व्याप्तिः असत्यप्याश्रये साध्यसाधनयोरस्त्येव । 'वन्ध्यासुतो न वक्ता अचेतनत्वात्' इत्यादौ दर्शनात् । अतो नाश्रयासिद्धिर्दूषणमिति ।

एवम् असत्यपि साध्यस्य प्रसिद्धत्वे प्रयोजिका व्याप्तिरस्त्येव 'जीवच्छरीरजातं सात्मकं प्राणादिमत्वात्' इत्यादौ दर्शनात् । अतो न साध्यासिद्धिर्दूषणमिति ।

**(टिप्पणी)** असत्यपीत्येतत् त्रेधा व्याचष्टे **प्रयोजिका चेति** ॥ इतःपरं ग्रन्थः स्पष्ट एव । क्वचित् क्वचिच्चैव विशेषोऽभिधीयते ।

**(टीका)** तथा असत्यपि साध्यसाधनयोरेकाधिकरणत्वे प्रयोजिका व्याप्तिरस्त्येव । चन्द्रोदयादिना समुद्रवृद्ध्याद्यनुमानदर्शनात् । अतो न व्यधिकरणासिद्धिरपि दूषणमिति ।

असदाश्रयस्य हेतोर्व्याप्त्यनङ्गीकारे बाधकं चाऽह—

**(मूलम्) 'असदाश्रयस्य साधकत्वं न' इत्यपि व्याप्तिं विना कथं निवार्यते।**

'असदाश्रयस्य साधकत्वं न' इति ब्रुवंस्तत्र किञ्चित् प्रमाणमाचष्टे न वा । न द्वितीयः । प्रमाणं विना अर्थसिद्धेरभावात् । आद्ये न तावत् प्रत्यक्षमागमो वा तत्रास्ति । अतोऽनुमानमेव वाच्यम् । तत् किमसत् तदाश्रयं हेतुं वा पक्षीकृत्य प्रवर्तते । उभयमप्यसदाश्रयं स्यात् । सतः असद्धर्मत्वानङ्गीकारात् । तत्र प्रष्टव्यं, तस्य व्याप्तिरस्ति न वा इति । नाद्यः सर्वत्रापि तत्प्रसङ्गात् । द्वितीये 'असदाश्रयस्य साधकत्वं न' इति निवारणं न स्यात् । अव्याप्तस्य साधनबाधनानङ्गत्वादिति ।

नन्वसतो निर्धर्मकत्वेन साध्यसाधनाश्रयत्वानुपपत्तेः कथमसदाश्रयो हेतुः साधकः स्यादित्यत आह **असदाश्रयस्येति** ॥ अत्र व्याप्तिरिति तद्वतोः साध्यसाधनयोराश्रयत्वमुपलक्ष्यते । प्रागपिर्हेतुसमुच्चये । अत्रासद्विषयव्यवहारान्तरानुपपत्तिं समुच्चिनोति । अन्यत्समानम् ।

**(टिप्पणी)** व्यवहारान्तरानुपपत्तिमिति ॥ साध्यसाधनाश्रयत्वानुपपत्त्याऽऽश्रयत्वादिव्यवहारानुपपत्तिमित्यर्थः ।

**(टीका)** इतोऽपि न निर्धर्मकत्वेन असतः साध्यसाधनाश्रयत्वाभावो वाच्य इत्याह—

**(मूलम्) असदाश्रयमित्यादिविशेषणत्वसम्भवे कथमव्याप्तिः ।**

'असदाश्रयं साधनं न साधकम्' इति वदता असतः साधनव्यावर्तकतया तद्विशेषणत्वमङ्गीकृतमेव । अन्यथा तथा वक्तुमेवाशक्यत्वात् । एवञ्च असतो विशेषणत्व-

लक्षणधर्मसम्भवे कथं साध्यसाधनधर्माश्रयत्वासम्भवः विशेषहेत्वभावादिति । एवम् असदाश्रयत्वम् आश्रयासिद्धिरिति मतं निराकृतम् ।

(टीका) ये पुनरभावस्य निर्धर्मकत्वात् तदाश्रयत्वम् आश्रयासिद्धिदूषणं ब्रुवते तन्निरासायाह

**(मूलम्) न चात्यन्ताभावोऽपि सर्वधर्मरहितः ।**

किमुत प्रागभावादिः प्रामाणिकप्रतियोगिक इति शेषः । कुतो नेत्यत आह—

**(मूलम्) प्रमेयत्वाद्यनुभवात् ।**

अनुभूयन्ते हि प्रमेयत्वाभिधेयत्वादयः अत्यन्ताभावेऽपि धर्माः । कथम् अन्यथा तस्य सर्वधर्मराहित्यादि जानीयात् । कथं च शिष्यं प्रत्युपदिशेत् । अनुपदिष्टश्च कथमसौ जानीयात् ? इति ।

(टिप्पणी) [1]तत्साध्याप्रसिद्धमिति ॥ विशेषणज्ञानस्याहेतुत्वात् सामान्यव्याप्त्या चानुमानसम्भवान्न साध्यतावच्छेदकप्रकारकप्रमापेक्षेति भावः ।

(टीका) हेत्वन्तरेण अप्रसिद्धसाध्यस्य हेतोः साधकत्वं साधयति—

**(मूलम्) परिशेषार्थापत्तिप्रामाण्याभ्युपगमाच्च ।**

परिशेषस्य अर्थापत्तेश्च प्रामाण्यं तावत् सर्वैरङ्गीकृतम् । तत्साध्यम् अप्रसिद्धमपि दृश्यते । अतो न कुत्रापि साध्याप्रसिद्धेर्दूषणत्वम् ।

इतोऽपि नाप्रसिद्धसाध्यस्य असाधकत्वमित्याह

**(मूलम्) 'विमतं सकर्तृकम्' इत्यत्र सर्वज्ञत्वस्य पक्षधर्मताबलेन सिद्ध्यङ्गीकारात् ।**

'भूभूधरादिकं सकर्तृकं कार्यत्वात् घटवत्' इत्यनुमानेन परैः ईश्वरे सर्वज्ञत्वसिद्धिरङ्गीक्रियते ।

---

१. अस्य वाक्यस्य मूलं नोपलब्धम् ।

(टिप्पणी) इदं मीमांसकं प्रत्युक्तम् । नैयायिकं प्रत्याह **इतोऽपीति** ।

(टीका) यद्यपि कार्यत्वं सकर्तृकत्वमात्रेण व्याप्तं तथापि भूभूधरादिपक्षधर्मताबलेन सर्वज्ञमेव कर्तारं गमयति । उपादानादिविषयज्ञानवत एव कर्तृत्वात् । न च सर्वज्ञत्वं प्रसिद्धम् । अतस्तद्वत् न कुत्रापि अप्रसिद्धसाध्यस्य दूषणत्वमिति । अनेनैव व्यधिकरणत्वेऽपि साधकत्वं चोपपादितं भवति । भूभूधरादिनिष्ठेन कार्यत्वेन हेतुना ईश्वरे सर्वज्ञत्वसिद्ध्यङ्गीकारात् न कुत्रापि साध्यसाधनयोर्व्यधिकरणत्वं दूषणमिति । स एतेनैव अवयवनियमश्च परास्तः । न हि पक्षधर्मताबलेन सर्वज्ञत्वसिद्धाववयवनियमोऽस्ति ।

(टिप्पणी) **अप्रसिद्धसाध्यस्य दूषणत्वमितीति** ॥ पक्षधर्मतावललभ्यसाध्यप्रसिद्धेरिव साध्यतावच्छेदकावच्छिन्नव्यधिकरणस्यापि पक्षे साध्यसाधकत्वमविरुद्धम् । तत्र कार्यत्वहेतोः पक्षे सर्वज्ञजन्यत्वं येनैव व्यधिकरणहेतोरपि साध्यस्य पक्षे सत्त्वं विनाऽनुपपत्तिसाम्यादिति भावः ।

(टीका) नन्वप्रसिद्धसाध्ययोः परिशेषार्थापत्त्योः प्रामाण्याभ्युपगमेऽपि किमायातमप्रसिद्धसाध्यस्यानुमानस्य साधकत्वे इत्यत आह—

**(मूलम्) परिशेषोऽर्थापत्तिरनुमानमित्यविशेषः ।**

अप्रसिद्धसाध्यस्य परिशेषादेः साधकत्वे अनुमानस्यैव तदुक्तं स्यात् । परिशेषादिरनुमानमित्यनतिभिन्नार्थत्वात् ।

तत्कुत इत्यत आह—

**(मूलम्) उपपत्तिमात्रत्वात् ।**

इहोपपत्तिरन्यथानुपपत्तिर्ज्ञातव्या ।

(टिप्पणी) उपपत्तित्वस्य लिङ्गत्वस्य परं प्रत्यसिद्धत्वादाह **इहोपपत्तिरितीति** ॥

(टीका) परिशेषार्थापत्त्योः अन्यथानुपपत्तित्वेऽपि कुतोऽनुमानत्वमित्यत आह—

**(मूलम्) उपपत्तेश्च व्याप्त्यपेक्षा सर्वथा अङ्गीकार्येत्याग्रहमात्रेण भेदः ।**

(टीका) अन्यथानुपपत्तिर्हि केनचित् विना कस्यचिदसम्भवः । असम्भवश्च न तावद् अनुत्पत्तिः । बहिर्भावादिनापि गृहाभावादेरजन्यत्वात् । अतोऽनवस्थानमेवा-सम्भव इति वाच्यम् । तस्य च व्याप्त्यपेक्षा सर्वथा अङ्गीकार्या । केनचिद्विना कस्यचिदनवस्थानं हि तयोर्व्याप्तिं विना नोपपद्यते । व्याप्त्यपेक्षया अर्थावगमक-मनुमानमिति चोक्तम् । एवमपि परिशेषादेरनुमानत्वानङ्गीकारे धूमोऽप्यन्यथानुपपत्त्या अग्निं गमयन् नानुमानं स्यात् । अतो दुर्दर्शनाभ्यासविशेषविजृम्भिताग्रहमात्रेण अनुमानात् अर्थापत्त्यादेर्भेदो वादिभिरङ्गीक्रियत इति ।

(टिप्पणी) व्याप्तिं विना नोपपद्यत इति । तदवस्थानप्रयुक्तावस्थानं विनेत्यर्थः ।

(टीका) प्रसङ्गात् उपमानस्याप्यनुमानत्वं प्रागुक्तं साधयितुमाह—

**(मूलम्) उपमानस्यापि ।**

अपिपदेन 'आग्रहमात्रेण भेदः' इत्यनुकृष्यते । कुत इत्यत आह—

**(मूलम्) व्याप्तिरूपत्वात् ।**

व्याप्तिसापेक्षमर्थगमकं ह्यनुमानम् । उपमानस्यापि व्याप्तिसापेक्षत्वात् नानुमानात् भेदः । कथमुपमाने व्याप्तिरित्यतस्तामुपपादयति—

**(मूलम्) न हि स्वसदृशेनासदृशं कचित् दृष्टम् ।**

'यो यद्गतसादृश्यप्रतियोगी स तेन सदृशः' इति हि व्याप्तिरुपमाने विवक्षिता । 'न हि यत् येन सदृशं तत् तेन असदृशं क्वापि दृष्टम्' येनेयं व्याप्तिरनुपपन्ना स्यादिति मीमांसकोपमानस्य व्याप्तिरुपपादिता भवति । नैयायिकोपमानेऽपि 'न हि योऽगोत्वे सति गोसदृशः असौ गवयशब्दवाच्यात् अन्यो दृष्टः' इत्यादिरूपेण व्याप्तिरुपपादनीया ।

(टिप्पणी) उपमानादेरनुमानत्वसाधनस्यासङ्गतिमाशङ्क्यार्थापत्त्युपमे इत्यादिनाऽर्थापत्तेरुक्तस्यान्त-र्भावस्य साधके उपपत्तेश्चेत्यादिनोक्ते उपमानाद्यन्तर्भावसाधकस्य स्मृतस्योपेक्षानर्हत्वात् कथनमित्याह प्रसङ्गादिति ॥ न हि योऽगोत्वे सतीति ॥ अगोत्वे सति गोसदृशत्वं गवयशब्दवाच्यत्वं

नाऽनुपपन्नमन्यत्रादृष्टत्वात् । अतो गवयशब्दवाच्यस्थितिप्रयुक्तस्थितिकम् अगोत्वे सतीत्यादिकं ाघवतर्कसहकारेण पक्षे गवयत्वप्रवृत्तिनिमित्तकशब्दवाच्यत्वमपि साधयति । सर्वज्ञैकजन्यत्वमिव ार्यत्वमिति भावः । आदिपदेन सामान्यव्याप्तिसङ्ग्रहः ।

*अभावप्रमाणपरीक्षा*

(टीका) अभावप्रमाणस्यापि अनुमानेऽन्तर्भावमुपपादयति

**(मूलम्) योग्यानुपलब्धेश्च लिङ्गत्वम् ।**

भावानुपलब्धिरभावप्रमाणमङ्गीक्रियते। सापि अर्थे लिङ्गमेव। न तु पृथक्प्रमाणम्। ःतः। न ह्यनुपलब्धिमात्रमभावगमकमङ्गीक्रियते। किन्तु उपलब्धियोग्यस्यानुपलब्धिः।

तथापि कुतोऽनुमानत्वमित्यत आह—

**(मूलम्) अविशेषात् ।**

अनुपलब्धिमभावप्रमाणमङ्गीकुर्वता योग्यस्यानुपलब्धिरिति कस्मादुच्यते । अनु- लब्धिमात्रस्य अभावव्यभिचारादिति चेत्। तत् किं योग्यानुपलब्धिरभावाव्यभिचारिणी। ाढमिति चेत् हन्त तर्हि व्याप्तिसापेक्षा अर्थं गमयतीत्यङ्गीकृतं स्यात् । तथा च सिद्धानुमानादविशेषादनुमानमेवेति।

(टिप्पणी) क्लृप्तप्रमाणाभावेन चक्षुरादिनैव सम्बद्धस्य घटादेर्ग्रहणाभ्युपगमात् । अभावानुपलब्धेः णापि प्रमाणत्वं नाभ्युपगतमिति तदन्तर्भाव उपपादनीय इत्यभिप्रायेणाह **भावानुपलब्धिरिति** ॥ **पलब्धियोग्यस्येति** ॥ आदरविशेषविषयास्मरणस्येत्यर्थः । **अनुपलब्धिमात्रस्येति** ॥ आदरविशेषा- शेषितस्य अस्मरणस्येत्यर्थः ।

(टीका) किञ्चानुपलब्धेरभावगमकत्वे अभावत्वाविशेषात् अनुपलब्ध्यन्तरापेक्षे- ानवस्था स्यादित्याह

**(मूलम्) अविशेषात् ।**

अस्मत्पक्षे स्वप्रकाशसाक्षिसिद्धत्वाददोषः।

**(टिप्पणी)** शङ्कान्तरनिरासार्थत्वेन ग्रन्थस्यावृत्तिं सूचयितुमाह **किञ्चेति ॥** शङ्कान्तरमप्यनेन ग्रन्थेन प्रतिक्षिप्यत इत्यर्थः । का शङ्केत्यतस्तामाह **अनुपलब्धेरिति ॥** ज्ञानस्यास्मरणस्याभावबोधकत्वात् स्मरणस्यातीन्द्रियतया तदभावस्यायोग्यत्वेन स्वरूपसदनुपलब्धिग्राह्यत्वोपपत्तेरयोग्याभावत्वाविशेषेण प्राङ् नास्तितास्थलीयाभाववत् ज्ञातेन स्मरणोपलम्भाभावेन ग्रहस्य वाच्यत्वात् । उपलम्भाभावपरम्परया ग्रहार्थमुपलम्भाभावज्ञानपरम्परापेक्षणेऽनवस्थापत्त्या स्वरूपसत्स्मरणाभावस्य ग्राहकत्वं वाच्यमिति न प्रसिद्धानुमानाविशेष इति स्वमतदार्ढ्याभिमानेन भाट्टशङ्केत्याशयः । शङ्कानिरासार्थत्वेन ग्रन्थमवतारयति **इत्याहेति ॥** इत्याशङ्कायामाहेत्यर्थः । अनवस्थापत्त्यभावेन ज्ञातस्यैव स्मरणाभावस्य ग्राहकत्वात् प्रसिद्धानुमानविशेषोऽपरिहार्य इति मूलार्थः । कथमनवस्थापरिहार इत्यत आह **अस्मत्पक्ष इति ॥** शङ्कानिरासार्थत्वेन प्रकृतसङ्गत्यर्थग्रन्थस्य सोपपत्तिकत्वाच्च । अन्यथाव्याख्याने तु कथं प्रकृतसङ्गतिः कथं च ग्रन्थस्य सोपपत्तित्वादिकमिति न विरोधः विद्यः ।

**(टीका) न च वाच्यमनुपलब्धिरज्ञातैवार्थं बोधयतीति । तथा सत्यनुपलब्धित्वाविशेषात् सुषुप्त्यादावपि बोधयेदित्याह—**

**(मूलम्) अविशेषात् ।**

**न च चक्षुरादिवदुपपत्तिः । तस्य सम्प्रयोगादिविशेषापेक्षत्वात् । अनुपलब्धेस्तु तदभावादित्याह—**

**(मूलम्) अविशेषात् ।**

**(टिप्पणी)** ननु भवत्स्मरणविशेषस्याभावविशेषेण सह व्याप्तिः, तज्ज्ञाने चानवस्थापरिहारः । तथापि स्वरूपमात्रमित्यादिभट्टोक्तौ तदैव प्रतिपद्यत इत्यनेन ज्ञानानपेक्षोक्तेः कथमविशेष इत्याशङ्कानिरासार्थत्वेनापि ग्रन्थं व्याख्यातुमाह **न च वाच्यमिति ॥ सुषुप्त्यादाविति ॥** यद्यपि प्रतियोग्युपस्थितेर्जनकत्वेन तदभावात् ग्रहाभावे सपक्षसमानधर्मेण व्याप्तिसन्देह एवेति न तदाऽभावज्ञानापादनसम्भवः । विपक्षे बाधकतया ज्ञानानुपपत्तिश्च वाच्या । तथाप्यतद्गुणसंविज्ञानबहुव्रीहिणा सादृश्येन वा प्रणिधानाख्यज्ञानाभावस्तत्वात्राभिप्रेतः । एवं च स्वरूपसतो बोधकत्वे ध्यानमनुपपन्नमिति भावः। स्वरूपसतोऽस्मरणस्य बोधकत्वेऽपि ध्यानापेक्षा तु चक्षुरादेरिव मनोऽवधानापेक्षेति शङ्कानिरासार्थत्वेनापि ग्रन्थं व्याख्यातुमाह **न च चक्षुरादिवदिति ॥ संयोगादिविशेष**

ति ॥ समनस्केन्द्रियसंयोग इत्यर्थः । **अनुपलब्धेरिति** ॥ सन्निकृष्टाधिकरणाभावग्राहकानुपलब्धौ स्वरूप-
न्त्या ग्राहिकाया ध्यानापेक्षाभावस्य तथापि सम्मतेः स्वरूपसदनुपलब्धित्वाविशेषेणास्मरणेऽपि न
यानापेक्षा स्यादित्याशयः ।

**(टीका) त्रिविधो विरोध इत्यादिनोक्तस्योपयोगमाह—**

**(मूलम्) उक्तदोषेष्वेवाशेषानुमानदोषाणामन्तर्भावः ।**

**ये प्रतिज्ञाविरोधादयो दोषा उक्ताः तेष्वेव अशेषानुमानदोषाणां हेत्वाभासादीना-न्तर्भावः । अतो नोक्तदोषातिरेक इति । तत्र प्रबलप्रमाणविरोधः कालातीतः । समबलेन त्वन्तरेण विरोधः सन्देहतो व्याप्यत्वासिद्धिः सत्प्रतिपक्षश्चेत्युक्तम् । तेनैव हेतुना चेत् करणसमः । असिद्धिः स्वरूपासिद्धिः । व्यर्थविशेषणासिद्ध्यादेराधिक्ये अन्तर्भावः ।**

**(टिप्पणी)** आश्रयासिद्ध्याद्याधिक्यनिराकरणप्रसङ्गेन प्रकृतस्योपमानाद्यन्तर्भावसाधनस्य समाप्तौ कृतविरोधाधिक्यनिराकरणेन सिद्धस्य त्रैविध्यस्योक्तेः प्रयोजनाभिधानार्थत्वेनोत्तरग्रन्थं व्याख्यातुमाह त्रैविध **इत्यादिना** ॥ **अन्तर्भाव इत्यादिना** ॥ अन्तर्भाव इति प्रतिज्ञादिपदस्योपलक्षणत्वेन ाध्यादिलक्षणराहित्यस्यैव प्रतिज्ञाविरोधादिसामान्यलक्षणत्वमित्येवमनेन साध्येत्यादि ग्रन्थे उक्ततया वार्थानुमानदोषाणामप्यन्तर्भाव इति भावः । **आधिक्यादीति** ॥ तथा च स पुरुषदोष इति भावः । तुदोषत्वेऽपि अव्याप्यावन्तर्भाव आदिशब्देनोक्तः ।

**(टीका) व्याप्यत्वासिद्धविरुद्धानैकान्तिकानध्यवसितानामव्याप्तौ । आद्यस्य ाध्यसम्बन्धाभावात् । उत्तरयोस्तु विपक्षवृत्तित्वेन साध्यव्यभिचारात् । अनध्यव-सितस्यापि पक्ष एव वर्तमानत्वेन व्याप्तेरग्रहणात् । व्यतिरेकव्याप्तिस्तत्र गृह्यतामिति चेन्न । पक्षविपक्षाभावे सपक्षमात्रभावे वा तदयोगात् । सपक्षविपक्षभावे च अन्वयस्यैव थमप्राप्तत्वेन सत्यपि सपक्षे तदनुपलब्धौ व्याप्त्यनिश्चयात् । सपक्षैकदेशवृत्त्य-वयव्यतिरेकिवत् अस्य व्याप्तिः किं न गृह्यत इति चेन्न । सपक्षैकदेशेऽपि अवृत्त्या किमत्र याप्तिरेव नास्ति उत सपक्षैकदेशवृत्तिवत् अस्ति व्याप्तिः इति सन्देहावस्कन्दनात् ।**

**(टिप्पणी) सम्बन्धेति** ॥ स्वीयसम्बन्ध इत्यर्थः । **व्यभिचारादिति** ॥ तन्निश्चयादित्यर्थः । **सपक्षेति** ॥ सर्वमभिधेयं मेयत्वादित्यादावित्यर्थः । **सपक्षविपक्षभाव इति** ॥ शब्दो नित्यः आकाश-विशेषगुणत्वादित्यादावित्यर्थः । **तदनुपलब्धाविति** ॥ साध्यसाधनान्वयानुपलब्धावित्यर्थः । नन्वाकाशादौ सपक्षैकदेशे तदनुपलम्भेऽपि सपक्षैकदेशवृत्त्यन्वयव्यतिरेकिवदस्य व्याप्तिर्भविष्यतीति कथं न व्याप्तिग्रह इति शङ्कते **सपक्षैकदेशवृत्तीति** ॥ दृष्टान्ते हेतोरपि सपक्षैकदेशे सत्त्वात् अनुकूलतर्कसनाथो हेतुः इति ज्ञानाद् युक्तो व्याप्तिग्रहः । अत्र तु अनुकूलतर्काभावेन हेतोश्च सपक्षे ग्रहाभावे सपक्षसमानधर्मेण व्याप्तिसन्देह एवेति व्याप्त्यसिद्धिरिति परिहरति **न सपक्षैकदेश इति** ॥

**(टीका) व्यतिरेकतोऽनैकान्तिक एवानध्यवसित इत्येके । तदसत् । सपक्ष-विपक्षरहिते तदयोगात् । असिद्धविरुद्धयोरपि तत्त्वप्रसङ्गाच्चेति ।**

**(टिप्पणी) सपक्षविपक्षरहितेति** ॥ सर्वमनित्यमित्यादौ साध्यव्यतिरेकानिश्चयादिति भावः ।

**(टीका) दृष्टान्तविरोध एव उदाहरणाभासानामन्तर्भावः । आश्रयहीनत्वं पूर्ववत् अदूषणम् । अव्याप्त्यभिधानं न्यूने । विपरीतव्याप्त्यभिधानम् असङ्गतौ । तर्कपराहते-रसिद्ध्यादाविति ।**

**(टिप्पणी) दृष्टान्तेति** ॥ अत्रापि दृष्टान्तपदस्योपलक्षणत्वोक्तेरित्यादि द्रष्टव्यम् । **तर्केति** ॥ तर्कस्य अनुमानतया क्वचित्प्रमाणविरोध आदिपदार्थः । असिद्धिश्च व्याप्त्यज्ञानम् अव्याप्त्यादिव्याप्त्यज्ञान इत्यर्थः ।

**(टीका) तथापि साध्याविशिष्टत्वं हेतोर्दूषणान्तरमस्तीत्यत आह—**

**(मूलम्) साध्याविशिष्टोऽसिद्धः ।**

**(टीका) 'पर्वतोऽग्निमान् अग्निमत्वात्' इति साध्याविशिष्टो हेतुरसिद्ध एवान्त-र्भवति । साध्यमेव ह्यत्र हेतुः । न हि साध्यं सिद्धम् । व्याहतेरेव । न च वाच्यं साध्याविशिष्टो हेतुरव्याप्तौ किं नान्तर्भवति व्याप्तेरुभयधर्मत्वेन स्वेनैव स्वस्य व्याप्त्ययोगादिति । विवक्षितस्थले लिङ्गदर्शनानन्तरं हि व्याप्तिस्मृतिः स्यात् । तत्र साध्यभूतलिङ्गस्य अदर्शनेनैव अनुमानदोषसिद्धौ व्याप्तिचिन्ताया एवानुदयात् ।**

आश्रयासिद्धिरदूषणमित्युक्तम् । तत् किं सर्वापि । न । धर्म्यभावादिनिमित्तैव । यदभाषत असत्यपि व्याप्तिरस्तीत्यादि ।

**(टिप्पणी) व्याप्तिरिति** ॥ स्वस्थितिप्रयुक्तस्थितिकत्वस्यात्माश्रयेण स्वस्मिन्नसम्भवादिति भावः । न्वेवमज्ञानरूपासिद्धेरुपजीव्यव्याप्त्यभावेनान्यथासिद्धावपि व्याप्त्यभाव एव साध्याविशेष्योऽन्तर्भवत्वि-त्याशङ्क्याह **विवक्षितेति** ॥ वस्तुतो व्याप्तिमत्यपि साध्यवत् सन्दिग्धे साध्यभिन्ने साधनेऽपि साध्याविशेषो दोषः । तत्र च व्याप्तिज्ञानार्थमुपजीव्यप्राथमिकोचितदेशवृत्तिनिश्चयस्यैवासम्भवेनानुमानस्या-ज्ञानरूपासिद्धिदुष्टतया न व्याप्त्यज्ञानस्य दोषत्वावसरः । तन्न्यायेन प्रकृतेऽपि न व्याप्त्यभावो दोष इति भावः । सिद्धसाधनस्थले पक्षताविरहेणाश्रयासिद्धिसम्भवमुत्तरग्रन्थावतरणार्थमभिप्रेत्य पूर्वोक्ताश्रयासिद्धि-दोषत्वनिरासस्य विशेषविषयतां वक्तुमाह **आश्रयासिद्धिरिति** ॥ असत्यपीत्यादिग्रन्थस्वारस्यादसदा-श्रयत्वनिमित्ताश्रयासिद्धिदोषत्वमात्रनिराकरणे तस्य तात्पर्यमित्यर्थः ।

(टीका) तर्हि सिद्धसाधकत्वं दोषान्तरमस्तीत्यत आह—

**(मूलम्) सिद्धसाधकोऽसङ्गतः ।**

बुभुत्सितसाधनस्यैव सङ्गतत्वात् सिद्धसाधकोऽसङ्गतो भवति ।

**(टिप्पणी)** एवं तर्हि पक्षताविरहप्रयुक्तमाश्रयासिद्धत्वं सिद्धसाधनेऽस्तीति शङ्कानिरासार्थत्वेनोत्तर-ग्रन्थमवतारयति **तर्हीति** ॥ **बुभुत्सितेति** ॥ बोधसत्त्वे च सिद्धे बोधे तदिच्छात्मकबुभुत्साविरह इति भावः ।

*भाट्टोक्तप्रमाणलक्षणनिराकरणम्*

**(टीका) एवं प्रमाणतदाभासस्वरूपं निरूप्य स्वोक्तलक्षणदृढीकरणाय वाद्य-न्तरोक्तलक्षणानि निराकुर्वन् भाट्टानां लक्षणं तावन्निराचष्टे—**

**(मूलम्) न प्रमासाधनं प्रमाणम् ।**

प्रमेयगतं ज्ञातताऽपरपर्यायं प्राकट्यं प्रमेत्युच्यते । तत्साधनं प्रमाणम् । अत्र प्रमा-ग्रहणं कुठारादिव्यावृत्त्यर्थम् । साधनग्रहणं प्रमायामतिव्याप्तिं प्रत्यक्षादावसम्भवं च व्यवच्छिनत्ति । न चेन्द्रियसन्निकर्षादावव्याप्तिः । ज्ञानस्यैव मुख्यतः प्रामाण्यात् ।

**(टिप्पणी)** परकीयप्रमाणलक्षणनिरासस्याप्रतिज्ञाततया तदर्थोत्तरग्रन्थासङ्गतिमाशङ्क्याह **एवमिति** ॥ प्रवक्ष्यामीत्युपसर्गसङ्गृहीतावशिष्टपरीक्षास्वलक्षणयुक्तताचिन्ता परलक्षणनिरासकरणरूपमित्यभिप्रेतमतो वा द्वितीयव्याख्याने स्वलक्षणे प्रकृष्टत्वोक्त्याऽन्यलक्षणानामपकृष्टत्वसूचनाद्वा न परलक्षणदूषणासङ्गतिरित्याशयः । ज्ञानलक्षणं वैतत्साधनलक्षणं वेति विकल्पावुत्तरग्रन्थयोजनार्थमभिप्रेत्य प्रथमपक्षे तावल्लक्षणार्थमाह **प्रमेयेति** ॥ **प्रमायामिति** ॥ ज्ञातताव्याप्यायामित्यर्थः । **मुख्यत इति** ॥ साक्षादर्थविषयत्वादित्यर्थः ।

**(टीका) न च भ्रमादावतिव्याप्तिः । अर्थानुसारिणो ज्ञातताविशेषस्यैव प्रमात्वात् । भ्रमादिना च तदजननात् । इदमित्याद्याकारेण जननेऽपि तत्र प्रामाण्याभ्युपगमात् । ज्ञाते पुनर्ज्ञातत्तानुदयेन न स्मृतिसाधने(स्मृताव)तिव्याप्तिः । साधनग्रहणेनैव प्रमात्रादिव्युदास इति ।**

**(टिप्पणी) अर्थानुसारिण इति** ॥ प्रकारसमानाधिकरणस्येत्यर्थः । **स्मृतिसाधनेति** ॥ स्मृतिरूपे व्यवहारसाधनेऽतिव्याप्तिपरिहारायेत्युक्तमित्यर्थः । साधनेति तन्मात्रनिष्ठकार्यतानिरूपितकारणतावच्छेदकाश्रयत्वस्य साधनपदार्थत्वादिति भावः ।

**(टीका) तदेतल्लक्षणं नोपपद्यते । कुत इत्यत आह—**

**(मूलम्) ज्ञानव्यतिरिक्तप्रमायां प्रमाणाभावात् ।**

**प्रमेयाश्रयायाः प्रमाया एवाभावेन असम्भवित्वादयुक्तमिदं लक्षणम् । न हि प्रमेयनिष्ठप्रमायां प्रमाणमस्ति । 'ज्ञातो घटः, प्रकटो घटः' इति प्रमेयधर्मतया प्रमा प्रत्यक्षत एवानुभूयत इत्यत उक्तम् ज्ञानव्यतिरिक्तेति ॥ 'ज्ञातो घटः' इत्यादौ हि ज्ञानमेव प्रमेयविशेषणतया दृश्यते । न तु ततोऽन्या प्रमेति । न च आत्मधर्मस्य ज्ञानस्य प्रमेयविशेषणतानुपपत्तिः । 'इष्टो घटः' इत्यादावपि तदभावापातात् । विषयविषयिभावात् तत्रोपपत्तिरिति चेत् समं प्रकृतेऽपि ।**

**(टिप्पणी)** एवमर्थमुक्त्वा प्रथमकल्पनिरासे ग्रन्थं योजयति **तदेतदिति** ॥ निरासोपपादनार्थत्वेनोत्तरग्रन्थमवतारयति **कुत इति** ॥

**(टीका) न च वाच्यं ज्ञातताभावे ज्ञानस्य विषयनियम एवायुक्तः यदाकारं यत् विज्ञानं तत् तद्विषयमिति हि बौद्धानामेव शोभत इति । तथा सति इच्छादीनामपि**

वेषयनियमाभावप्रसङ्गादिति । कारणविषयतया तत्रोपपत्तिरिति चेत् तुल्यम् । अन्यथा नैव ज्ञानेन अत्रैव ज्ञातता जायत इति नियमो न स्यादिति ।

अन्यस्त्वाह, प्रमासाधनत्वमेव लक्षणम् । प्रमा च नार्थप्राकट्यम् । किन्तु अज्ञातार्थस्य यथार्थज्ञानम् । अतो नोक्तदूषणमित्यत आह—

**(मूलम्) न चाज्ञातपरिच्छित्तिरेव प्रमेत्यत्र किञ्चिन्मानम् ।**

परिच्छित्तिरिति यथार्थज्ञानमुच्यते । अज्ञातेति स्मृतिसाधनव्युदासार्थम् । यथार्थग्रहणं भ्रमादिसाधनव्युदासार्थम् ।

अस्तु नाम अज्ञातपरिच्छित्तिः प्रमा तत्साधनं च प्रमाणम् । तथापि न लक्षणमेतत् युक्तम् ज्ञातपरिच्छित्तेरपि प्रमात्वेन तत्साधनस्य च प्रमाणत्वेन तत्राव्याप्तेः । न हि ज्ञातपरिच्छित्त्यादेः अमात्वादौ प्रमाणमस्ति ।

ज्ञातपरिच्छित्त्यादेः प्रमात्वादौ स्मृत्यादेरपि तत् स्यादित्यत आह—

**(मूलम्) याथार्थ्यमेव प्रामाण्यमित्यङ्गीकारात् ।**

स्मृत्यादेः प्रमात्वादिप्रसङ्गो नानिष्टः । याथार्थ्यमेव प्रामाण्यमित्यङ्गीकुर्वद्भिः स्मृत्यादिकस्य प्रमात्वादेरङ्गीकृतत्वादिति ।

(टिप्पणी) द्वितीयकल्पे लक्षणार्थं कथयन्नुत्तरग्रन्थं तन्निरासार्थत्वेनावतारयति अन्यस्त्वित्यादिना ।

*प्राभाकरमतनिराकरणम्*

(टीका) प्राभाकराणां लक्षणं दूषयति

**(मूलम्) न चानुभूतिरेव प्रमाणम् ।**

स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिः । स्मृतिश्च संस्कारमात्रजं ज्ञानम् । न च अयथार्थानुभवे अतिव्याप्तिः । 'प्रमाणं स्मृतिश्च नः प्रत्ययः' इत्यङ्गीकृतत्वेन तत्स्वरूपस्यैवाभ्युपगमात् । व्यवहारस्तु ग्रहणस्मरणयोरेव ग्रहणयोरेव वा स्वरूपतो विषयतश्च विवेकाग्रहमात्रेण भवतीति ।

एतदपि लक्षणमयुक्तम् । कुत इत्यत आह—

**(मूलम्) स्मृत्यादावव्याप्तेः ।**

आदिपदेन वेदाद्यनुप्रमाणसङ्ग्रहः ।

(टिप्पणी) प्राभाकरलक्षणमपि केवलस्यैव केवलानुप्रमाणसाधारणं वा, उभयथाऽप्यव्याप्तिरित्याशयेनाह **एतदपीति** ॥

(टीका) स्मृत्यादेः सति प्रामाण्ये भवेदव्याप्तिदोषः । तदेव कुत इत्यत आह—

**(मूलम्) वेदादिप्रामाण्यप्रसिद्धेश्च ।**

अत्र आदिपदेन स्मृत्यादिग्रहणम् । प्रसिद्धिर्लौकिकी । न हि सा निर्मूला याथार्थ्यहेतुसिद्धा । श्रौती च अस्तीत्याह—

**(मूलम्) स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।**
**प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः ॥ इति श्रुतेश्च ।**

(टीका) नन्विदं शान्तिके कर्मणि वेतालोत्थानमिव । यावता स्मृत्यादिप्रामाण्यसिद्ध्यर्थं उदाहृतश्रुतौ ऐतिह्यं चतुर्थप्रमाणमापतितमित्यत आह

**(मूलम्) ऐतिह्यमागमभेदः ।**

पुरावृत्तोक्तिरैतिह्यम् । तत् यथार्थमागम एवान्तर्भवति । ऐतिह्यमित्यशेषागमोपलक्षणम् । स्मृतिपदश्च अशेषकेवलप्रमाणस्य । तथाच केवलमेकम् अनुप्रमाणं प्रत्यक्षादिभेदेन त्रिविधमिति चतुष्टयमित्युक्तं भवति ।

(टिप्पणी) ऐतिह्यान्तर्भावकथनस्य प्रकरणासङ्गतिमाशङ्क्य प्रकृतोपयोगमाह **नन्विति** ॥ नन्वेवं त्वदुक्तप्रमाणविभागोऽपि श्रुतिविरुद्ध इत्याशङ्क्याह **ऐतिह्यमित्यशेषेति** ॥

*नैयायिकोक्तलक्षणनिराकरणम्*

(टीका) नैयायिकलक्षणं निराकरोति—

**(मूलम्) न च सम्यगनुभवसाधनं प्रमाणम् ।**

सम्यग्ग्रहणं संशयविपर्ययापोहनम्। अनुभव इति कुठारादेर्निरासः। ज्ञानग्रहणे स्मृतौ प्रसङ्गादनुभवग्रहणम्। साधनग्रहणं फलात् भेदज्ञापनार्थं प्रमातृप्रमेयव्यवच्छेदार्थं चेति।

एतदपि लक्षणं नोपपद्यते। कस्मादित्यत आह—

**(मूलम्) ईश्वरज्ञानादावव्याप्तेः।**

नैयायिकैः खल्वीश्वरस्यापि प्रामाण्यमङ्गीकृतम्। अतः तस्मिन्नीश्वरे तज्ज्ञाने अस्मदादिज्ञाने चाव्याप्तत्वादिदमलक्षणम्। न हीश्वरादेः सम्यगनुभवसाधनत्वमस्ति। ईश्वरातिरिक्तप्रमाणलक्षणं तत् इत्यङ्गीकारेऽपि तज्ज्ञानादावव्याप्तिरपरिहार्यैवेति ज्ञापनाय स्वरूपेण तज्ज्ञानग्रहणम्।

(टिप्पणी) ईश्वरस्यापीति ॥ मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति गौतमसूत्रादिति भावः। विरोधं समुच्चिनोतीति ॥ प्रत्यक्षत्वस्य ज्ञाननिष्ठतया तस्यैव प्रत्यक्षपदेनोक्तेरिति भावः।

(टीका) ज्ञानं प्रमाणमेव न भवति। किं तु तत्फलमेव। अतः कथं तत्र अव्याप्तिर्दूषणमित्यत आह—

**(मूलम्) अप्रामाण्ये प्रमाणाभावाच्च।**

ज्ञानस्येति शेषः। चशब्देन 'स्मृतिः प्रत्यक्षमैतिह्यम्' इत्यादि प्रमाणविरोधं समुच्चिनोति। साक्षिज्ञानेऽप्यव्याप्तिं वक्तुं तस्य प्रामाण्यानङ्गीकारे बाधकं तावदाह—

**(मूलम्) प्रामाण्यज्ञाने च।**

प्रमाणभावादिति चशब्देन अनुकृष्यते। तादर्थ्ये सप्तमी। साक्षिणोऽप्रामाण्ये सर्वप्रमाणानां प्रामाण्यमप्रामाणिकं स्यात्। प्रामाण्यज्ञानार्थं प्रमाणान्तराभावात्। प्रामाण्यज्ञानार्थमपि सम्यगनुभवसाधनमेव किञ्चित् अङ्गीक्रियते। अतो न तस्य अप्रामाणिकत्वापात इत्यत आह—

**(मूलम्) तत्राप्यङ्गीकारेऽनवस्थितेः।**

यदि प्रामाण्यज्ञानार्थं सम्यगनुभवसाधनं प्रमाणमङ्गीक्रियते तर्हि तत्प्रामाण्यं प्रामाणिकं न वा नेति पक्षे न स्यात्। आद्ये किं स्वेनैव सिद्धम्। प्रमाणान्तरेण वा। नाद्यः, अन्यत्रापि तत्प्रसङ्गात्। द्वितीये तस्यापि प्रामाण्यं प्रमाणान्तरवेद्यमित्यनवस्थितिः स्यात्। तस्मात् साक्षिज्ञानेनैव सर्वप्रमाणप्रामाण्यं ज्ञायत इत्यङ्गीकार्यम्। तस्य च स्वप्रकाशत्वेन स्वप्रामाण्यविषयत्वात् नानवस्था। 'मामहं जानामि' इति आत्मनः स्वप्रकाशत्वदर्शनात्। साक्षिणश्चात्मत्वादिति।

(टिप्पणी) प्रामाण्यस्य ज्ञप्तिपरतस्त्वनिरासः क्वोपयुज्यत इत्यत आह **साक्षिज्ञान इति** ॥ नेति पक्षे न स्यादिति भावः । सत्त्वाभाववद्व्याप्य इति । असत्त्वपरिहाराय प्रमाणावश्यकत्वे ईश्वरज्ञानस्य प्रमाणत्वाभावात् तदादायासत्त्वपरिहारायोगादिति भावः । स्वप्रकाशत्वे मानमाह **मामहमिति** ॥ स्वभिन्नज्ञानप्रयुक्तत्वे एतद्व्यवहारस्योच्यमाने कदाचित् स्वस्मिन् सन्देहादि स्यादिति भावः । नन्वात्मनः स्वप्रकाशत्वे साक्षिणः किमागतमित्याशङ्क्याह **साक्षिणश्चेति** ॥

[1]**वक्ष्यमाणश्चेति** ॥ वक्ष्यमाणात्मात्व्याप्तिवैयधिकरण्यं चानेन परिहृतम् ।

(टीका) एवं स्वप्रकाशात्मरूपसाक्षिज्ञानस्य प्रमाणप्रामाण्यज्ञानार्थमङ्गीकारे किं स्यादित्यत आह—

**(मूलम्) स्वप्रकाशात्माङ्गीकारे तत्राव्याप्तेः ।**

स्वप्रकाशात्म(रूप)भूतसाक्षिज्ञाने प्रमाणे अङ्गीकृते तस्य सम्यगनुभवत्वेन तत्साधनत्वाभावात् तत्राव्याप्तेरयुक्तमेतल्लक्षणमिति।

यथार्थस्मृतावव्याप्तिश्च प्राक् आदिशब्देन सङ्गृहीता । तत्र स्मृतिर्न प्रमाणमिति न वाच्यम्। साधितत्वात्। तदनङ्गीकारे बाधकं चाह—

(टिप्पणी) स्मृतिप्रामाण्यसाधनस्य सङ्गत्यर्थमाह **यथार्थस्मृताविति** ॥

---

१. अस्य वाक्यस्य मूलं नोपलब्धम् । अथवा 'अनुभूतमिति' इति प्रतीकग्रहणं स्याद्वा ।

*स्मृतिप्रामाण्यविचारः*

**(मूलम्) स्मृतेश्च प्रामाण्यानङ्गीकारे अनुभूतं मया इत्यत्र प्रमाणाभावात्।**

**(टीका)** यदि स्मृतिर्न प्रमाणं तर्ह्यनुभूतमप्रामाणिकं स्यात्। 'अनुभूतं मयेदम्' इत्यत्र स्मृतिं विना प्रमाणाभावात्।

सत्यम्, स्मृतिरेवानुभूते प्रमाणम्। किं नाम लिङ्गत्वेनैव। पटुतरो ह्यनुभवः संस्कारं जनयति। स च सदृशदर्शनादिना समुद्बुद्धः स्मृतिमिति। संस्कारजन्या स्मृतिः संस्कारे लिङ्गम्। स च तत्पूर्वानुभवे भविष्यति। अतो नानुभूतस्याप्रामाणिकत्वं नापि लक्षणस्याव्याप्तिः स्मृतेरपि सम्यगनुभवसाधनत्वादित्यत आह—

**(मूलम्) लिङ्गत्वेन प्रामाण्ये कल्पनागौरवम्।**

**(टिप्पणी) अनुभूतं भवतीति** ॥ अनुभवे निष्ठाऽतीतत्वधर्मवैशिष्ट्य इत्यर्थः। स इत्यादौ भासमानस्यातीतत्वस्यानुभवेनासिद्धेः अनुभूतमिति निष्ठार्थे स्मृतिप्रामाण्यस्यावश्यकतेति भावः। **स च तत्पूर्वानुभव इति** ॥ स्वस्य नाशकत्वाद् अतीतावस्थमनुभवमनुमापयिष्यतीत्यर्थः।

**(टीका)** यदि स्मृतेर्लिङ्गत्वेन प्रामाण्यं कल्प्यते तर्हि कल्पनागौरवं स्यात्। साक्षादर्थ एव प्रामाण्यसम्भवेऽपि स्मृतेः संस्कारे लिङ्गत्वम्, तस्यानुभव इत्यप्रामाणिकस्यानेकस्य कल्प्यमानत्वादिति। दोषान्तरं चाह—

**(मूलम्) दृष्टहानिश्च।**

यदि स्मृतेर्लिङ्गत्वेन प्रामाण्यं तर्हि पृथक्प्रमाणतया दृष्टस्यापि प्रत्यक्षादेः लिङ्गत्वमेव स्यात्। तत्रापि प्रत्यक्षादिना कर्मकारकस्यार्थस्यानुमानसम्भवात्। अतः प्रत्यक्षादिवत् स्मृतेरपि साक्षात्प्रामाण्यात् तत्राव्याप्तं परोक्तप्रमाणलक्षणमयुक्तमेवेति यथावस्थितार्थ-विषयत्वमेव लक्षणमुपपन्नमिति।

**(टिप्पणी) साक्षादर्थ इति** ॥ अतीतत्व इत्यर्थः। **तस्यानुभव इति** ॥ अतीतावस्थ इति शेषः। **अनुमानसम्भवादिति** ॥ विमतं सविषयकमित्यादिप्रकारेणेत्यर्थः। न च तत्र साक्षाद् विषयत्वे....बाधका-भावः। अत्र त्वतीतत्वस्यानुपनयो बाधक इति वाच्यम्। इच्छायां स्ववृत्तित्वस्येव (स्मृति)दोषाभावे सति

सामान्यसामग्रीमहिम्नाऽनुपनीतस्यापि तस्य भानादिति भावः । स्मृतिप्रमाणत्वादेरपि परीक्षार्थत्वं दर्शयितुं पूर्वग्रन्थस्य तात्पर्यमुपसंहरति इति **यथावस्थितेति** ॥

**(टीका)** इदमपि लक्षणं न युक्तम् । द्विविध एव हि प्रत्ययः स्मृतिरनुभवश्चेति । तत्रानुभवः सर्वोऽपि प्रमाणमेव । स्मृतिरपि यदि प्रमाणं तदा यथावस्थितविशेषणस्य कृत्याभावादित्यत आह—

**(मूलम्) स्मृतिप्रमाणद्वैविध्यमात्रकल्पने मिथ्याज्ञानादेर्निरासात् अनुभव-विरोधः ।**

स्मृतिश्च प्रमाणं चेति प्रत्ययद्वैविध्यमात्रकल्पनं न युज्यते । तथा सति विपर्यय-संशययोः अपाकरणप्रसङ्गात् । न च तथास्त्विति वाच्यम् । विपर्ययादेरनुभवसिद्धत्वेन तद्विरोधादिति ।

**(टिप्पणी)** उत्तरग्रन्थस्य स्वलक्षणयुक्तत्वाभिधाने तात्पर्यं दर्शयितुं शङ्कामाह **इदमपीति** ॥

**(टीका)** विपर्ययादिविषयोऽनुभव एव नास्ति । किन्तु व्यवहारमात्रमित्यत आह—

**(मूलम्) तदनुभवाभाव इत्युक्ते अनुभवः स्मृतिश्च नास्ति इत्युक्ते किमुत्तरम् ?**

यदि विपर्ययादिविषयोऽनुभवः स्वयं प्रकाशमानोऽपि नास्तीत्युच्यते तर्हि पराभ्यु-पगतम् अनुभवमात्रं स्मृतिमात्रं च न स्यात् । अविशेषात् । तथा च जगदान्ध्यं स्यात् ।

**(टिप्पणी) किन्तु व्यवहारमात्रमिति** ॥ शुक्तिं रजततया जानामीति न पुरोवर्तिज्ञाने रजतत्वप्रका-रकत्वावगाहि विशिष्टज्ञानं येन भ्रमसिद्धिः स्यात् किन्तु पुरोवर्तिज्ञाने रजतत्वप्रकारकत्वासंसर्गाग्रहादयं व्यवहार इत्यर्थः ।

**(टीका)** अथवा विपर्ययाद्यनङ्गीकारे दूषणान्तरमेतत्। यदि शुक्तिकायाम् 'इदं रजतम्' इत्यादिरूपो विपर्ययाद्यनुभवो नास्ति किन्तु पुरोवृत्त्यनुभवे सति रजतस्मृतौ तयोः स्वरूपतो विषयतश्च विवेकाग्रहादेव 'इदं रजतम्' इत्यादिव्यवहार इत्युच्यते, तर्हि पुरोवृत्त्यनुभवो रजतस्मृतिश्च नास्तीति वदामः। ज्ञानपूर्वकत्वात् व्यवहारस्य कथं तदभावेऽसौ स्यादिति चेत्, हन्त तर्हि विशिष्टज्ञानपूर्वकत्वात् विशिष्टव्यवहारस्य कथमसावपि तद्विना स्यात्। स्मृत्यनुभवयोरगृहीतविवेकत्वेन विशिष्टज्ञानसादृश्यात् व्यवहार इति चेत् तर्हि अविवेकाग्रहेण अविशिष्टज्ञानसादृश्यात् तदभावस्याप्यापातः स्यात्। तस्मात् विपर्ययादेर्व्यावर्तनीयस्य सद्भावात् याथार्थ्यमेवोपपन्नं लक्षणमिति।

**(टिप्पणी)** तदनुभवेति मूले तस्य विपर्ययादेरनुभव इति षष्ठीसमासकर्मधारयमङ्गीकृत्य तद्रूपानुभवाभाव इति वा व्याख्येयमित्याह **अथवेति** ॥ **तर्ह्यविवेकेति** ॥ व्यवहारजनकतायां लाघवेन प्रयोजकस्य व्यवहारसमानविषयत्वस्याभावेऽपि यद्यगृहीतभेदत्वरूपविशिष्टज्ञानसादृश्येन व्यवहारजनकता तर्हि अभेदविषयकत्वेन शुक्तिरजतसमूहालम्बनज्ञानसादृश्येन व्यवहाराजनकता स्यादित्यर्थः। अपि च मृद्वृत्त्यां वस्तुतः प्रयोजकाभावेन कर्तुं प्रयोजकाभावेनाजनकतैव स्यादिति भावः। न प्रमासाधनमित्यादिग्रन्थसन्दर्भस्य परीक्षार्थत्वमुपसंहरति **तस्मादिति** ॥ परोक्तलक्षणदुष्टत्वं तच्छब्देन परामृष्टम्। अन्यथा एवकारार्थानुक्तेरुपसंहारन्यूनतापत्तिरिति द्रष्टव्यम्।

**(टीका)** ननु विपर्ययाद्यनुभवाभावे अनुभवस्मृत्योरभावः स्यादित्ययुक्तम्। अपसिद्धान्तप्रमाणबाधासिद्धिदोषादिति चेन्न। तर्कस्य दूषणानुमानत्वात्। तथापि कुतो नापसिद्धान्तादि इत्यत आह

**(मूलम्) स्वसिद्धैः साधनं परसिद्धैर्दूषणम्।**

साधनमेव स्वसिद्धान्तसिद्धन्यायैः कर्तव्यम्। न तु दूषणमपि। तत् परसिद्ध-न्यायैरपि भवति।

**(टिप्पणी)** परीक्षाकरणेन प्रतिज्ञातार्थनिरूपणसमाप्तेः दूषणेऽपसिद्धान्तादिदोषत्वाभाव(दोषाभाव)-कथनस्यासङ्गतिमाशङ्क्य तच्छेषत्वं दर्शयितुं शङ्कामाह **नन्विति** ॥ अतो न दूषण इति मूलाभिप्रायस्तर्क-निरूपण एवोक्तो द्रष्टव्यः।

(टीका) किमतो यद्येवमित्यत आह—

**(मूलम्) अतो न दूषणे अपसिद्धान्तादि ।**

अतः परसिद्धन्यायेन परोक्तस्य दूषणीयत्वात् दूषणानुमाने नापसिद्धान्ताद्युद्भावनीयमिति ।

**स्वपक्षदोषमनुद्धृत्य प्रतिबन्दीग्रहणं मतानुज्ञेत्येके । तदनुपपन्नम् । प्रतिबन्दीग्रहणस्य परोक्तव्यभिचारोद्भावनरूपत्वेन बाधकतर्कोद्भावनरूपेण वा परोक्तदूषणत्वात् । स्वपक्षास्थापनेन प्रवृत्तेर्दोषत्वमिति चेत् तर्हि अप्राप्तकालसाङ्कर्यापातात् ।**

**(टिप्पणी)** मतानुज्ञायाः पृथगन्तर्भावं प्रयोजनविशेषाद् वक्ष्यतीत्यत्र प्रयोजनविशेषं सूचयन् मतानुज्ञान्तर्भावकथनार्थत्वेनोत्तरग्रन्थं व्याख्यातुमाह **स्वपक्षे दोषमित्यादिना** ॥ यथा केनचित् स्वकीयप्रतिबन्दिग्रहणे कृते तामविमोचयित्वा परकीयप्रतिबन्दिरकौशलत्वेन गृह्यते, तथा दूषणेन स्वपक्षस्य निरोधे कृते तदनुद्धारेण अपरपक्षप्रतिरोधः परमतस्य दूषणस्यानुद्धारेणानुज्ञेति व्युत्पत्त्या प्रतीयत इति भावः । **परोक्त इति** ॥ यथा बाध्यबाधकव्यवस्थार्थमुत्तरज्ञानं बाधकमित्युक्ते, उत्तरज्ञानं न बाधकं ज्ञानत्वात् पूर्वज्ञानवदित्यद्वैतिनोक्ते ब्रह्मज्ञानस्यापि तर्हि बाधकत्वं न स्यादिति प्रतिबन्दी ब्रह्मज्ञाने व्यभिचारोद्भावनार्था, ब्रह्मज्ञानं बाधकमित्युक्तिरपि व्याहन्येतेति वा, उक्तानुमानस्य मदुक्तबाधकत्वेनोक्तिर्वा व्याघाताख्यतर्कोद्भावनार्थेत्यर्थः ।

**(टीका) स्वपक्षे दोषमनुद्धृत्य परस्येष्टापादनमित्यन्ये । तदप्यसत् । विशेषणासामर्थ्यात् ।**

**(टिप्पणी) दोषत्वमिति** ॥ प्रमाणाभावेन स्वपक्षासिद्धेरिति भावः । **न हीति** ॥ कथकसम्प्रदायागतक्रमेण स्वपक्षस्थापनं प्राथमिकं तदुल्लङ्घनेनाप्राप्तकालमिति भावः । **असामर्थ्यादिति** ॥ वैयर्थ्यमित्यर्थः । तथा च प्रथमपक्षेऽसङ्गतत्वं द्वितीयेऽप्राप्तकालान्तर्भाव इति मतभेदेनान्तर्भावसूचनं पृथगन्तर्भावकथनप्रयोजनं सूचितमिति द्रष्टव्यम् ।

**(टीका) तस्मात् इष्टापादनमेव मतानुज्ञेति भावेन तत्स्वरूपानुवादेन सिंहावलोकनन्यायेन प्रकृतदूषणानुमानदोषस्य मतानुज्ञाया उक्तान्तर्भावमाह—**

**(मूलम्) इष्टापत्तिः सिद्धसाधनत्वात् असङ्गतमेव ।**

इष्टापादनरूपा मतानुज्ञा असङ्गतावन्तर्भूता । परसिद्धार्थसाधनस्वरूपत्वात् । सिद्धसाधनस्य च असङ्गतत्वमुक्तम् । अनिष्टापादनस्यैव सङ्गतत्वादिति न विरोधादिभ्यो दूषणान्तरमस्तीति । व्याप्त्यभावादीनामन्तर्भावस्तु स्फुटत्वान्नोक्तः ।

सिंहेति ॥ परवृत्त्यासङ्गत्यन्तर्भावनीयप्रदर्शनेनेत्यर्थः । अत्र दूषणानुमाने अनिष्टप्रसञ्जनात्मके तर्के अपसिद्धान्तादीत्यादिशब्दोपात्तस्य प्रमाणविरोधस्य प्रमाणविरुद्धत्वरूपानिष्टत्वोपपादकतया गुणत्वेन दोषत्वं नास्ति । प्रमाणविरोधाभावे इष्टापत्तिरेव सिद्धसाधनाख्याऽसङ्गतिरूपा स्यादित्यसत्तर्कतैव स्यादित्येवं प्रकृतोपयोगित्वयैवेष्टापत्तेरसङ्गतत्वमुक्तमित्यप्याचार्याणामाशयः प्रतिभाति ।

(टीका) एवं प्रमाणादिस्वरूपं निरूप्य तन्निरूपणस्य प्रयोजनादिकं दर्शयति—

**(मूलम्) आनन्दतीर्थमुनिना ब्रह्मतर्कोक्तिमार्गतः ।**
**मानलक्षणमित्युक्तं सङ्क्षेपाद् ब्रह्मसिद्धये ॥**

लक्षणादिनिरूपणेन संशोधितैरेव खलु वेदादिभिर्ब्रह्मज्ञानं भवति । तदिदं न वाद्यन्तरोक्तवदेवेति मन्तव्यम् । परमाप्तमतेन सुरवरावतारेणोक्तत्वादिति भावेनोक्तम् **आनन्दतीर्थमुनिनेति** ॥ यस्तु स्वप्रभावानभिज्ञः तं प्रत्याह **ब्रह्मतर्कोक्तिमार्गत इति** ॥ यस्तु अनधिगतब्रह्मतर्कोक्तिमार्गोऽपि तदनुजिघृक्षया आह **इत्युक्तमिति** ॥ युक्त्यादियुक्तता प्राक् प्रदर्शितेति इतिशब्देन स्मर्यते । यद्येवं कथं तर्हि स्वल्पेनैव ग्रन्थेन समाप्तमित्यत उक्तम् **सङ्क्षेपादिति** ॥ श्रोतृबुद्धिमनुसृत्य शब्दसङ्क्षेपेणोक्तमिति ।

**(टिप्पणी)** उत्तरग्रन्थप्रयोजनमाह एवमिति ॥

*अन्तिममङ्गलाचरणम्*

**(टीका)** अथ समापितप्रकरणोऽपि भगवनाचार्यः स्वेष्टदेवतां प्रणमति—

**(मूलम्) अशेषमानमेयैकसाक्षिणेऽक्षयमूर्तये ।**
**अजेशपुरुहूतेड्य नमो नारायणाय ते ॥**

***॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं***
***प्रमाणलक्षणं सम्पूर्णम् ॥***

**(टिप्पणी)** नारायणप्रणामस्य प्रयोजनं सूचयन्नाह **अथेति** ॥ अपिशब्देन प्रचयगमनं फलं सूचितं मानसाक्षित्वादिश्रुतिनः सिद्धं द्रष्टव्यम् ।

**(टीका)** नारायणस्यैव प्रणामे को हेतुरित्यतो यदुक्तं प्रमाणादि तत्प्रेरकत्वेन नारायणस्यैव मुख्यतः तदभिन्नत्वादिति भावेनोक्तम् **अशेषेति** ॥ ननु नारायणस्य शरीरमस्ति न वा । आद्ये मरणादिप्रसङ्गः । द्वितीये कथं तस्येन्द्रियशून्यस्याशेष-मानादिसाक्षित्वमित्यत उक्तम् **अक्षयमूर्तय इति** ॥ अस्त्येवेश्वरस्य शरीरम् । तच्च सच्चिदानन्दादिरूपत्वेनाक्षयमेवेति न कश्चिद्दोष इति । अजादिवन्द्यत्वाच्च नारायण एव नमस्कार्य इति भावेनोक्तम् **अजेशेति** ॥

अमरा भ्रमरायन्ते कमला वरलायते ।
यत्पादाम्भोरुहद्वन्द्वे वन्दे तं पुरुषोत्तमम् ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितप्रमाणलक्षणस्य टीका*
*जयतीर्थभिक्षुविरचिता न्यायकल्पलता सम्पूर्णा ॥*

**(टिप्पणी)** स्वयमपि प्रचयगमनायेष्टदेवतां नमस्करोति **अमरा इति** ॥ कमलाया हंसीत्वस्य ब्रह्मादीनां च मधुपत्वस्योक्त्या पादाम्भोरुहे भावस्थैर्यास्थैर्ये सूचिते इति सकलमकलङ्कम् ॥

विजयीन्द्रयतिः कश्चित् कृतवान् भाववर्णनम् ।
मानलक्षणटीकायाः प्रीत्यै माधवमध्वयोः ॥

★ ★ ★

॥ श्रीः ॥

# प्रमाणलक्षणविषयानुक्रमणिका

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

## श्रीविजयीन्द्रभिक्षुविरचितव्याख्यानसहिता

# विष्णुस्तुतिः

॥ श्रीः ॥

॥ श्री मन्मूलरामो विजयते ॥

## श्रीविजयीन्द्रभिक्षुविरचितव्याख्यानसहिता

# विष्णुस्तुतिः

**विष्णोरस्मान्पदाब्जे कृतनिवसतयः पांसवः पावयन्तु**
**श्रीमन्तः श्रीकवर्यां कुसुमसुनिचये पूरयन्तः परागान् ।**
**लालाट्यां लेखिकायामजनि पवनयोरक्षतान्निक्षिपन्तः**
**पौनःपुन्येन शुद्धिं हरशिरसि नते जाह्नवीं जोषयन्तः ॥ १ ॥**

**व्याख्यानम्**

नत्वा विष्णोः पदाब्जे विधिपवनमुखैः सेविते श्रीधराभ्यां
नत्वा राधां च भक्त्या परिमृदुमृदितैः ब्रह्मवातादिदेवान् ।
पूर्णप्रज्ञांस्तदादीन् मुनिकुलतिलकान् व्यासयोगीशवर्यान्
व्याकुर्वे वैष्णवीं तां स्तुतिमतिगहनां संविदे सज्जनानाम् ॥

अध्याहारादिना वृद्धिः परीक्षायै प्रदास्यते ।
इदं तु तिमिरं स्वान्तं हारकं माऽविरोधि च ॥

अतिविततगम्भीरशास्त्राम्भोधिप्रवेशाक्षमान् जनाननुजिघृक्षवस्तेषां तत्त्वनिश्चयाभावे कैवल्या-
म्भवात् तदुपायमभिधित्सवः तस्य च भगवदनुग्रहादृतेऽनुपपत्तेः, स च प्रार्थनेनापि जायत इति
चेकीर्षवः श्रीमत्कविकुलतिलकत्रिविक्रमाचार्याः चिकीर्षितं विघ्नविघातादिप्रयोजनतया अविगीत-
ष्टाचारपरम्पराप्राप्तं विशिष्टेष्टाधिकृतदेवताभिवन्दनं विधाय अधिकारानुसारेण भगवन्तमेव परम्परया
र्थयते **विष्णोरिति** ।

व्याप्त्यर्थकाद् अस्माद्धातोः औणादिको नुक्प्रत्ययः । तथा च देशतः कालतो गुणतश्च व्याप्तिमतो
ावतः ॥ पदाब्जे – पदं पादः अब्जमिव पदाब्जं तस्मिन् । 'उपमितं व्याघ्रादिभिः' इति समासः ।

रक्ताम्भोजवद्वर्तते तदिति भावः । तत्र कृतनिवसतयः – कृता निवसतिर्यैस्ते तथोक्ताः । तत एव श्रीमन्तः । श्रीः द्युतिर्येषामस्तीति नित्ययोगे मतुप् ॥ श्रीकबर्यां – श्रयन्ते तां सर्वे जना इति श्रीः कमला । 'क्विब् वची'त्यादिना अन्येभ्योऽपि दृश्यत इति दृशिग्रहणात् कर्मणि क्विप् । 'कमला श्रीः हरिप्रिये'त्यमरः । तस्याः कबर्यां = केशपाशे । 'कबरी केशपाश' इत्यमरः । तस्मिन्नाधारे । कुसुमसुनिचये = पुष्पशोभनसङ्घाते । परागान् = पुष्परेणून् । 'परागः सुमनोरज' इत्यभिधानम् । पूरयन्तः = स्वयमेव परागीभवन्तः । अत एव पूरयन्तः = पूर्तिं कुर्वन्तः । भगवतश्चरणारविन्दे सादरं नतायां श्रियि – तस्याः केशपाशे, शोभनकुसुमरेणून् साजात्यग्रहेन मिलित्वा स्थातव्यमिति आत्मप्रवेशेन तान् द्विगुणीकुर्वन्ती इत्यर्थः । अजनिपवनयोः = जननं जनिः आद् भगवतो जनिर्यस्य इति अजनिः । 'समानाधिकरणानां बहुव्रीहिरिष्यते' इत्यस्य प्रायिकत्वाच्च अन्यपदार्थसमासः । ब्रह्मा = चतुर्मुखः । भगवतः सकाशादेव समस्तस्य जगतः उत्पत्तिमत्त्वेऽपि प्रथमातिक्रमणे प्रमाणाभावात् मुख्यामुख्ययोरिति न्यायात् योगरूढिभ्यां च तेन तस्यैव ग्रहणम् । 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इत्यमरः ॥ पवनो = मूलवायुः मुख्यप्राणः अजनिसाहचर्यात् । तयोः । लालाट्यां = ललाटे भवायाम् । लेखिकायां = ऊर्ध्वतिलकरेखायाम् । तिलकस्य रेखयोर्मध्य इत्यर्थः । अक्षतान् = ललाटे धार्यमङ्गलद्रव्यविशेषान् । निक्षिपन्तः = स्वयमेव तदाकारान् भजन्त इत्यर्थः । यद्वा निक्षिपन्तः स्वशोभया तान् तिरस्कुर्वत इत्यर्थः । क्षिपु निरसन इति धातोः ।

अयं भावः— ब्रह्मणे पूर्णसमयानन्तरं सायुज्यं, पवनायोचितकाले ब्रह्मपदवीं च दास्यामीति नमस्कारादिसेवावशीकृतपदकमलेन किमक्षता दत्तेति नतिसमये तल्ललाटलग्नाः श्रीसिन्दूरसुन्दरपांसवः पश्यतां तथा भान्तीति । अत एव प्रथममाह **श्रीकबर्यामित्यादि** ॥ नते = नम्रे हरशिरसि वर्तमानां जाह्नवीं = गङ्गां, पौनःपुन्येन शुद्धिं जोषयन्तः = सङ्गमयन्त इत्यर्थः । तेन तादृशपांसुपवित्रीकृतगङ्गास्पदत्वेन हरशिरसः परमपावनता लब्धा ।

अथवा हरशिरसि नम्रे वर्तमानां जाह्नवीं जोषयन्त इत्यर्थः । एकावासस्थितयोर्गुणगुणिनोः विश्लिष्टयोरेकत्र मेलनं प्रीतिसाधनमिति लोकसिद्धमिति भावः । तत्र पौनःपुन्येन शुद्धिं जोषयन्त इत्यनुषङ्गः । तदर्थश्च पूर्ववत् । यद्वा तत्र हरशिरसि पौनःपुन्येन शुद्धिं विदधत इति शेषः । एतादृशभगवत्पादपांसवः – रेणव इत्यर्थः । 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुरि'त्यमरः । अस्मान् = नः । एकत्वेऽपि 'अस्मदो द्वयोश्चे'ति बहुवचनम् । यद्वा उत्तमाधिकारित्वलक्षणगौरवसूचनाय तत् इति ध्येयम् । पावयन्तु = पवित्रीकारयन्तु । 'पूञो हेतुमति चे'ति एञ् अन्तात् लोट् । इदं च विवक्षितप्रयोज्यद्वारेति बोध्यम् । तथा च विष्णोरेवेत्थं सर्वोत्तमत्वमिति फलितार्थः ।

यद्वा कमलाप्रार्थनाप्यनेन पद्येन कृतेति ध्येयम् । तथाहि । विष्णोः कमलायाः पदाब्जे कृत-निवसतयः पांसवोऽस्मान् पावयन्त्विति सम्बन्धः । विपूर्वात् 'ष्णु प्रसव' इति धातोः विच्प्रत्यये वा संज्ञापूर्वकविधेरागमशानचस्य वा नित्यतया गुणस्य नुको वाऽभावे अन्यषदितिवत् पूर्वपदादिषत्वे पृषोदरादित्वेन वा उक्तसर्वस्मिन् विष्णुरिति सिद्धम् । तस्यार्थः— सिसृक्षानुसारेण तत्तत्काले प्रकृत्यादिरूपेण सर्वजगद्विशेषेण ष्णौति प्रसूत इति । अत एव ''इन्दिरा लोकमाता मा'' इति तस्याः नाम । यद्वा विशिष्टशक्तस्यास्य देशतः कालतश्च व्याप्तिमत्यां कमलाव्यक्तौ लक्षणा । तात्पर्यानुपपत्तेरपि लक्षणाबीजत्वात् । तस्याः विद्याभिमानिनीत्वेन प्रथमप्रार्थनीयत्वस्य तात्पर्यकल्पकत्वात् । अत्र पक्षे श्रीकबर्यामित्यत्र श्रीशब्देन भारती । 'शं रूपमाश्रिता वायुं श्रीरित्येव च कीर्त्यते' इति वचनात् । विशेषणान्तरसङ्गतिस्तु पूर्ववत् ।

अथवा मुख्यगुरुत्वादजनिपवनौ प्रार्थयते **विष्णोरित्यादि** । विष्णोरजनिपवनयोः पांसवः पावयन्तु इति योजना । ते कथं भूताः । श्रीकबर्यामित्यादि विशेषणविशिष्टाः । नते हरशिरसि लालाट्यां लेखिकायां अक्षतां निक्षिपन्तः । जाह्नवीं जोषयन्तः पौनःपुन्येन शुद्धिं विदधतश्चेति । अत्र पक्षे रुद्रापेक्षया नयोरुत्तमत्वमिति वाक्यार्थो लभ्यते ।

अथवा पवनमेव प्रार्थयते **विष्णोरिति** । हे पवन । विष्णोरादेशेनेति शेषः । तस्याज्ञया रक्षताम् । रक्षणार्थं प्रवर्तमानानां सतां मध्ये यो भवान् हनुमदादिरूपत्रयेण अजनि अवतीर्णः । ततः अस्मान् लालाट्यां लेखिकायामकृत । ऊर्ध्वपुण्ड्रसुकृतावस्मान् प्रवर्तितवानिति भावः । यत्तदोर्नित्यसम्बन्धात् । तस्य भगवतः पदाब्जे निवसतय पांसवोऽस्मान् पावयन्त्वित्यादि पूर्ववत् । निवसतय इत्यत्र निकामं वसतिः येषां ते इत्यव्ययानां समासे वक्तव्य इति वचनेन बहुव्रीहिः । पौनःपुन्येन शुद्धिं इत्यनेन निक्षिपन्त इति सम्बध्यते । तेन शुद्धिं निक्षिपन्तः सम्पादयन्त इत्यर्थः ।

अथवा विष्णोस्ते पदाब्जेऽस्मान् लालाट्यां लेखिकायामूर्ध्वपुण्ड्रविषये रक्षतामिति लोट् । ऊर्ध्वपुण्ड्रादस्माकं कदाचिदपि प्रच्यवो माभूदिति प्रार्थनार्थः । ते कीदृशे इत्यतस्ते विशिनष्टि शेषेण । तथाहि । ययोः पदाब्जयोः कृतनिवसतयः पांसवः श्रीकबर्यां कुसुमसुनिचये परागान् पूरयन्तः । अजनिपवनयोः पौनःपुन्येन शुद्धिं निक्षिपन्तः । हरशिरसि जाह्नवीं न जोषयन्तः । न प्रीणयन्तः विष्णु-पदाश्रितत्वलक्षणतुल्यमहिमाहितस्पर्धया न प्रीणयन्त इति यावत् । श्रीमन्तश्च साधवश्च पावयन्त्विति ।

अथवा विष्णोः पदाब्जे कृतनिवसतयः पांसवः । श्रीमन्तश्च भगवद्भक्ताः सर्वेऽस्मान् पावयन्त्विति सम्बन्धः । चकाराभावेऽपि तदर्थलाभः कर्तृभेदाश्रयणात् । श्रीकबर्यामित्याद्युभयविशेषणम् । पांसु-

विशेषणत्वे पूर्वोक्तोऽर्थोऽनुसन्धेयः । भगवद्भक्तविशेषणत्वे त्वयमर्थः । श्रीकबर्यां कुसुमसुनिचये परागान् पूरयन्तः = नूतनदिव्यपुष्पैः तत्कबरीमलङ्कुर्वन्तः । अजनिपवनयोः लालाट्यामक्षतान्निक्षिपन्तः। तौ पूजयन्तः । नते हरशिरसि जाह्नवीं जोषयन्तः । विष्णुपादोदकात्मिकया गङ्गया हरं पूजयन्तः । रुद्रस्य मज्जनप्रियत्वं प्रसिद्धमेव । पौनःपुन्येन शुद्धिं विदधत इति ।

केचित्तु— विष्णोरस्मानित्येकं पदम् । अस्मानित्यध्याहारः । तन्निष्पत्तिप्रकारस्तु— 'विष्लृ व्याप्ताविं'ति धातोरौणादिके नञ्प्रत्यये विष्ण् इति जाते विष्णुरित्यर्थः । स उरसि वक्षसि येषां ते विष्णोरसः । 'स्मिङ् ईषद्धसने' इति धातोः 'अन्येभ्योऽपि दृश्यते' इति उप्रत्यये स्मयन्त इति स्माः हसन्त इत्यर्थः । विष्णोरसश्च ते स्माश्चेति समासे द्वितीयाविभक्तिरिति । तस्य समग्रस्यार्थः— ये वयं भगवदाख्यमनर्घ्यवस्तु हारवद् हृदि धृत्वा सन्तोषेण ईषद्धासवन्तः तान् । पुनः कथम्भूतान् । लालाट्यां लेखिकायामूर्ध्वपुण्ड्रविषये अक्षतान् दोषरहितान् अप्रत्ययानिति यावत् । तान् अस्मान् । अजनिपवनयोः पदाब्जे कृतनिवसतयः पांसवः पावयन्त्विति सम्बन्धः । इतरच्च पूर्ववदित्याहुः । तन्न । नञोऽनियतविषयत्वादुरःप्रभृतिभ्यः, इति उरादिगणोक्त विधेरपि दुर्निवारत्वात् समासान्तविधिरनित्य इत्यस्य भिन्नविषयत्वादभियुक्तानन्यथासिद्धप्रयोगाभावेन निर्बीजत्वादिति सङ्क्षेपः ॥ १ ॥

**कीदृश्यस्तेषु वाचः क्व च कथमथवा कस्य वाऽधिक्रियेरन्**
**अब्धौ स्रोतस्तरङ्गा इव च गुरुगिरो यद्गुणौघे स्खलन्ति ।**
**दद्युः खद्योतपोताद्युतिमतितनवस्तत्र किं यत्र राजा**
**मध्याह्नार्के समग्रो ग्लपित इव कृतो निग्रहश्च ग्रहाणाम् ॥ २ ॥**

तत्पादपांसूनामस्मदादिपवित्रीकरणसामर्थ्यमनेकाद्भुतमहिमत्वेनानिर्वचनीयतया न सम्भावनीयमित्याह **कीदृश्य इति** । तेषूक्तेषु भगवत्पादपांसुषु । कीदृश्यो वाचोऽधिक्रियेरन् = तान् यावद्गुणविशिष्टतया प्रतिपादयितुं किमात्मिकाः गिरोऽधिकृताः समर्था स्युरित्यर्थः । यास्तादृश्यः तथाविधा वाचो न सन्तीत्यर्थः । विषयीभूतपांसूनां तत्तद्गुणविशेषविशिष्टतया सम्बन्धविरहात् दुष्प्रापतामाह **क्वेति** । ननूपायसद्भावात् तादृशगुणविशिष्टपांसुषु अस्मदीयवाचां सम्बन्धस्य सुग्रहतया समर्थता भविष्यतीत्यत आह **अथवा कथमिति** । कथं = केन प्रकारेणोपायेनेत्यर्थः । यद्वा सम्बन्धसद्भावेऽपि तस्य दुर्भाव्यतया तत्र वाचामप्रवृत्तिमाह **अथवा कथमिति** । अस्मान् प्रति तादृशगुणविशिष्टतया पांसूपस्थापकप्रमाणाऽनवतारेण सम्बन्धग्रहाभावादित्यर्थः । गृहीतसम्बन्धानामेव गिराम् अर्थप्रतिपादकत्वानुभवादिति भावः । न च अस्माकं तदनवतारेऽपि परस्य तदवतारे तद्वाचां तत्र प्रवृत्तिः स्यादेव

इत्यत आह **कस्य वेति** ॥ तादृशे पुंसि प्रमाणाभावादित्यर्थः । तदेव दृष्टान्तपुरःसरमाह । अब्धौ स्रोतस्तरङ्गा = समुद्रे प्रवाहोर्मय इव । यद्गुणौघे = यत्प्राकट्यगुणसमूहे । गुरुगिरः = गुरूणां महतामुपदेष्टॄणां ब्रह्मादीनाम् । गिरो = वाचः । **इव चेति** । चकारः अप्यर्थः । स च गुरुगिर इत्यनेन सम्बध्यते । स्खलन्ति = स्खलनं प्राप्नुवन्ति । अन्तं गत्वा उपरता भवन्तीत्यर्थः । तासामपि तथात्वे का कथा अस्मदादिवाचामिति भावः ।

इममेवार्थमर्थान्तरन्यासेनाह उत्तरार्धेन । यत्र = यस्यां दशायाम् । मध्याह्नार्के = मध्यन्दिन-प्रचण्डमार्तण्डे सति । समग्रः = सम्पूर्णकलः । राजा = चन्द्रः । 'राजा प्रभौ नृपे चन्द्रे पक्षे क्षत्रिय-शक्रयोरि'ति शब्दार्णवः । सः ग्लपित इव = निरस्कृतकान्तिरिव कृतः । अर्थात् मार्तण्डेनेति बोध्यम् । ग्रहाणां = मङ्गलादीनाम् ॥ निग्रहश्च = कान्तितिरस्कारश्च कृत इति चकारात् सम्बध्यते । तत्र = तस्यां दशायाम् । अतितनवः = अतीवाणीयांसः । खद्योतपोताः = खद्योतानां ज्योतिरिङ्गनानां पृष्ठभागकान्तिमतां कीटविशेषाणां, पोताः = अर्भकाः । द्युतिं किं दधुः = प्रकाशन्ते । न हीत्यर्थः । अधिक्रियेरन् दध्युरिति च लिट् ।

यद्यपि मध्याह्नार्के समग्रो राजा चन्द्रो नास्त्येव । तथाप्यभ्युपगमवादोऽयमित्यदोषः । तथाच राजाद्यभिभावकस्य मध्याह्नार्कस्य खद्योतपोताभिभावकत्ववद् गुरुगिरविषयाणामस्मदादिवागविषय-त्वमौचित्या वर्जितमिति फलितं बोध्यम् ।

अथवा गुरुगिर इति गुर्व्याः स्त्रियो, गिरो वाच इत्यर्थः । 'गीः वाग्वाणी'त्यमरः । अत्र पक्षे, कस्य ब्रह्मणो इति वायोर्वा, यमस्य वा वह्नेर्वा न कस्यापीत्यर्थः । 'मारुते वेधसि ब्रध्ने पुंसि कः' इत्यमरः । 'को ब्रह्मात्मनि रवौ मयूरेऽग्नौ यमेऽनिल' इति नानार्थरत्नमालायाम् । शिष्टं पूर्ववत् ।

अथवा कथं द्युति दधुः = कथं शोभमाना भवेयुरित्यर्थः । अस्खलितवाचामेव प्रवृत्तावधिकारात्। अधिकृतानामेव विवक्षितार्थप्रकाशत्वेन द्युतिमत्त्वादिति भावः । अत्र सर्वत्र गुरुगिरामेव योग्यतया कर्तृत्वं बोध्यम् । मध्याह्नार्केण अतितनवः खद्योतपोता इव, राजा शक्रोऽपि ग्लपित इव कृतः, ग्रहाणां सूर्यादीनां निग्रहश्च कृतः । एते केऽपि भगवत्पादपांसूनां तत्तद्गुणविशिष्टतया स्तुतौ न समर्था इत्यर्थः। क्व चेति चकारो हेत्वर्थः । यस्मात्कस्य ब्रह्मणो वायोर्वा । वाचः । तत्र = पादपांसुगुणसमूहे । क्व वा = क्वचिदेव वाऽधिक्रियेरन् न सर्वत्रेत्यर्थः । तथाच यत्स्तुतिविषये ब्रह्मादिवाचामेकदेशविषयत्वं, शक्रस्य ग्लपिः ग्रहाणामप्रतिभालक्षणे निग्रहः तत्र गुरुगिरां बृहस्पतिवाचां तदपेक्षया नीचवत्त्वात् स्खलनादिकमुचितमिति समग्रवाक्यार्थः । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भर' इत्यभिधानम् ॥

**यात्रापात्रं पयोधाविव लयसमये मण्डलं वाण्डकोशे**
**रक्ताङ्गस्य व्रजे वा दिवसकररुचां कोरकं कैरवस्य ।**
**यज्ज्ञाने भाति कृत्स्नं जगदतिविशदे नित्यनिर्दोषविद्या-**
**माद्यां पद्मालयां तां हरिचरणरजोरागिणीं राधयामः ॥ ३ ॥**

प्रस्तुतस्तुतिकरणे अतिशयितसामर्थ्यसिद्धये सकलवाङ्मनसदेवतां पद्मां पौनःपुन्येन प्रार्थयते **यात्रापात्रमित्यादि पद्यत्रयेण** । लयसमये = प्रलयकाले ॥ पयोधौ = उदकराशौ ॥ यात्रापात्रमिव = प्लव इव । अण्डकोशे = ब्रह्माण्डोदरे । रक्ताङ्गस्य = अङ्गारकस्य । 'लोहिताङ्गो महीसुत' इत्यमरः । तस्य मण्डलं वा = बिम्बमिव । 'वा विकल्पोपमानयोरि'त्यभिधानम् । दिवसकररुचां = दिवसं कर्तुं शीलवतः सूर्यस्य । कृञो 'हेतुताच्छील्ये' इत्यकारप्रत्ययः । तस्य रुचां = रश्मीनाम् । व्रजे = समूहे । कैरवस्य = कुमुदस्य । कोरकं वा = कुमुलमिव । अतिविशदे = अतिनिर्मले ॥ यज्ज्ञाने = यस्याः श्रियः, ज्ञाने = संविदि । कृत्स्नं जगद्भाति । जगच्छब्दस्य तदेकदेशेऽपि प्रयोगात् तद्विषयकं ज्ञानं अस्मदादेरपीति को विशेष इत्यत उक्तं **कृत्स्नमिति** । तथा च कृत्स्नस्यापि जगतः तादृशादृष्टान्तबलेन श्रीदेवीज्ञानानुरूपविषयता नेति फलितार्थः । तां = पद्मालयाम् । राधयामः = आराधयाम इति सम्बन्धः ।

ननु वाङ्मनसदेवतात्वं सरस्वत्यादीनामपीति कुत इयमेव वन्द्येत्यत आह **आद्यामिति** । आद्यां = प्रथमपुरस्करणीयाम् । ननु एवं सतीयमेवादौ वन्द्या स्यान्न विष्णुरित्यत आह **हरिचरणरजोरागिणी-मिति** । विष्णुपादपांसुरागवर्ती = सेव्यत्वेन कामवतीम् ॥ ननु पूर्वोक्तकृत्स्नजगद्विषयकं ज्ञानं कारणाभावादस्मदादेरिव अस्या अपि न सम्भवति । तत्सम्भवे न दोषादिना प्रतिबन्धादुक्तजगद्विषय-त्वानुपपत्तिरित्यत आह **नित्यनिर्दोषविद्यामिति** । निर्दोषा चिन्तनादिदोषरहिता विद्या तत्त्वज्ञानं यस्याः तथोक्तेति ।

अथवा कृत्स्नं = समस्तगुणोपेतं हरिचरणरजः । जगदतिविशदे = जगत्यतिनिर्मले । रागिणीं = भक्तजनेषु स्नेहवतीम् । अत एवेश्वरादन्यत्रानालोचने सर्वविषयं लक्ष्मीज्ञानमिति सङ्गच्छते । पूर्वश्लोके विभुपादपांसूनां महामहिमख्यापनार्थं विशिष्य तत्तद्गुणविशिष्टतया ज्ञानाभावेन लक्ष्म्याद्यनिर्वचनीय-तोक्तेति न तद्विरोध इत्यवधेयम् ।

अथवा यत्तदोर्नित्यसम्बन्धात् यस्या अतिविशदे ज्ञाने अण्डकोशे रक्ताङ्गस्य मण्डलं वेत्यादि दृष्टान्तेन कृत्स्नं जगद्भाति । पयोधौ क्षीरसमुद्रे यत्परं ब्रह्म । विशिष्य निर्वचनीयगुणगरिमत्वसूचनाय यदिति सर्वनाम्ना तस्य निर्देशः कृतः । तत्कथम्भूतमित्यत आह लयसमये = विपत्तिसमये, यात्रापात्रं

= विपत्तितरणाय साधनं तद् भातीव । भातीत्यावर्तनीयम् । तथाच 'ईश्वरादन्यत्र तद्भानं सर्वविषयक'मित्युक्तं भवतीति दिक् ॥ ३ ॥

**लक्ष्मीरक्षीणदीक्षा गणयितुमनुपक्रान्तसंविद् गुणानां**
**आनन्त्यानि स्वभर्तुः पदकमलकनिष्ठाङ्गुलीसन्नखस्य ।**
**पश्यन्ती सन्ततं सा नवनवसुविशेषोपलम्भेन तत्तत्-**
**काले कौतूहलाब्धौ सुमहति गहने गाहमानाऽवतान्नः ॥ ४ ॥**

लक्ष्मीं स्तुवन् भगवद्गुणोत्कर्षमाचष्टे **लक्ष्मीरक्षीणदीक्षेति** । लक्ष्मीः = इन्दिरादेवी । स्वभर्तुः = विष्णोः । पदकमलकनिष्ठाङ्गुलीसन्नखस्य – पदकमलस्य कनिष्ठा या अङ्गुली तस्याः, सन् = निर्दुष्टः यः नखः तस्य । सौन्दर्यादीनां गुणानाम् । आनन्त्यानि = अनन्तताम् । गणयितुं = सङ्ख्यातुम् । सन्ततं पश्यन्ती । कीदृशी सतीत्यत आह = **अनुपक्रान्तसंविदिति** । अनुपक्रान्ता आदिरहिता संवित् तत्त्वज्ञानं यस्याः सा तथा । ननु तस्याः तथात्वे गणनानुकूलव्यापाराभावात् कौतुके बीजाभाव इत्यत आह **अक्षीणदीक्षेति** । अक्षीणा = सम्पूर्णा दीक्षा = व्रतविशेषः नियमविशेष इति यावत्, सा यस्याः सा तथा । यद्यपि सन्ततं पश्यन्तीत्यनेन ज्ञानस्यानादित्वं लब्धमिति अनुपक्रान्तसंविदिति पुनरुक्तम् । तथापि 'पश्यार्थैश्चानालोचने' इति सूत्रबलात् पश्यतेर्विचारलक्षणाऽऽलोचनपरत्वे 'पश्यन्ती'ति रूपम् । तस्य विचारयन्तीत्यर्थकत्वेन न पौनरुक्त्यमिति ध्येयम् । अत्र तेषु इति शेषः । तेषु = पूर्वोक्तगुणेषु । नवनवसुविशेषोपलम्भेन = नवानां नवानां पूर्वापरिचितानां पूर्वाज्ञातानामिति यावत् । सुविशेषाणां सुन्दरविशेषाणां उपलम्भेन = दर्शनेन । तत्तत्काले = तत्तत्सुन्दरविशेषोपलब्धिकाले । कौतूहलाब्धौ = आश्चर्यसमुद्रे । गाहमाना । कीदृशे तस्मिन्नित्यत आह– गहने = गम्भीरे । पुनः कथम्भूते । सुमहति = सुतरां महति । यद्यपि सुमहतीत्यादि सामान्यप्रयोगात् 'उपमितं व्याघ्रादिभिरि'ति समासोपपत्तिः । तथापि 'भाष्याब्धिः क्वातिगम्भीर' इत्यादाविव तदुपपत्तिर्बोध्या । एतादृशं या लक्ष्मीः सा नः अस्मान् अवतादिति सम्बन्धः ।

अथवा सा त्वम् । तान्नः = नः अस्माकं तान् अस्मदीयानित्यर्थः । अवतु इति सम्बन्धः । तान् कानित्याकाङ्क्षायां ये अक्षीणदीक्षाः सन्तः स्वभर्तुः स्वीयभर्तुः गुणानामानन्त्यानि भगवत्तादात्म्यानि गणयितुं व्यवस्थापयितुं सन्ततं पश्यन्ति विचारयन्ति । हेई = हे लक्ष्मि । 'ईकारोऽब्जदले लक्ष्म्या'-मित्यभिधानम् । येषां स्वभर्तुरङ्गुलीसन्नखस्य पदकमलकनिष्ठाऽऽपद्यते गम्यते । विवक्षितार्थवेद्भिरनेनेति पदं ज्ञानम् । कमलं जलं स्वार्थे कप्रत्ययः । तयोर्निष्ठाऽऽसक्तिः । येषां अनुपक्रान्तसंवित्

= स्वरूपभूतज्ञानं धीः । स्वभर्तुः नवनवसु भगवत्सम्बन्धिनीषु । नवनवसु = नवासु नूतनासु, नवसु नवविधभक्तिषु । विशेषोपलम्भेन = मोक्षसाधनाद्यनेकविधविशेषविषयीकरणेन । तत्तत्काले सुमहति गहने कौतूहलाब्धौ गाहमाना सा पूर्वपद्योक्तविशेषणविशिष्टा त्वमवेति ।

अथवा नवनवसुविशेषोपलम्भेनेत्यत्र नव, न, वसुविशेषोपलम्भेनेति पदत्रयम् । नपदस्यावृत्त्या स्वभर्तुः गुणानामानन्त्यानि पश्यन्ती तादृशनिष्ठा न येषाम् । येषां स्वभर्तुः सम्बन्धिन्यः नव नवविध-भक्तयो न । येषामनुपक्रान्तसंवित् । सुमहति गहने = दुष्प्रापे कौतूहलाब्धौ – कुतूहलं सुखमेव कौतूहलं तदेवाब्धिरिव तस्मिन् = मोक्षीयसुखे इति यावत् ।

यद्वा कुतूहलस्येदं कौतूहलं आश्चर्योत्पादकं सुखमिति यावत् । तदब्धिरिव एतस्मिन्मोक्षीयसुखे । इतरसुखविलक्षणत्वादाश्चर्यकारकत्वादिति भावः । तत्र तत्तत्काले चतुर्मुखादिमुक्तिकाले । तत्तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् । स्वरूपयोग्यतया गाहमानान् तानधिकारिणः । वसुविशेषोपलम्भेन = कनक-रजतरत्नधान्यादिद्रव्यप्राप्त्या तत्सर्वं दत्वेति यावत् । हे ई तान् अव । किन्तु सा त्वं योग्यत्वात् नः अधिकारिणोऽस्मानवेति सम्बन्धः ।

**चक्षाणा सौक्ष्म्ययोगाद्युगपदगणितानीक्षितुं दक्षिणाक्षी**
**पश्यत्यद्यापि नान्तं नयनहृदययोर्हारिणां हन्तु नोऽघम् ।**
**कालादस्मादनादेर्न च किल कलयिष्यत्यनन्ताच्च हन्त**
**स्वान्तः सन्तोषिणी या निखिलगुणलयेषून्मिषन्ती परान्ते ॥ ५ ॥**

एवं यतमानाऽपि भगवद्गुणानामन्तं नाद्राक्षीत् न पश्यति न द्रक्ष्यतीति भगवद्गुणोत्कर्षं प्रदर्शयन्नेव तस्या अपि महान्तं महिमानमाह **चक्षाणेति** । सा लक्ष्मीर्नोऽस्माकमघं कलुषं हन्तु नाशयत्विति सम्बन्धः । या = देवी ॥ नयनहृदययोर्नेत्रमनसोः । हारिणां हारः आकर्षणं तद्वतां दर्शनीयानां ध्यातव्यानां चेति यावत् । 'अत इनिठनौ' इति इन्प्रत्ययः, णिनिः । तस्योपपदसम्बधेन शासनात् । 'एकाक्षरात् कृतो जातेः सप्तम्यां च नतौ स्मृतौ' इति इन्प्रतिषेधस्य प्रायिकत्वात् । अथवा णिनि-रेवात्र । 'तवास्मिन् गीतरागेण हरिणा प्रसभं हृत' इत्यादाविव 'नन्दिग्रही'त्यादिना णिनिः ।

अत्र गुणानामित्यनुवर्तते । स्वभर्तुरिति च । स्वभर्तुः तादृशानां गुणानां अन्तं = पारम् । अस्मात् प्रमाणसिद्धात् । अनादेः = आदिरहितात् कालात् । ल्यब्लोपे पञ्चमी । तेन तमारभ्य अद्यापि न पश्यति । अनेन नादृक्षीत्यपि लभ्यते । ननु तादृशप्रणिधानाभावात् कथं तदन्तं पश्यतीत्यत आह

**तैक्ष्म्ययोगादिति**। अनतिप्रणिधानादित्यर्थः। अप्यर्थश्चकारः। तादृशप्रणिधानादपि। किं स्वयं समर्था त्यत आह **युगपदगणितानिति**। अगणितानर्थानीक्षितुं = द्रष्टुम्। दक्षिणाक्षी = निपुणलोचना ती। चक्षाणा = वक्तुं समर्था। अनेन तादृशप्रमाणाज्ञानमुपदर्शितं बोध्यम्। गुणपारादर्शने फलमाह **वान्तःसन्तोषिणीति**। स्वान्तः = स्वीयहृदये सन्तोषिणी = सन्तोषवती। आत्मनः कुलस्त्रतया परान् ति अनभिव्यञ्जितसन्तोषवती। मम पतिरेतादृशगुणगणगरिष्ठ इति ज्ञानस्य सन्तोषप्रयोजकत्वमिति येयम्। अस्याः ब्रह्माद्यपेक्षया वैलक्षण्यमाह **निखिलगुणलयेषून्मिषन्तीति**। निखिलस्य सत्त्वादेः र्वस्य गुणस्य लयेषु जातेषु सत्सु ब्रह्मप्रलयकाले। अत एवाह **परान्त इति**। परं चतुर्मुखायुः, दन्ते। उन्मिषन्ती = जागरणशीला। नन्वतःपरं न तद्दर्शनं भविष्यति इत्यत आह **अन्ताच्च कालात्**। मनन्तकालं प्राप्यापि। ल्यब्लोपे पञ्चमी। अथार्थश्चकारः। न कलयिष्यति = न द्रक्ष्यति। नन्वत्र किं नमित्यत आह **किलेति**॥ आगमसिद्धोऽयमर्थ इति भावः। आश्चर्यार्थे हन्तेति कवेरुक्तिः।

अथवा देवी अनादेरस्मात्कालात् तमारभ्यापि सौक्ष्म्ययोगात् स्वाभाविकशक्तियोगात्। अगणि-नशेषानर्थानुपदीक्षितुं दक्षिणाक्षी सत्यपि स्वभर्तुः गुणानामन्तं = नाशं न पश्यति। नन्विदानीं सकलः णनाशाभावात्, परान्ते तत्सम्भवात् अस्याश्च दृष्टत्वेन अभिमतायाः तदा जागरणाभावात् कथं तेषां न्त्यत्वसिद्धिरित्यत आह **परान्ते मिषन्ती**। निखिलगुणलयेषून् = निखिलगुणस्य लये इषून् बाणानिव शकभगवद्गुणान् चक्षाणा = पश्यन्ती। अत एव स्वान्तःसन्तोषिणी। तथा च देवब्रह्मप्रलये इतर-शकान् भगवद्गुणान् पश्यति न तु तन्नाशकं किमपीत्यर्थः। किञ्च अनन्ताच्च कालात् स्वभर्तुः गुणानां तिं न कलयिष्यति। किन्तु हन्त अहो! सा देवी हारिणां = हारलक्षणभूषणवताम्। नः = अस्माकं यनहृदययोरघं हन्तु।

अथवा सा देवी नोऽस्माकं अघमान्तं निःशेषं हन्त्विति शेषः। कीदृशानां न इत्यत आह **निखिलगुणलयेषु नयनहृदययोः हारिणामिति**। अयमर्थः— गुणानां = दाक्षिण्यादिसद्गुणानां लयो नाशो येभ्यस्ते गुणलयाः शब्दादिदुर्विषयाः। निखिलाश्च ते गुणलयाश्च तेषु। नयनहृदययोः हारिणां नयनहृदये संयोजयताम्। दुर्विषयासक्तचक्षुरादीन्द्रियवतामित्यर्थः। कथम्भूतेत्यत आह **त्यादिना**॥ अत्र पूर्वश्लोकात् स्वभर्तुर्गुणानामानन्त्यानीत्यनुवर्तते। या देवी स्वभर्तुर्गुणानामानन्त्यानि था योग्यमीक्षितुं द्रष्टुं दक्षिणाक्षी चक्षाणा च, अत एव स्वान्तःसन्तोषिणी। परान्ते उन्मिषन्ती। स्मात् अनादेः कालात् = तमारभ्याद्यापि सौक्ष्म्ययोगात् = सूक्ष्मत्वेन युक्ताद्योगात् = गवदुपासनारूपात्। युगपदगणितान् = युगेषु कृतत्रेतादिषु पदेषु = ब्राह्मरौद्रैन्द्रादिषु गणितान् =

परिसङ्ख्यातान् ब्रह्मरुद्रेन्द्रादीन् पश्यन्ती । अनन्ताच्च कालात् न कलयिष्यतीति न । किल प्रसिद्धमेतदित्यर्थः । हन्तेत्याश्चर्यम् । एतेन लक्ष्मीकटाक्षसम्बन्धात् ब्रह्मादीनां तादृशपदप्राप्तिरिति सूचितं भवतीति विस्तरेणालम् ॥ ५ ॥

**वेत्ता वक्ता विवेक्ता विविधगुणगणापूर्णमेकैकमेषां**
**को वा कात्स्न्यर्यात् कवीन्द्रः क इव च कलयोक्तक्रमोन्नेयकानि ।**
**अङ्गान्यङ्गीकरिष्णुर्मनसि वचसि वा यो हि कल्पान्तकाल-**
**कान्ताण्डोल्लोलकल्लोलिनि सलिलनिधौ सज्जते मज्जनाय ॥ ६ ॥**

'यत्र भग्ना महारथा' इति न्यायेनाह **वेत्तेति** ॥ एषां प्रागुक्तानां मध्ये एकैकं गुणं एकमेकमङ्गं वेत्ति शेषः । कथम्भूतं गुणमित्यत आह **विविधगुणगणापूर्णमिति** । विविधैः = नानाप्रकारैः । गुणगणैः = गुणसमूहैः । आपूर्णं = परिपूर्णम् । कवीन्द्रः = ज्ञानिनां श्रेष्ठः को वेत्ता = ज्ञाता । वेत्तेति धात्वन्तरं, न तु विद् ज्ञान इति । तस्य सेट्कत्वम् । को वक्ता = व्यवहर्ता कः, व्यवहर्तव्यज्ञानाभावात् । विवेक्ता = तत्तदसाधारणरूपेण प्रत्येतवान् कः । न कोऽपीत्यर्थः । हि = यस्मात् कारणात् । कलया च = लेशेनापि । अप्यर्थश्चकारः । यः उक्तक्रमोन्नेयकानि = वेदादिसूक्तक्रमोन्नेयकानि । वेदादिसूक्तप्रकारेण ऊहनीयानि । वेदबोधितोपासनाविषयतया इष्टसाधनानीति यावत् । अङ्गानि = भगवदवयवान् । मनसि वचसि = चित्ते वागिन्द्रिये वा । अङ्गीकरिष्णुः = अङ्गीकर्तुमिच्छति, ध्यातुं स्तोतुं वा कः समर्थः । अत्र इष्णुच्प्रत्ययो विचार्यः । 'अलंकृञ् निराकृञ्' इत्यादिसूत्रेण अङ्गीकृञोऽनुपादानात् । यत्तदो-र्नित्यसम्बन्धात् स इति लभ्यते । सः । कल्पान्तकालक्रान्ताण्डोल्लोलकल्लोलिनि– कल्पान्तकाले = ब्रह्मप्रलयकाले, क्रान्तं = आक्रान्तं, अण्डं = ब्रह्माण्डं यैस्ते तथोक्ताः । ते च ते उल्लोलाश्च अतिचञ्चलाश्च ते कल्लोलाश्च महातरङ्गाश्च ते अस्मिन् सन्तीति मत्वर्थीयेन्प्रत्ययः । 'महत्सूल्लोल-कल्लोलावि'त्यमरः । तस्मिन्सलिलनिधौ = जलराशौ । मज्जनायेव = मज्जनं कर्तुमिव । सज्जते = उद्युक्ते । पूर्वश्लोके अङ्गगुणोभयप्रसक्तेरत्रापि तदुपादानमिति । कात्स्न्यर्यात् = सामस्त्येन । एतच्च 'को वेत्ते'त्यादौ सर्वत्र सम्बध्यते ।

अथवा– क इव ब्रह्मेव कात्स्न्यर्यादिषां मध्ये एकैकं गुणमङ्गं वा विविधगुणगणापूर्णं कवीन्द्रः को वा वेत्ता वक्ता को वा विवेक्ता । चतुर्मुखो यथा जानाति वदति विविच्य जानाति न तथा कोऽपी-त्यर्थः । हि यस्मादित्यादि पूर्ववद्योज्यम् ।

अथवा– एषां मध्ये एकं गुणं विविधगुणगणैरपूर्णं यो वेत्ता यो वक्ता सोऽविवेक्ता अविवेकी । गुणे गुणाभाव इति यस्य सिद्धान्त इति भावः । कात्स्न्यर्यात् सर्वप्रकारात् । स क इव कुत्सित इव । स को

ा कवीन्द्रः, य उक्तक्रमोन्नेयकानि वेदादिसूक्तप्रकारेण षोडशकलात्मकानि नेति उन्नेयकानि ानव्याङ्गानि । कलयेति सहार्थे तृतीया । मनसि वचसि वा अङ्गीकरिष्णुः अभ्युपजिगमिषुः स कः ामर इत्यर्थः । भगवतो लिङ्गशरीरं नेति प्रमाणोलङ्घनात् । एतादृशः स हि कल्पान्तकाल-ान्ताण्डोल्लोलकल्लोलिनि सलिलनिधौ मज्जनाय सज्जते । महासाहसिक इति भावः ।

अथवा– लेशः उक्तक्रमोन्नेयकान्यङ्गानि येषां मध्ये विविधगुणगणापूर्णमेकैकं गुणं वा यो मनसि चसि वा अङ्गीकरिष्णुः वेदाद्युक्तप्रकारेण ज्ञात्वोपास्ते यः । वाशब्द एवकारार्थः । स एव वेत्ता स एव ावेक्ता कवीन्द्रश्च । तथा हि । क इव = तन्नूनिव । कात्स्न्यद्विर्तीत्यादि । कः । न कोऽपी-ार्थः । स एव योऽहिकल्पान्तकालक्रान्ताण्डोल्लोलकल्लोलिनि सत्यपि – अहिकल्पः सर्पसदृशः लयकालः, तस्मिन् क्रान्तं अण्डं लयेषु यैः ते तथोक्ताः । उल्लोलाः उच्चैः चञ्चलाः ते च ते कल्लोलाः हातरङ्गाः । अहिकल्पान्तकालक्रान्ताश्च ते उल्लोलकल्लोलाश्च ते तथोक्तास्ते अस्य सन्तीति स थोक्ताः, तस्मिन् तथाविधे सत्यपि = अत्यन्तापत्काले सत्यपीत्यर्थः । मनसि स्मरणाय वचसि तवनाय सज्जते = प्रयत्नं कुरुते । अनुदात्तङिताऽत्मनेपदम् इति आत्मनेपद नित्यत्वस्य चक्षिणे ात्करणेन ज्ञापकादत्र शतृप्रत्ययः । 'विष्णुर्ब्रह्म तथा दानेन्येवं नित्यमुपासनम् । कार्यमापद्यपि ब्रह्म तेन ात्यपरोक्षताम्' इत्युक्तेः । मज्जनाय = मत्सम्बन्धिजनाय वैष्णवबन्धुजनायेति यावत् । तादर्थ्ये चतुर्थी यम् । तदर्थमित्यर्थः । उक्तक्रमोन्नेयकानि ऊहनीयान्यङ्गानि = हनुमद्भीममध्वाख्यानि रूपाणि ाङ्गीकरिष्णुः = अङ्गीकुर्वन्नित्यर्थः । एषां पूर्वप्रस्तुतभगवद्गुणानां मध्ये विविधगुणगणापूर्णमेकैकं णमङ्गं वा । 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इत्युक्तेः । कलया = लेशेन । वेत्ता = ज्ञाता, वक्ता : उपदेष्टा, विवेक्ता = विवेचनकर्ता च । कलयेत्युक्तिघटनायाहुः कात्स्न्यात् = साकल्येन वेत्ता = वक्ता ावेक्ता कः = न कोऽपीत्यर्थः ।

अथवा– यः हरिः कल्पान्तकालक्रान्ताण्डोल्लोलकल्लोलिनि सलिलनिधौ मज्जनाय अवगाहनाय ाजते उद्युङ्क्ते = प्रलयजलनिधौ विहर्तुमिच्छतीत्यर्थः । यत्तदोर्नित्यसम्बन्धात् योग्यतया तस्येति ाभ्यते । तस्य हरेः उक्तक्रमोन्नेयकानि = अनन्तवेदोक्तक्रमोहनीयान्यङ्गानि । उपलक्षणमेतत् । गुणादी-ात्यपि ग्राह्यम् । कात्स्न्यात् = साकल्येन कः = चतुराननो वेत्ता = वक्ता-विवेक्ता च । ाविश्वासाविन्द्रश्चेति कवीन्द्रः पुरन्दरः, कवीनामिन्द्र इति तदन्यो ज्ञानिश्रेष्ठो वा । कलया लेशेन वेत्ता क्ता विवेक्ता च । हि प्रसिद्धमेतदित्यर्थः । एवं स्थिते एषामङ्गादीनां मध्ये वस्तुतो ाविधगुणगणापूर्णमेकैकमङ्गादिकं मनसि इदंप्रथमतया ज्ञातुं, वचसि तथा वक्तुम् । अङ्गीकरिष्णुः

अङ्गीकुर्वन् = शास्त्राध्ययनप्रारम्भमात्रं कुर्वन्नित्यर्थः । मनुष्यः क इव ब्रह्मेव वर्तत इति शेषः । 'अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठमिच्छती'त्युक्तेरिति सकलमकलङ्कम् ॥ ६ ॥

**वाग्भिर्वर्याभिरग्र्याः श्रुतिपदविदिता ब्रह्मवायूसुपर्णः-**
**शेषेशाद्याः सुरेशा जनिशतवृतया भागवत्या च भक्त्या ।**
**देव्या दत्तावलम्बाः कथमपि करुणावारिराशौ रमेशे**
**त्वंशांशे स्प्रष्टुमीशास्तदिह तदितरे के नु कल्पा वयं के ॥ ७ ॥**

एतदेवोपपादयति **वाग्भिरिति** । ब्रह्मवायू = चतुर्मुखमुख्यप्राणौ । 'अन्तादिवच्चे'ति ज्ञापकादयं प्रयोगः । सुपर्णः = गरुडः । शेषेशौ = अनन्तरुद्रौ आद्यौ येषां ते । तद्गुणसंविज्ञानबहुव्रीहिः । ते के सुरेशाः = इन्द्रादयः सुरोत्तमाः । अग्र्याः = श्रेष्ठाः । एतादृशदेवाः, देव्या = श्रिया । दत्तावलम्बाः = दत्तः कृतः अवलम्बः अनुग्रहो येषां ते तथोक्ताः । तादृशाः सन्तः । कथमपि = कथञ्चित् अत्यायासेनेति यावत् । करुणावारिराशौ = दयासमुद्रे । रमेशे = लक्ष्मीपतौ । अंशांशे = तदीयो योऽशांश एक-देशैकदेशः । तस्मिन्नेव वर्याभिः = श्रेष्ठाभिः । वाग्भिः । जनिशतवृतया = जन्मशतेन सम्पादितया । भागवत्या = भगवद्विषयया । भक्त्या च । स्प्रष्टुं = स्तोतुं ज्ञातुं वा । ईशाः = समर्थाः। पुनस्ते कीदृशाः ? श्रुतिपदविदिताः = वैदिकशब्दप्रतिपाद्याः । वेदप्रसिद्धा इति यावत् । एतेनैतेषां महामहत्त्वं सूचितम् । यस्मात् तदितरे = विशिष्यवेदप्रतिपादितेभ्यो ब्रह्मादिभ्य इतरे । नु = अन्ये पुनः । इह = अंशांशे । स्पष्टुं के । कल्पाः = समर्थाः । न केऽपीत्यर्थः । तत्तस्मात् इह स्प्रष्टुं के वयं अतिनिपुणाः । न केऽपीत्यर्थः ।

अथवा– श्रुतिपदविदिता देव्या श्रिया सरस्वत्या वा दत्तावलम्बाः सुपर्णशेषेशाद्याः सुरेशाः जनिशतवृतया भागवत्या स्वधिकविषयया वर्याभिर्वाग्भिश्च ब्रह्मवायू स्प्रष्टुमीशाः । करुणावारिराशौ रमेशे तु अंशांशे कथमपि । यस्मात् तदितरे के नु गणनीया एव न भवन्तीत्यर्थः । तस्मात् कल्पाः कलौ भवाः पापयुगसम्भूता वयमिह के सुतरां न गणनीया इत्यर्थः ।

अथवा– वर्याभिरुत्तमाभिर्वेदवेदानुकूलपुराणादिलक्षणाभिकरणैः ॥ श्रुतिपदविदिताः = श्रुतीनां श्रोत्राणाम् । 'वेदे श्रवसि च श्रुतिरि'त्यमरः । पदेषु = स्थानेषु । 'पदं व्यवसितत्राणस्थाने'त्याद्यभि-धानात् । प्रवेशेष्वित्यर्थः । विदिताः = अवगताः । श्रुतिपुराणादौ श्रुता इत्यर्थः । अग्र्याः = श्रेष्ठाः । ते के । कल्पौ = निरामयौ समर्थावित्यर्थः । 'वार्तो निरामयः कल्प' इत्यमरः । ब्रह्मवायू अयं सुपर्णः

षेशाद्याः सुरेशाः । यद्वा सुपर्णग्रहणेन समन्वात् शेषरुद्रयोः प्राप्तौ, शेषेशाद्याः इत्यस्य शेषेशाभ्यां द्याः = अत्तुं योग्याः भक्षणीयाः इत्यर्थः । 'अद भक्षण' इति धातोः । सुरेशा = इन्द्रादयः । अप्यर्थ-कारः । तेनोक्तविधसुरेशा अपीति सम्बन्धः । भक्त्या । जनिशतवृतया = जनाः प्रजाः येषां सन्तीति निनः लोकपालाः । तेषां शतेन वृतया = स्वस्याभीष्टसिद्धये प्रार्थितया । अथवा– वृतया = परिवृतया रिवारीभूतसकललोकपालकयेत्यर्थः ॥ करुणावारिराशौ रमेशे । भागवत्या = भागः अंशः देहार्धम् । वत्या नारायणार्धदेहयेत्यर्थः । देव्या = श्रिया । अंशांशे अत्र रमेशेत्यनुषङ्गः । अंशस्य = सुखाद्यव-वस्य, अंशे = नेत्राद्यवयवान्तरावयवे । कथमपि = अतिकृच्छ्रेण । दत्तावलम्बाः = दत्तावस्थानाः । ह्मादयोऽपि भगवदङ्गोपाङ्गेषु लक्ष्म्या अर्पिता इत्यपि वाक्यार्थः ननु लक्ष्मीपरिग्रहं विनाऽपि कदाचिद् ह्मादीनां भगवदवयवेष्ववस्थानमस्ति किम् ? नेत्याह । तदितरेक इत्येकं पदं तेनोक्तलक्षणावलम्बेन इतः : उपेतः रेकः = रेचनम् । भावे घञ् । उत्पत्तिलक्षणं यस्य तदतिरेकं तस्मिन् । लक्ष्म्यनुग्रहादेव गवदङ्गोपाङ्गावलम्बने उत्पन्ना इत्यर्थः । स्वरूपकथनार्थमिदं विशेषणम् । इह नु = जगति, नु = तत्त्वं रायणाख्यं वस्तु स्प्रष्टुं ईशाः = समर्थाः के नु? लक्ष्म्या अनुग्रहविशेषं विना । न केऽपीत्यर्थः । अनेन क्ष्म्या ब्रह्मादिजगदुद्धारकत्वमिति ध्येयम् ।

अथवा = ब्रह्मवायू भक्त्या जनिशतवृतया – जनिशतेन = जन्मशतेन, वृतया = अर्थितया इदं ह्मवायूइव यथा । सुपर्णादिविवक्षया तु यथायोग्यं चत्वारिंशति, द्विंशति, दशादि जनिवृतत्वं ज्ञेयम् । था प्रमाणसद्भावात् । भागवत्या = भगा ब्रह्माद्यपेक्षया अधिकैश्वर्यादिषड्गुणाः तेषां समूहो भागः, वत्या, देव्या लक्ष्म्या । रमेशे = श्रीहरौ । एतौ रक्षस्वेति समर्पितौ इत्यर्थः । एवमुत्तरत्रापि ।

सुपर्णश्च दत्तः शेषेशाद्याः सुरेशाश्च दत्ताः । तत्तस्मादंशांशे एकदेशैकदेशे स्प्रष्टुमीशाः शक्ताः । गवदपरिमितानन्दानन्तांशैकांशसदृशाभिमतस्वस्वयोग्यसम्पूर्णानन्दानुभवसमर्था इत्यर्थः । एतादृश-ह्मादयः । वर्याभिः = अपौरुषेयत्वादिना उत्तमाभिः । वाग्भिः = वेदादिभिः । अग्र्याश्रुतिपदविदिता त्येकं पदम् । अग्र्या = श्रेष्ठा, आसमन्तात् श्रुतिः = प्रसिद्धिः यस्य तत् अग्र्याश्रुति, तच्च तत्पदं च कुण्ठादिमुक्तस्थानं, तत्र विदिताः प्रसिद्धाः । 'यत्र पूर्वे साध्याः सन्ति देवा' इति श्रुतेः । इतरेषां न ñ वैकुण्ठादिप्राप्तिरित्यत आह **तदितर इति** । अलम्बाः – न विद्यते लम्बः आलम्बनं येषां ते थोक्ताः । निरालम्बनाः । तदितरे = ब्रह्मादिमुक्तियोग्यजीवेभ्यः इतरे व्यतिरिक्ताः नित्यसंसारिणः मोयोग्याः दैत्याः । रमेशे के नु दत्ताः= न केऽपि दत्ताः । ब्रह्मादिष्विव तदितरेष्वपि देवी करुणावती त् दत्ताः स्युरेवेत्यत आह **अरिराशाविति** । तत्रापिशब्दो वाशब्दश्च भिन्नक्रमः । अरिराशौ शत्रुसमूहे, रुणापि वा कथं, न कथमपि । इह = योग्यायोग्यभेदेन द्विविधे जीवनिकाये । कल्पाः = कलियुगे भवाः

वयं के । किंशब्दोऽत्र जिज्ञासायाम् । भगवतः स्तुतिप्रवाहेनास्माकं मुक्तियोग्यत्वे निश्चिते पुनस्तद्दार्ढ्यार्थं जिज्ञासेति न कश्चिद्दोष इति भावः इत्यनवद्यविस्तरः ।

**अप्येवं हन्त धार्ष्ट्यात्कतिपयपदकैरीड्यपादस्य पांसू-**
**नस्माभिस्तावयन्त्वित्यलममलमतीनन्वियान्तानवन्याम् ।**
**भावं भावं सुभीतो भवगतिभिरहं मोहमोक्षे विवक्षन्**
**कारं कारं सपर्यां परमपदमदः संविवित्सन्विविक्षन् ॥ ८ ॥**

किमेतादृशायाससाध्यस्तुत्या प्रयोजनमित्याशङ्कां परिहरिष्यन् ............न्यायमाह **अपीति** । अपिशब्दो भिन्नक्रमः । अलममलमतीन् = विशुद्धबुद्धीन् । तान् = ब्रह्मादीन् । प्रक्रमात् । ईड्यपादस्य = स्तुत्यस्य = भगवतो यः पादः तस्य । पांसून् । एवमपि = पूर्वप्रकारेण अशक्तोऽपि । कतिपयपदकैः = यादृशतादृशैः मितैः पदैः स्तौमि । स्तुवता मया ते ब्रह्मादयः स्तावयन्त्वित्युद्दिश्यान्वियां अनुव्रजेयमिति वाक्यार्थः । तत्पादपांसुस्तुत्यर्थं ब्रह्माद्यनुसरणं किमर्थं यूयं किं न समर्था इति शिष्यजिज्ञासायामाह **अस्माभिरलमिति** ॥ अलंशब्दो वारणार्थः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकः' इत्यभिधानम् । अस्माभिः मया स्तावयन्त्विति वा सम्बन्धः । 'अस्मदो द्वयोश्चेत्येकत्वे बहुवचनम् । स्तुत्यादेर्मोक्षप्रयोजनकत्वात् । तत्र च विरक्तस्यैवाधिकारात्, विरक्तेश्च दुःखादिदर्शनप्रयोज्यत्वात् कथं तस्याधिकार इत्यत आह **अवन्यामिति** । अवन्यां = भूमौ । भावं भावं = भूत्वा भूत्वा । भवगतिभिः संसारयात्राभिः । सुभीतो = दुःखितः । मोहमोक्षे = अनाद्यविद्याविच्छेदे । निमित्तसप्तमी इयम् । तदर्थमित्यर्थः । विवक्षन् = विचारयितुमिच्छन् । पूजादेरपि तत्साधनतामाह । सपर्यां = पूजाम् । कारं कारं = कृत्वा कृत्वा । परमपदम् = परमस्य भगवतः पदं चरणम् । वैकुण्ठादिवैष्णवस्थानमिति वा । संविवित्सन् = सम्यग्वेदितुमिच्छन् । सम्यक् जिज्ञासुरिति यावत् । अतः वैकुण्ठादिस्थानं संविविक्षन् प्रवेष्टुमिच्छन्निति ।

अथवा । ईड्यपादित्येकं पदं = ईड्यौ पादौ यस्यासौ भगवान् । 'पादस्य लोपो हस्त्यादिभिरि'ति सूत्रात् । अस्य इत्यपरं, तावित्यन्यत् । अयं तु इति पदद्वयम् । अमलमति इत्येकम् । नन् इत्येकम् । तु इत्यपरं, इयामिति च । ता इत्यपरं, न इति, वन्यामिति चापरम् । परं अपदमित्यपरम् ।

अत्रैवं योजना– अयं तु कश्चित्पुरुषः भावं भावं भवगतिभिः सुभीतः मोहमोक्षे विवक्षन् = ब्रह्मविचारं बुभुत्सन्, अदः परं = इदं परं तत्त्वं संविवित्सन्, अपदं = ब्रह्मस्थानं मोक्षमिति यावत्,

वेविक्षन्, मुमुक्षुरिति यावत्। असौ किं कृत्वा मोक्षं प्रवेष्टुमिच्छावानित्यत आह– वन्यां = वने भवां टव्यां स्थित्वा सम्पादिताम्। सपर्यां = पूजाम्। कारङ्कारम्। इतिशब्दो हेतौ। इतिकारणात्, घ्रपात् = भगवान्। अमलमतौ = ब्रह्मवायू। नाः = श्रीसरस्वतीभारत्यः। एते सर्वे 'अस्माभिः यमलमनुग्राह्यः' इति जानन्तीति मन्वान इति शेषः। एतादृशोऽहम्। एवमपि = पांसुवर्णनस्य शक्यत्वेऽपि। अमलमनी अस्य वक्ष्यमाणस्य भगवत्पादस्य पांसून्। कतिपयपदकैः धाष्ट्यात् तिपयपदकैः नेयामिति न। अपि न्वियामेव। तथा भगवदनुग्रहविशेषेण मया स्तोतव्या एव गवत्पादपांसव इति भावः।

अथवा धाष्ट्यात् = धृष्टस्य भावः धाष्ट्यं = निर्भयत्वं तत् अत्ति भक्षयन्तीति धाष्ट्यात्। व्यादिनिवदयं प्रयोगः। तस्य सम्बुद्धिः हे धाष्ट्यात् = हे नृसिंहादिरूपेण जगत्संत्रासकरेत्यर्थः। द्वा धाष्ट्याख्यस्वगुणविशेषभोक्तस्त्वम्। कतिपयपदकैः = कतिपयानि द्वित्रादिपदानि शब्दा येषां ते शोक्ताः तैरस्माभिः। ईड्यपात् ईड्यौ स्तुत्यौ पादौ यस्य स ईड्यपात् असि। अल्पस्तुत्यादिनाऽपि केष्वनुग्रहं करोषीत्यर्थः। एवमपि = स्वात्मोद्धाराय सुलभोपाये सत्यपीत्यर्थः। अयं = इह ईदृश-न्मादिदुःखविशिष्टोऽहमिति। मोक्षमोक्षे विवक्षनित्यादि सम्बन्धः। किमितीत्यपेक्षायामाह **ताविति**। ' ईड्यपादित्यत्र प्रकृतौ = तौ प्रति, अलमनुयानेनेति शेषः। किन्तु अपांसून् = त्वत्पादपांसु-तिरिक्तान्। अन्वियां = अनुयातः स्याम्। 'देवान् देवयजो यान्ती'त्युक्तेः। अमलमतीन् = रलयो-दात् अमला अमरा वयमिति मतिर्बुद्धिर्येषां ते तथोक्ताः तान्। यद्वा अमलमतीन् अमला निर्दोषा ग्मिति मतिरभिमतिर्येषां ते तथा तान्। इति सङ्कल्प्य। मोहमोक्षे = मोहो मिथ्याज्ञानं संसार-रुकारणं, तस्य मोक्षे = मोचनविषये। अविवक्षन् = अपेक्षारहितः सन्। अदः = परोक्षं पदं व्यवसितं भवतीत्यपदं साशङ्कं स्वर्गादिकम्। यद्वा हे परम। अहं पदं = स्थानं स्वर्गादि।

अथवा– अपदमदः = अपगतः, दम इन्द्रियनिग्रहं ददातीति दमदः विष्णुः, यमनियमादिसाधन-लापो वा यस्मात् स अपदमदः। कर्तृविशेषणमेतत्। परं स्वर्गादिपरलोकं विवित्सन् = केनेदं प्याद्यमिति सम्यग्वेदितुमिच्छन्। विविक्षन् = तत्र प्रवेष्टुमिच्छन्। तानवन्यां = तनुनीभावः तानवं = शत्वम्। 'श्लक्ष्णं दभ्रं कृशं तनु' .. इत्यभिधानम्। तं नयतीति तानवन्यः तेषाम्। स्वभक्ते-पूर्णत्वमापादयतामिन्द्रादीनाम्। सपर्यां हविर्दानरूपां पूजाम्। परं अतिशयेन। कारं कारं कृत्वा त्वा। अत एव भावं भावं भूत्वा भूत्वा। भवगतिभिः = भवे संसारे गम्यन्ते प्राप्यन्त इति भवगतयः, भिः सांसारिकदुःखैरित्यर्थः। यद्वा भवे = संसारे गतिभिः = परिभ्रमणैरित्यर्थः। सुभीतः = सुतरां तः। हन्त = आश्चर्यम्। अविवेकदाशादेवेत्थं सर्वोऽपि जीवलोको विनष्ट इति भावः।

अथवा = कतिपयपदकैः भक्तैरीड्यपादसि । अयं च = ध्रुवादौ प्रसिद्ध इत्युक्तम् । एवमपि अयं पुरस्थितः संसारिजनः इत्यहम् । मोहमोक्ष अविवक्षन्निति सम्बन्धः । किमितीत्यपेक्षायामाह **अपांसू इत्यादि** । अयमर्थः— न विद्यते पांसवो दोषा ययोः तौ अपांसू, निर्दोषितौ प्रकृतौ पादौ प्रति । नः = अस्माकं, आभिः = ईड्येत्यत्र प्रकृताभिः, श्रुतिभिः अलम् । अस्माकं, हरिचरणः सुतरामनपेक्षित इत्यर्थः । किन्तु अलममलमतीनन्वियामिति सङ्कल्प्य, अहंमोहमोक्षे – अहंमोहः = अहंममाभिमानलक्षणमिथ्याज्ञानं, तस्य मोक्षे । अविवक्षन्नित्यादेरुक्त एवार्थः ।

अत्र पूर्वोक्तपक्षयोः पदच्छेदमात्रं, वाक्यार्थस्त्वेकरूप एवेति द्रष्टव्यम् ॥ ८ ॥

**पादः सादं सदा नो दरयतु सहरेर्यो बलेः कालनेच्छा-**
**वर्धिष्णोरूर्ध्वमृद्धः सपदि नखमुखेनाण्डखण्डं चखान ।**
**आयान्त्या स्वस्रवन्त्या स्वतलकिसलयज्योत्स्नया व्यापविश्वं**
**वर्ण्याम्भोभिर्विलिम्पन्निव भुवनमहाभित्तिमत्यापफाल ॥ ९ ॥**

एवं सम्भृतसामग्रीकः सन् भगवत्पादावयववान् स्तोतुमुपक्रमते **पाद इत्यादिना** । हरेः पादो नोऽस्माकं सादं = खेदविशेषं सदा दरयतु इति सम्बन्धः । दरयत्वित्यस्य घटादित्वेन मित्वात् ह्रस्वत्वे साधुता । हरिं विशिनष्टि । बलेः = बलिचक्रवर्तिनः । कालनेच्छावर्धिष्णोः कालनेच्छया बन्धनेच्छया वर्धिष्णोः वर्धनशीलस्य । स पादः कीदृश इत्याकाङ्क्षायामाह– ऊर्ध्वं = उपर्युपरि, ऋद्धः = प्रवृद्धः । सपदि = तत्क्षणमेव । नखमुखेन । अण्डखण्डं = ब्रह्माण्डखर्परम् । चखान = विदारयामास । अत्र तत इति शेषः । तदनन्तरं आयान्त्या । स्वस्रवन्त्या = स्वर्वाहिन्या सह वर्तमानया । स्वतलकिसलया ज्योत्स्नया = स्वपादस्य तलमन्तर्भागः, सः किसलय इव, तस्य ज्योत्स्नया = कान्त्या । विश्वं = जगत्त्रयम् । व्याप = प्राप्तवान् । कथमिव ? वर्ण्याम्भोभिः = कुङ्कुमोदकैः । भुवनमहाभित्तिं = भुवनस्य ब्रह्माण्डस्य महतीं भित्तिं खर्पररूपाम् । विलिम्पन्निव विलेपनं कुर्वन्निव । अत्यापफाल = क्षुक्षुभे । फल प्रकाशन इति धातोः ।

अथवा– यो बलिः सदानः = दानेन मदेन सहितः । यद्वा इवशब्दो भिन्नक्रमः, यो बलिः सदान इव मत्तगज इव कृत्यविवेकरहित इत्यर्थः । तस्य । कालनेच्छावर्धिष्णोः हरेरित्यादि पूर्ववत् । एतेन परमकारुणिकस्य हरेः बलिचक्रवर्तिनि दण्ड्यताप्रयोजनमुक्तम् ।

अथवा– यो बलिः, सदानः = दानेन सहितः सन्, विश्वं = विष्णुं, 'विश्वं विष्णुर्वषट्कारः' इत्यादेः, व्याप = विशेषेण रूपेण सम्प्रदानत्वेन आप = प्राप्तवान् । यश्च बलिः, खमुखेन = इन्द्रिय-मुखेन,

ण्डखण्डं = स्वपालनीयदेशं, न चखान = न पीडयामास । न्यायमार्गेणैवावतिष्टेत्यर्थः । य बलेः, कालनेच्छा यथायोग्यं पालनेच्छा, आस्वः = स्वर्गपर्यन्तम् । भुवनमहाभित्तितां = नदुर्लङ्घ्यप्रकारतां आयाति ॥ एतेन तदिच्छानुसारं सर्वो लोक इति फलितम् । यश्च बलिरत्यायं लः । ऊर्ध्वं ऊर्ध्वदिशशिर इति यावत् । स्रन्दन्त्या = प्रसरणशीलया । स्वतलकिसलयज्योत्स्नया, णभूतया वर्ण्याम्भोभिः वर्णनीयजलोदकैः, विलिम्पन्नेव ऋद्धः, वर्धिष्णोः हरेः पादः मम सादं न्तु । एतेन भक्त्यनुकम्पी भगवानिति सूचितम् ।

अथवा– सहरेः = हरिः इन्द्रः, तेन सह वर्तत इति सहरिर्देवसेना तस्याः, कालनेच्छया = रेच्छया, वर्धिष्णोः बलेः पादः, स्वतलकिसलयज्योत्स्नया सहितेन शोभितेनेत्यर्थः, नखमुखेन ण्डखण्डं अण्डस्य खण्डमेकदेशं स्वर्गं च । चखान = विदारयामास । कथम् ? तत्र ऊर्ध्वं = उच्चैः, द्धः = उपचितः सन्, स्वः स्रवन्त्या इव आयान्त्या देवसेनया, वर्ण्याम्भोभिः = रुधिरैः व्याप विश्वं शेषेण आ समन्तादापगतं विश्वं सबलिः यथा स्यात् तथा । भुवनमहाभित्तिं विलिम्पन्नत्यापफाल । लिः सदानः सादं दरयत्विति ॥ ९ ॥

**पान्त्वस्मांस्ताक्ष्यकेतोः पदनखमणयो यत्र चित्रायमाणाः**
**सौपर्ण्यश्चित्रवर्णाः प्रतिकृतय इति भ्रान्तिमाजन्ति भान्त्यः ।**
**प्रायश्चित्तं चिकीर्षुर्बहुगुणमधिकातिक्रमाशङ्कयाहः-**
**संहर्तुः पादमूले स्वयमिह दशभिर्मूर्तिभिः सोऽवतीर्णः ॥ १० ॥**

**पान्त्विति** । ताक्ष्यकेतोः = गरुडध्वजस्य । पदनखमणयः – पदयोश्चरणयोः, नखमणयः नखाः य इव रत्नानीव ते अस्मान् पान्त्विति सम्बन्धः । कथम्भूताः । यत्र = नखमणिषु । चित्रायमाणाः त्रमिवाचरन्त्यः । चित्रवर्णाः = शुक्लाद्यनेकवर्णाः । सौपर्ण्यः = सुपर्णसम्बन्धिन्यः = गरुड- म्बन्धिन्य इति यावत् । भान्त्यः = भासमानाः । प्रतिकृतयः = प्रतिच्छायाः । इति = एवंविधम् । न्तिं = भ्रमम् । आजन्ति = उत्पादयन्ति । तामेव विधामाह– अधिकातिक्रमाशङ्कया = अधिकस्य ावतोऽतिक्रमः = उपर्यवस्थानलक्षणः तेन या आशङ्का तया । स तु सुपर्णः । बहुगुणं = दशगुणितं प्रश्चित्तं चिकीर्षुः सन् । अत एव अंहःसंहर्तुः = पापनाशकस्य भगवतः । इह = पादमूले । स्वयं ाभिर्मूर्तिभिरवतीर्ण इति ।

अथवा– प्रायः अधिकातिक्रमाशङ्कया – अधिकैः बलिभिः दैत्यैः अधमैर्वा योऽतिक्रमः जगदा- नलक्षणः तस्य आशङ्का अनुमीयत इति या बुद्धिस्तया ॥ बहुगुणं = बहुप्रकारम् । चित्तं = मनः ।

चिकीर्षुः सन् । पूर्वोक्तजगदुपप्लवपरिहारमिच्छन्निति यावत् । यः स विशिष्यानिर्वचनीयतत्तद्गुण-गरिमासम्पन्नो भगवान् स्वयं दशभिर्मूर्तिभिरवतीर्णः । दशावतारान् प्रतिकृतवतः = प्रतिबिम्बभूता भगवद्भक्ता अस्मान् पान्त्विति सम्बन्धः । यस्मादंहःसंहर्तुः पदनखमणयः = पद्यते गम्यते एभिरिति पदम् । हेतव इति यावत् । ते च ते नखमणयश्च सूर्यासौपर्ण्यः आकृतयः गरुत्मत इति यावत् । चित्रवर्णाः = ब्राह्मणादिनानावर्णाः । चित्रायमाणाः = चित्रलिखितप्रतिमा इव ।

किञ्च यत्र पादमूले = मेरुप्रत्यन्तपर्वतमूले । 'पादाः प्रत्यन्तपर्वताः' इत्यभिधानात् । इति भ्रान्ति-माजन्ति = प्रदृश्यमाणभ्रमणं प्राप्नुवन्तीति यावत् । अत्र पदनखमणय इत्येव सम्बध्यते । 'भीषास्माद्वातः पवते' इत्यादि श्रुतेः ।

अथवा– यस्मात् तार्क्ष्यकेतोः त्वत्तश्चित्रवर्णा वेदाः, पदनखमणयः भ्रान्त्या सौपर्ण्यः । पूर्वश्लोकाद्विश्वमित्यनुवर्तते, विश्वं सर्वं जगत्, एते चित्रायमाणाः लिखितप्रतिमाकाराः । यस्मादंहःसंहर्तुः तव । इति प्रतिकृतयः = प्रतिबिम्बाः इति हेतोः । उपादानोपादेयभावस्य प्रतिबिम्बभावस्य वा अभेद एव सम्भवात् । स क इत्यपेक्षायामाह– यः प्रायः अधिकानिक्रमाशङ्कया बहुगुणं प्रायश्चित्तं चिकीर्षुः स्वयं दशभिः मूर्तिभिरवतीर्णः । अत्रेतिशब्दानुषङ्गः । तेन इति भ्रान्तिं जगत्परमात्मनोरभेदभ्रान्तिमिह जगति ये जानन्ति । हे पदज्ञानस्वरूप भगवन्, तेऽस्मान्यत्र पादमूले । पदसम्बन्धि = ज्ञानसम्बन्धि पादं तत् मूलं च । ज्ञानोपाये इति यावत् । नास्मिन्निमित्तसप्तमी । तदर्थं पान्तु । अत्र पक्षे यत्तच्छब्दावध्याहर्तव्यौ ॥ १० ॥

**हृद्यं तच्चिन्तयामः परमपदयुगं साधु यत्सन्निधाना-**
**दत्युद्रिक्तोरुकान्तेर्नखमणिनिकरान्निष्कलङ्केन्दुजालात् ।**
**निष्ठ्यूतोऽर्चिष्कलापो हृदयवरकमुद्दीपयेद् ध्वान्तमन्तः**
**कृन्तेद्विन्देच्च तापं भयमुपशमयेद्दर्शयेदाशु तत्त्वम् ॥ ११ ॥**

**हृद्यमिति** । यत्सन्निधानात् = यस्य श्रीपदयुगस्य सन्निधानात् = सान्निध्यात् हेतोः । अत्युद्रिक्तोरुकान्तेः = अत्युद्रिक्ता अत्यन्तमुत्कृष्टा, उरुकान्तिः यस्य स तथा तस्मात् । नखमणि-निकरात् = नखा मणय इव नखमणयः, तेषां निकरात् = समूहात्, तदाख्यादित्यर्थः । निष्कलङ्केन्दु-जालात् = निर्गतः कलङ्कः येभ्यस्ते तथा तेषामिन्दूनां जालात् = समूहात् सकाशात् । 'जालं समूह आनायः' इत्यभिधानम् । निष्ठ्यूतः = निरृतः । अर्चिष्कलापः = अर्चिषां = तेजसां, कलापः = पुञ्जः ॥ हृदपवरकं = हृदयगर्भगृहम् ॥ उद्दीपयेत् = उच्चैः प्रकाशयेत् । अन्तः = हृदयान्तःस्थितं, ध्वान्तं

अज्ञानान्धकारम् । कृन्तेत् = भिन्द्यात् । तापं = आध्यात्मिकादि त्रिविधम् । भिन्द्येत् = विदा-न् । भयं = संसारभीतिम् । उपशमयेत् = अंजसा विनाशयेत् ॥ तत्त्वं च = परब्रह्मरूपं च, यद्वा ातन्त्र्यं च ॥ आशु प्रदर्शयेत् = प्रत्यक्षप्रमाविषयीकारयेत् ॥ हृद्यं = मनोहरम् । तत्पूर्वोक्तं परम-युगं = परमस्य = सर्वोत्तमस्य = विष्णोः, पदयुगं = पादयुगलम् । 'युग्मं तु युगलं युगम्' ाभिधानम् । साधु = सम्यक् । चिन्तयाम इति ।

अथवा, अत्युद्रिक्ता = सकललोकोत्कृष्टा । यस्य = उरुकान्तेः भगवतः । नखमणिनिकरात् ाख्यादिन्दुजालात् । निष्ठ्यूत अर्चिष्कलाप इत्यादि पूर्ववत् योज्यम् । तत् अपदयुगं = प्राकृत-णयुग्मरहितम् । तादृशावयवराहित्यस्य 'अपाणिपाद इत्याद्यवयवनिषिद्धपरत्वात् = अप्राकृत-ादित्यर्थः । हृद्यं परं परतत्त्वं विष्णुरूपं च साधु चिन्तयाम इति ॥ ११ ॥

**चीर्णं पुण्यं सुतीर्णं वृजिनमवजिताः शत्रवः क्षेत्रजायैः**
**हृत्पद्मं तत्पदाब्जद्युतिभिरहरहः क्षाल्यते क्षोदिताघैः ।**
**धन्यैर्विन्यस्यमाने मनसि मुनिजनैः स्वार्जितं कर्मभर्म**
**स्वोजोजालोज्ज्वलेऽस्मिन् ज्वलन इव विशुध्यर्थमध्यर्पयामः॥ १२ ॥**

**चीर्णमिति** । यैः = पुरुषैः । हृत्पद्मं = हृदयकमलम् ॥ तत्पदाब्जद्युतिभिः = तस्य विष्णोः ाब्जद्युतिभिः कान्तिभिः । अहरहः = सर्वदा । क्षाल्यते = विमलीक्रियते । निर्दोषीक्रियते इति वत् । तैः पुरुषैः पुण्यं चीर्णं = आचरितम् । वृजिनं = दुरितम् । सुतीर्णं = सुतरामतिक्रान्तम् । क्षेत्रजाः क्षेत्रे शरीरे जाताः । 'क्षेत्रं पत्नीशरीरयोरि'त्यभिधानम् । 'इदं शरीरं कौन्तेय क्षेत्रमित्यभि-धीयते' इति गीतावाक्यम् । शत्रवः = कामादिवैरिणः । अवजिताः = अपजयप्रापिताः । क्षोदिताघैः = क्षोदितानि र्णीकृतानि, अघानि दुरितानि यैस्ते तथा तैः । 'चूर्णे क्षोदः समुत्पिजेत्याद्यभिधानम् । धन्यैः = ायवद्भिः । 'सुकृती पुण्यवान् धन्यः' इत्यभिधानम् । मुनिजनैः = योगिजनैः । मनसि = हृदये । न्यस्यमाने = आधीयमाने । स्वोजोजालोज्ज्वले – शोभनानां ओजसां बलानां जालैः = समूहेन, उज्ज्वले देदीप्यमाने अस्मिन्विष्णुपदाब्जे । स्वार्जितं = स्वेन कृतम् ॥ कर्म = नैमित्तिकादि कर्म, र्म = सुवर्णं । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम् । तपनीयं शातकुंभं च गाङ्गेयं भर्मकर्बुदम्' यभिधानम् । ज्वलन इव = वह्निरिव । विशुद्ध्यर्थं = नैर्मल्यार्थम् । अध्यर्पयामः = समर्पयामः । यथा ग्नौ निहितं सुवर्णं निर्मलं भवति = फलाय सम्पद्यते तथा श्रीविष्णुपादाब्जे समर्पितं कर्म शुद्धं गोपयोगी भवतीत्यर्थः ।

अथवा– विशुद्धचर्यं ज्वलने = वह्नौ, भर्मेव = सौवर्णमिव। स्वोजोजालोज्वले = अग्निमिन्विष्णुपादाब्जे, हृदं = मनः, स्वार्जितं अहरहः कर्म = नित्यादिसत्कर्म। पद्यं = कञ्जादिकुसुमं, विन्यस्य = संसारासक्तिं त्यक्त्वा। मनसा वाचा कर्मणा च तत्पादारविन्दयुगलमेवेत्यर्थः। मनसि स्थितिमिति सप्तम्या लभ्यते। वृजिनं = पापम्। यैः मुनिजनैः सुतीर्णं, अत एव क्षोदिताघैरित्याह क्षोदिताघत्वादेव। यैः क्षेत्रजाः शत्रवः = कामादयः अवजिताः = तिरस्कृताः, तैरेव मुनिजनैः, तत्पादाब्जद्युतिभिः क्षाल्यते = उत्कृष्टफलोपयोगी क्रियते। तत्पदाब्जे, वयं, चीर्णं पुण्यं, माने च। इदं द्वितीया द्विवचनं = सदागमानुमानलक्षणे प्रमाणे च, अर्ध्यर्पयामः। सत्कर्म कृत्वा सदागमानुमानाभ्यां तद्गोचरविचारं कुर्महे। प्रत्यक्षस्य तदगोचरत्वात् तयोश्च तद्गोचरत्वात् अस्माकमधिकृतत्वात् चरतीति भावः॥ १२॥

**नित्योपास्त्यादराभ्यागतगिरिशमुखोदारदैत्यारिवार-**
**प्रारब्धोरुप्रणामावसरवितरणे प्रीतिहेतोश्चचाल।**
**यावत्तावत्स्वधर्माचरणरतरमारम्यपादाग्रलीला-**
**सिञ्जन्मञ्जीरमञ्जुध्वनिपरिचरितः पान्तु मां विष्णुपादः ॥ १३॥**

**नित्येति**। नित्योपास्त्यादराभ्यागतगिरिशमुखोदारदैत्यारिवारप्रारब्धोरुप्रणामावसरवितरणे – नित्योपास्तौ = अनवरतपरिचर्यायाम्। 'परिचर्याऽप्युपासनमि'त्यभिधानम्। आदरेण = अनुरागेण, अभ्यागताः = समागताः, ये गिरिशमुखाः = शङ्करप्रमुखाः, उदाराः = उत्कृष्टाः, दैत्यारयः = असुरवैरिणो देवाः, तेषां वारेण = निकरेण स्तोमेन। 'स्तोमौघनिकरव्रातवारसङ्घातसञ्चया' इत्यमरः। प्रारब्धस्य प्रकर्षेणोपक्रान्तस्य, उरुप्रणामस्य = बहुनमस्कारस्य, अवसरवितरणे = अवकाशदाने, कर्तव्ये सतीति शेषः। यावत् = यदा। प्रीतिहेतोः = सन्तोषजननार्थम्। चचाल = प्रस्थितः, चलितवानिति यावत्। तावत् = तदैव। स्वधर्माचरणरतरमारम्य पादाग्रलीलासिञ्जन्मञ्जीरमञ्जुध्वनिपरिचरितः – स्वधर्माचरणे स्वभर्त्रा भगवता यो यो व्यापारः क्रियते तत्समानव्यापाराचरणे रतायाः = प्रवृत्तायाः, रमायाः = श्रीदेव्याः, रम्यपादाग्रस्य = मनोहरचरणचरमभागस्य, लीलया = विलासेन, सिञ्जन् = सिञ्जनाख्यध्वनिविशेषं कुर्वन्, यो मञ्जीरः = नूपुराख्यचरणाभरणविशेषः, तस्य मञ्जुध्वनिना = मधुरस्वनेन, परिचरितः = उपासितः। विष्णुपादः मां पान्तु = पालयतु। भगवदागमनसमये रमाचरणविलासेन प्रेरितस्य मञ्जीरस्य ध्वनिर्जयमानो वादित्रविशेषश्रेष्ठो भवतीति भावः।

अथवा, यावत् यदा, विष्णुपादः, सिञ्जन्मञ्जीरमञ्जुध्वनिपरिचरितः – तादृशध्वनिविशिष्टः सन्
ाल, विष्णुपादः = तथा पादन्यासं कृतवानित्यर्थः । यावत् यदा, रम्यपादाग्रलीला – रम्या
ाग्रलीला यस्याः सा तथा, भगवान् यथा चेष्टते तथा । किं च कमलापीत्यर्थः । उदारदैत्यारि-
प्रारब्धोरुप्रणामा – नित्योपास्त्यादराभ्यागतगिरिशमुखा । अत्रोभयत्र बहुव्रीहिः । स्वधर्माचरण-
मा, भगवत्समानसमयोचित्तदानविषये मां पातु = तदर्थोपयुक्तधनादिनेत्यर्थः ॥ १३ ॥

**दिध्यासोर्ध्वान्तघातोपहितनिजमहःसम्भृतस्तम्भशोभां**
**बिभ्राणे निघ्नतां नः स्म रणसरणिकाविघ्नमीशस्य जङ्घे ।**
**श्रीमज्जानुप्रभामुञ्मणिमुकुरशिरःशेखरे श्रीकराभ्या-**
**मारोप्याङ्कं विपङ्कं परिमृदुमृदिते शेषपर्यङ्कतो ये ॥ १४ ॥**

**दिध्यासोरिति** । ये जङ्घे श्रीकराभ्यां = लक्ष्मीहस्ताभ्याम् । शेषपर्यङ्कतः = अनन्ताख्यशय्यायाः
ाशात् शय्यायां = शयनवत् । 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समम्' इत्यभिधानम् । उच्छ्व
ा शेषः । विपङ्कं = विगतः पङ्को दोषो यस्मात् स तथा । अङ्कं = उत्सर्गम् । आरोप्य = निधाय
ार्थः । परिमृदु = अतिकोमलं यथा भवति तथा । 'कोमलं मृदुलं मृद्वि'त्यभिधानम् । मृदिते =
ाहिते, तादृग्भूते जङ्घे ।

किञ्च दिध्यासोः = ध्यानेच्छोर्जनस्य । ध्वान्तघातोपहितनिजमहःसम्भृतस्तम्भशोभां –
न्तस्य = अज्ञानान्धकारस्य, घाताय = विनाशार्थं, उपहितौ समीपं स्थापितौ यौ, निजमहसा =
ाभाविकतेजसा, सम्भृतौ = निष्पादितौ, स्तम्भौ, तयोः शोभां कान्तिम् । बिभ्राणे = दधाने ।
मज्जानुप्रभामुञ्मणिमुकुरशिरःशेखरे – श्रीमती = कान्तिमती ये जानुनी = ऊरुपर्वणी । 'जङ्घा तु
ृता जानूरुपर्वाष्ठीवदस्त्रियामि'त्यमरः । ते एव प्रभामुञ्मणिमुकुरौ = कान्तिदर्पणौ । 'दर्पणे मुकुरा-
ादि'त्यभिधानम् । तावेव शिरःशेखरौ = अग्र्यालङ्कारविशेषौ ययोस्ते तथा । ईशस्य = विष्णोः ।
ङ्घे । नः = अस्माकम् । स्मरणसरणिकाविघ्नं = स्मरणसरणिकायाः विष्णुस्मरणमार्गस्य, विघ्नं =
न्तरायम् । निघ्नतां = प्रत्यूहपरिहारेण अनवरतविष्णुस्मरणसहकारितां कुरुतामित्यर्थः ।

अथवा– दिध्यासोः = प्रह्लादादिभक्तस्य, ध्वान्तस्य = दुरितान्धकारस्य, घाताय = विनाशाय,
ाहितेन = सम्पन्नेन, निजेन = स्वाभाविकेन, महसा = तेजसा, सम्भृतः यः स्तम्भः, तस्य तत्र वा,
भां बिभ्राणे । ईशस्य = नरसिंहस्य, श्रीमज्जानुप्रभावन्मणिमुक्तवत्, शिरः = हिरण्यकशिपोरुत्तमाङ्गं,

तस्य शेखरे नूतनभूषणे = भूषणवति स्थिते, शेषपर्यङ्कतोये = शेषवत् स्थितात् पर्यङ्कादुधृत्य, श्रीकराभ्यां = श्रीयुक्तहस्ताभ्याम् । विपङ्कं = दुष्टात्मानं हिरण्यकशिपुम् । अङ्कं आरोप्य = तत्र निधाय । परिमृदुमृदिते अन्तके हिरण्यकशिपुस्थितिघटकतया श्रीहस्ताभ्यां परं परममृदुलीकृत्य इत्यत्र तात्पर्यम् । तादृशस्तम्भशोभां दधान इत्येतद्विशेषणं स्तम्भात् श्रीनृसिंहस्य आविर्भावकालीनजङ्घा-नयोरिति ध्येयम् । ईशस्य जङ्घे ये वयं, रणसरणिकाः रणस्य सरणिका वा तया नः विघ्नं प्रतिबन्धकं निघ्नतां स्मेति वाक्यसम्बन्धः ॥ १४ ॥

सौन्दर्यं सौकुमार्यं बलमतिबहुलं तेजओजःप्रताप-
स्तारुण्यं चेत्यमीषामहमहमिकयेवातिसम्बाधयोगात् ।
अन्तःपूर्तेर्दृढिष्ठावपि परिमृदुलौ पीवरौ दारितारे-
रूरू दूरीक्रियास्तां दुरतिमरमधीमेदुरं मे दुरन्तम् ॥ १५ ॥

**सौन्दर्यमिति** । सौन्दर्यं = अवयवसंस्थानविशेषः । सौकुमार्यं = सुकोमलत्वम् । बलमतिबहुलं – बलं = विचित्रा शक्तिः । तेजः = कान्तिविशेषः । ओजः = पराभिभावकोपायः । प्रतापः = पराक्रमः । तारुण्यं = यौवनम् । चेति = एवंविधानाम् । अमीषां = गुणानाम् । अहमहमिकयेव = परस्पराहङ्कारेणेव । 'अहमहमिका तु सा स्यात्परं योऽहङ्कारः' इत्यभिधानम् । अतिसम्बाधयोगात् – अतिसम्बाधेन = अत्यन्तसंमर्दन, योगात् = सम्बन्धात् । अन्तः = अभ्यन्तरभावे । पूर्तेः = पूर्ण-हेतोः । दृढिष्ठौ = अतिदृढे । तथापि परिमृदुलौ = सुकोमलौ । पीवरौ = अतिपुष्टौ । दारितारेः – दारितः = विदारितः = विदलितः अरिः = शत्रुः येन स तथा, तस्य विष्णोः । ऊरू मे = मम । अधीमेदुरं – अधीः = अनाद्यविद्या, तदेव मेदुरं = सस्याभिवृद्धिसाधकं शुष्कगोमेयादिस्थानीयं यस्य तत् तथा तत् । अत एव दुरन्तं = अपारं दुरितम् । अरं = शीघ्रम् । दूरीक्रियास्तां = अपकुरुताम् । यद्वा, दारितारेः – दारितो = विदारितो अरिः = हिरण्यकशिपुः येन सः श्रीनृसिंहः, तस्य । पूर्ववदुरु-मेदुरं तं अधीमेदुरं दूरीक्रियास्तां इत्यादि योज्यम् ॥ १५ ॥

शुद्धिं बुद्धेर्विदध्याद्गुरुजनकजगद्दीपदीप्तान्तरीया-
श्लिष्यत्कौशेयपीतांशुकवलनलसत्काञ्चनोद्दामकाञ्ची ।
निष्टप्तस्निग्धहेमाचलकटकतटास्फालनास्फालपूर-
त्वङ्गद्वालातपान्तप्रतिघटिततटित्कोटिमालोज्ज्वला नः ॥ १६ ॥

**शुद्धिमिति**। गुरुजनकजगद्दीपदीप्तान्तरीयाश्लिष्यत्कौशेयपीतांशुकवलनलसत्काञ्चनोद्दामकाञ्ची – ृणां = ब्रह्मादीनां, जनकस्य = पितुः, विष्णोः, जगद्दीपवत् = सूर्यवद्दीप्तं = प्रकाशनशीलं यत्, न्तरीयाश्लिष्यत् = अन्तरीयत्वेन श्लेषं कुर्वत्, 'कौशेयं क्रिमिकोशोत्थमि'त्यभिधानम्। तस्य वलनेन ेवेष्टनेन, लसन्ती या, काञ्चनस्य = सुवर्णस्य, उद्दामकाञ्ची = श्रेष्ठमेखला। अत एव निष्टप्त-ग्धहेमाचलकटकतटास्फालनास्फालपूरत्वङ्गद्बालातपान्तप्रतिघटिततटित्कोटिमालोज्ज्वला – निष्टप्तं = दग्धं पुटपाकादिना शोधितं, अत एव स्निग्धं = मृदु यत्, हेम = सुवर्णं, तस्य योऽचलः = मेरुपर्वतः, स्य कटकतटे = नितम्बस्थाने। 'कटकोऽस्त्रीनितम्बोऽद्रेरि'त्यभिधानम्। आस्फालनात् = हस्ततल-ङ्घट्टनात् हेतोः, उत्थितेन = स्फारपूरेण परागसमूहेन, त्वङ्गन् शोभमानो यो, बालातपः = सन्ध्या-लीनकोमलातपः, तस्यान्ते = प्रान्तभागे, प्रतिघटिता = परिसम्बद्धा या, तटित्कोटीनां माला पङ्क्तिः, द्वदुज्ज्वला = देदीप्यमाना। सा = काञ्ची। नः = अस्माकम्। बुद्धेः शुद्धिं = नैर्मल्यं विदध्यात् = म्पादयेदिति।

अथवा– गुरुजनिका = ब्रह्मादिजनिका, जगद्दीपदीप्तान्तरीयाश्लिष्यत्कौशेयपीतांशुका – गद्दीपवत् दीप्तं अन्तरीयं श्लिष्यत् = अन्तरीयत्वेन श्लेषं कुर्वत्, कौशेयपीतांशुका = पीतवस्त्रं यस्याः ा तथा। वलनलसत्काञ्चनोद्दामकाञ्ची – वलनेन धारणेन लसन्ती काञ्चनोद्दामकाञ्ची यस्याः सा था। अत्र तादृशपदत्रयस्य कर्मधारयः। निष्टप्तेत्यत्र पदेऽपि – निष्टप्तं स्निग्धं यद्धेम तस्य योऽचलः र्वतः तस्य कटकतटे = प्रदेशविशेषे, आस्फालनादाघाताद्धेतोः, उत्थितेन स्फारपूरेण = परागसमूहेन, ङ्गत् शोभमानो, यो बालातपस्तस्य अन्ताय परिच्छेदाय अभिभवायेति यावत्। प्रतिघटिता परितः म्बद्धा, या तटित्कोटीनां विद्युत्कोटीनां, माला पङ्क्तिः, तद्वदुज्ज्वला = देदीप्यमाना, ईः = लक्ष्मीः, नः द्धेः शुद्धिं विदध्यात्। उद्दामकाञ्चीत्यत्र 'ई' इति पदच्छेदः॥ १६॥

**निम्नो नाभिः सुवृत्तस्तनुरिति गणना का गुणानामणूनां**
**विष्णोर्विश्वैकनीडं नलिनमिदमुदैदुद्धमद्रोचिरोघम्।**
**यस्माद्यस्मिन्नलीकः श्रुतिभिरभिरुवन् ब्रह्म नारायणाख्यं**
**नित्यानन्दोरुसंवित्सदवयवमदो वेद्यते यत्र मित्रम्** ॥ १७॥

**निम्नो नाभिरिति**॥ विष्णोर्नाभिः निम्नः = गम्भीरः। 'निम्नं गभीरं गम्भीरमि'त्यमरः। सुवृत्तः = ुतरां वर्तुलः। 'वर्तुलं वृत्तलं वृत्तमि'त्यभिधानम्। तनुः = कृशः। 'श्लक्ष्णं दभ्रं कृशं तनुः' इत्यमरः। ति = एवंविधाः महान्तो गुणाः असङ्ख्याताः अस्य सन्तीत्यर्थः। अणूनां = सूक्ष्माणाम्। गुणानां

का गणना = का सङ्ख्या, तेषामप्यनन्तत्वात् । न कोऽपि सङ्ख्याऽस्तीति भावः । तदुपपादयति **विश्वैकनीडमित्यादिना** । यस्मात् = नाभेः सकाशात् । रोचिरोघं – रोचिषां = रश्मीनां, ओघं = समूहम् । उद्गमत् = उद्गिरत्, देदीप्यमानमित्यर्थः । विश्वैकनीडं – विश्वस्य= प्रपञ्चस्य, एकनीडं = मुख्यकुलायस्थानीयम् । कुलायो नाम वृक्षादौ पक्ष्यादिभिः तृणादिभिर्निर्मितः तदावासस्थानविशेषः । 'कुलायो नीडमस्त्रियामि'त्यमरः । इदं = बुध्न्युपारूढम् । नलिनं = पद्मम् । उदैत् = उत्पन्नम् । यस्मिन् नीडे = नलिने । श्रुतिभिः = वेदैः । अभिरुवन् = हुङ्कारं कुर्वन् । अली = भ्रमरः । कः चतुर्मुखः । यत्र = यासु श्रुतिषु । नित्यानन्दोरुसंवित्सदवयवं – नित्यानन्दं = अविच्छिन्नसुखं, उरुसंवित् = परिपूर्णज्ञानं, त एव सन्तो = निर्दोषाः, अवयवाः = करचरणादयः यस्य तत् तथा । मित्रं = सात्त्विकजनस्य बन्धुभूतम् । अदः = श्रुतिप्रस्तुतं, नारायणाख्यं ब्रह्म । वेद्यते = प्रकाश्यते । इत्थं अखिलजग-दावासभूतकमलोत्पादकत्वादस्य नाभेरनन्तगुणत्वं किं वक्तव्यमिति भावः ।

अथवा– यत्र = यासु श्रुतिषु, नित्यानन्दोरुसंवित्सदवयवं मित्रं सज्जनबन्धुभूतं, नारायणाख्यं अदः ब्रह्म, वेद्यते = ज्ञायते, आभिः श्रुतिभिः विष्णोः तनुः = शरीरं नेति नास्तीति, अभिरुवन् = प्रतिपादयन्, ददन्निति यावत्, अलीकः = तुच्छः, न निम्नं = न गम्भीरः, न सुवृत्तः = न शोभन-कर्ता । यस्माद्विष्णोः कारणात् इदं ब्रह्मोत्पत्तिकारणं, अत एव विश्वैकनीडं, रोचिरोघं उद्गमत् नलिनं उदभूत्, अस्मिन्नारायणाख्ये ब्रह्मणि, अणूनां दुरधिगमनानां गुणानां, का गणना अपारत्वादित्यर्थः । नाभिरित्यत्र न आभिरिति पदच्छेदः । नञश्चावृत्तिरिति बोध्यम् ॥ १७ ॥

**मुक्ताग्रण्यावलीनामभिमतवसतिस्तासु चानुप्रविष्टं**
**स्वैरं बन्धेन बद्धं विमलसुखचिता स्वेन चापि स्वतन्त्रम् ।**
**निर्दोषं दोषपुञ्जप्रसविगुणजुषां निर्गुणं सद्गुणाढ्यं**
**सर्गेऽपि ग्रस्तविश्वं तनुमहदुदरं पातु नश्चित्रमित्थम् ॥ १८ ॥**

**मुक्ताग्रण्येति** । मुक्तानां मोक्षप्राप्तानां, अन्यत्र मुक्तामणीनां, अग्रण्यः श्रेष्ठाः, तेषामावल्यः पङ्क्तयः । 'वीथ्यालिरावलिः पङ्क्तिरि'त्यभिधानम् । तासामभिमतवसतिश्च । अत्र चकारोऽप्यर्थः विरोध-स्फोरकः, अभीष्टावासस्थानमपीहार्थः । तासु = मुक्ताग्रण्यावलीषु । अनुप्रविष्टं = प्रतिव्यक्त्यन्तःप्रविष्टं, मुक्तानामपि नियामकत्वादिति भावः । विमलसुखचिता = निर्दोषसुखज्ञानात्मकेन । अत एव स्वेन = स्वरूपभूतेन । बन्धेन = उदरवेष्टनालङ्कारविशेषेण । स्वैरं = यथेष्टम् । बद्धमपि = प्रथितमपि । स्वतन्त्रं = परानधीनव्यापारकम् । निर्दोषमपि = दोषरहितमपि । गुणजुषां = सत्त्वादिगुणभाजां जनानाम् ।

षपुञ्जप्रसवि = दोषाणां पुञ्जं = राशिं प्रसूते इति दोषपुञ्जप्रसवि । निर्गुणमपि = सत्त्वादिगुणरहित-म । सद्गुणाढ्यं = ज्ञानानन्दादिनिर्दिष्टगुणोपेतम् । सर्गेऽपि = गर्भे स्थितसत्त्वानां ःकरणलक्षणे सर्गे सत्यपि । ग्रस्तविश्वं = ग्रस्तं गर्भे निहितं, विश्वं चेतनाचेतनात्मकप्रपञ्चोपेतं, था । तन्वपि = श्लक्ष्णमपि । महत् = अपरिच्छिन्नपरिमाणम् । इत्थं = उक्तरीत्या । चित्रं = समाविष्टपरस्परविरुद्ध-मुक्तावासत्त्वनदनुप्रविष्टत्वाद्युपलक्षितानन्तगुणपूर्णत्वेन अदृष्टचरत्वात् श्चर्यकरं, विष्णोरुदरं अस्मान् पातु = पालयतु ॥ १८ ॥

लक्ष्म्या वक्षःश्रितायाः प्रतिकृतिभिरिहाध्यासनेनोल्लसन्त्या-
लोलन्त्यान्दोलिकेव क्षणरुचिरुचिरै रञ्जितार्धा तदुस्रैः ।
मुक्तामालाविमुक्तद्रुहिणगणतनुर्नित्यमुक्तस्य कण्ठे
भक्त्यासक्ता विमुक्त्यै भवतु भवभयाद् भूयसो भाविता नः॥ १९ ॥

**लक्ष्म्या इति** । नित्यमुक्तस्य भगवतः । कण्ठे भक्त्या आसक्ता = आ समन्तात् सलग्ना । त्यमुक्तस्य वक्षःश्रितायाः = वक्षःस्थलमाश्रितायाः । लक्ष्म्याः = इन्दिरादेव्याः । प्रतिकृतिभिः = तिबिम्बैः । इह = मुक्तामालायाम् । अध्यासनेन = उपवेशनेन । आन्दोलिकेव = शिबिकेव इति प्रेक्षा । उल्लसन्ती = शोभमाना । आलोलन्ती = आनाभि आलम्बमाना । क्षणरुचिरुचिरैः = णरुचिवत् = विद्युद्वत्, रुचिरैः = सुन्दरैः । तदुस्रैः = तस्याः लक्ष्म्याः, उस्रैः = किरणैः । 'किरणोस्र खांशु गभस्ती'त्यभिधानम् । रञ्जितार्धा – रञ्जितः = अरुणीकृतः, अर्धं = पुरोभागो यस्याः सा ा । विमुक्तद्रुहिणगणतनुः – विमुक्ताः = विशिष्टमुक्तिं प्राप्ताः ये द्रुहिणाः = चतुर्मुखाः, तेषां गणाः समूहा एव, तनूः यस्याः सा तथा । तदात्मिकेत्यर्थः । मुक्तामाला = मौक्तिकमाला । भाविता सती भक्त्योपासिता सती । नः = अस्माकम् । भूयसः = अधिकतरात् । भवभयात् = संसारभयात् । मुक्त्यै = मोक्षाय । भवतु ॥ १९ ॥

ध्येयं धीरैश्चिरं तद्विकटमणिशिलामण्डलोद्भासि वक्षो
यस्मिन्विस्मापयन्ती भुवनमतुलया लीलयोल्लासिनी श्रीः ।
यस्या आस्येन्दुकान्त्या विमलविततया न्यक्कृतश्चक्रपाणेः
प्रोद्यत्प्रद्योतनौघं द्युतिभिरभिनुदन् कौस्तुभः कण्ठवेषः ॥ २० ॥

**ध्येयमिति ।** विकटमणिशिलामण्डलोद्भासि – विकटाः = उत्कटाः, विशाला या मणिशिला = रत्नशिला, तस्याः मण्डलवत् = बिम्बवत्, उद्भासितुं – शीलमस्यास्तीति उद्भासि । ताच्छील्ये अणि सिप्रत्ययः । अतिशोभमानशीलमित्यर्थः । चक्रपाणेः = विष्णोः । वक्षः = उदरस्थानम् । धीरैः = ज्ञानिभिः । चिरं = सर्वदा । ध्येयं = ध्यातुं योग्यम् । यस्मिन् वक्षसि । अतुलया = असमानया । लीलया = क्रीडया । भुवनं = समस्तं जगत् । विस्मापयन्ती = आश्चर्यं प्रापयन्ती । उल्लासिनी = उत्कृष्टविलासवती । श्रीः = लक्ष्मीः । आस्ते । यस्याः = लक्ष्म्याः । विमलविततया = निष्कलङ्कत्वेन विस्तृतया । विमलेति भावप्रधानो निर्देशः । आस्येन्दुकान्त्या = मुखचन्द्रप्रभया । प्रोद्यत्प्रद्योतनौघं – प्रकर्षेणोदयं गतानां प्रोद्यतां, प्रद्योतनानां दिनकरबेलाबिम्बानां, ओघं = समूहम् । द्युतिभिः = स्वकान्तिभिः । अभिनुदन् = तिरस्कुर्वन् । कण्ठवेषः = कण्ठाभरणभूतः । कण्ठस्य सुन्दरता न कौस्तुभप्रयुक्ता, अपितु स्वाभाविकीति सूचनाय वेषपदमिति ध्येयम् । कौस्तुभः = समुद्रमथन-सम्भवो रत्नविशेषः । न्यक्कृतः = तिरस्कृत इति ॥ २० ॥

**सर्वाङ्गीणोऽङ्गराजः परिमलसुरभिः सुन्दरश्चन्दनाद्यै-**
**र्मुक्तामाला च लक्ष्मीः स्वयमतिललिता रत्नराजश्च राजन् ।**
**निस्तापं नित्यभद्रं स्वरससुरभि च श्रीपतेर्बाहुमध्यं**
**लोकप्रेक्षाभयाद्वा वृणुत वरगुणं स्वात्मशोभेच्छया वा ॥ २१ ॥**

**सर्वाङ्गीणेति ।** चन्दनाद्यैः = हरिचन्दनप्रमुखैः परिमलद्रव्यैः । सुन्दरः = मनोहरः । परिमलसुरभिः = परिमलेनामोदेन, सुरभिः शोभनगन्धयुक्तः । सर्वाङ्गीणः = सर्वशरीरव्यापी । अङ्गराजः = अनुलेपन-विशेषः । स्वयमतिललिता = स्वत एव अतिमनोहरा । मुक्तामाला = मौक्तिकस्रक् । लक्ष्मीः च = इन्दिरादेवी च । राजन् = शोभमानः । रत्नराजश्च = कौस्तुभरत्नश्रेष्ठश्च । ते = अङ्गराजादयः । निस्तापम् = निर्गतस्तापो यस्मात्तत्तथा तत् । नित्यभद्रं = सर्वदा मङ्गलात्मकम् । स्वरससुरभि = स्वरसेन स्वमहिम्नैव, तादृशशक्त्यैवेति यावत् । सुरभि = सुगन्धि । वरगुणं = वराः उत्तमाः, गुणाः यस्य तत्तथा तत् । श्रीपतेः = लक्ष्मीकान्तस्य विष्णोः । बाहुमध्यं = वक्षःस्थलम् । लोकप्रेक्षाभयाद्वा = अस्माभि-रनावृतं चेल्लोकस्य कुजनस्य प्रेक्षा दृष्टिपातः स्यादिति भयाद्वा । स्वात्मशोभेच्छया वा अस्माभिरपि एतत्सङ्गमेन स्वात्मानां शोभा सम्पादनीयेतीच्छया वा । अवृणुत = आवृतवन्त इति ॥ २१ ॥

दीर्घाः पीनाः सुवृत्ता महितमणिमयैर्भूषणैर्भासुरा ये
लोकातीतास्त्रिलोकीपितुरतिरुचिराश्चक्रशङ्खादिचिह्नैः ।
आक्रान्ताः कान्तिमन्तः प्रियतमकमलाभोगभाजोभुजास्ते
भूम्नो भक्तान्विभूतिं स्वसदृशमभया भाजयन्तो जयन्ति ॥ २२ ॥

**दीर्घेति** । दीर्घा = आयताः । पीनाः = पुष्टाः । सुवृत्ताः = सुतरां वर्तुलाः । महितमणिमयैः = हिताः पूजिताः ये मणयः रत्नानि, तन्मयैः = तत्खचितैः । भूषणैः = कटकावलङ्कारैः । भासुराः = ाशनशीलाः । अतिरुचिराः = अत्यन्तमनोहराः । चक्रशङ्खादिचिह्नैः = चक्रं च शङ्खश्च तावादौ येषां ादीनां तानि यानि चिह्नानि भगवदसाधारणचिह्नानि लक्षणानि तैः । 'चिह्नं लक्ष्म च लक्षणं' यभिधानम् । आक्रान्ताः = संयुक्ताः । कान्तिमन्तः = शोभावन्तः । अभयाः = भयरहिताः । यतमकमलाभोगभाजः – प्रियतमाया = अत्यन्तं प्रियायाः, कमलायाः = श्रीदेव्याः, भोगं = शरीरं, जन्ति आश्लिषन्तीति ते तथोक्ताः । अत एव, लोकातीताः = लोकमतिक्रम्य वर्तमानाः लोक-लक्षणा इत्यर्थः । ये । भूम्नो = व्यापकस्य । त्रिलोकीपितुः = जगज्जनकस्य, विष्णोः । भुजाः = हवः ते, भक्तान् विभूतिं = सम्पदम् । स्वसदृशमिति क्रियाविशेषणम् । स्वमहिमानुरूपं यथा भवति ा । भाजयन्तः = प्रापयन्तः सन्तः । जयन्ति = सर्वोत्कृष्टत्वेन वर्तन्ते इति ॥ २२ ॥

दह्यादंहांस्यसह्यान्युपहतमिहिरप्रग्रहोग्रांशुचक्रं
दद्यात्सद्यः सुविद्याः विधुधवलरुचिः प्राश्चितः पाञ्चजन्यः ।
हृद्या विद्या विनुद्यादितिसुतदलिनी नो गदा दुर्मदारेः
पद्मं पद्मामुखश्रीनिशमनमुकुराकारि कुर्यात् सुखानि ॥ २३ ॥

**जह्यादिति** । दुर्मदारेः – दुष्टो मदो येषां तेषां असुराणां = अरेः शत्रोः, विष्णोः । उपहतमिहिर-ाहोग्रांशुचक्रं – उपहताः = तिरस्कृताः, मिहिरस्य = सूर्यस्य । 'विकर्तनार्कमार्ताण्डमिहिरारुणपूषण' यमरः । (तस्य) प्रग्रहाः किरणाः यैस्ते तथोक्ताः । उग्राः = रौद्राः, अंशवः किरणाः, यस्य तत् ा । चक्रं = सुदर्शनम् । नः असह्यानि = सोढुमशक्यानि । अंहांसि = दुरितानि । दह्यात् = मीकुर्यात् । जह्यादिति पाठे त्याजयेदित्यर्थः । ओहाक् त्याग इति धातुः । विधुधवलरुचिः = धुवत् = चन्द्रवत्, धवला = शुभ्रा, कान्तिर्यस्य तथा । पाञ्चजन्यः = शङ्खः । प्राञ्चितः = सुपूजितः ् । सद्यः, पूजासमय एव सुविद्याः = शोभनविद्याः । दद्यात् । हृद्या = स्वज्ञानमनोहरा ।

दितिसुतदलिनी = असुरसंहारिणी । गदा = कौमोदकी । अविद्याः = दुर्विद्याः । विनुद्यात् = निराकुर्यात् । पद्मामुखश्रीनिशमनमुकुराकारि — पद्मायाः = श्रीदेव्याः, मुखश्रीनिशमने = मुखकान्तिलोकने, मुकुरस्य = दर्पणस्य आकार इवाकारो यस्य तत्तथा । पद्मं = कमलम् । सुखानि कुर्यादिति ॥ २३ ॥

**उन्नम्रस्कन्धपर्याकलनपरिलसच्छश्वदम्लानमाला**
**व्यालोलद्दिव्यदीव्यन्मधुकरनिकरानूक्तिकोलाहलो नः ।**
**दूरीकुर्यादविद्याकृतमतिविकृतिं भूषिताकल्पजात-**
**श्रीबाह्वाश्लेषवेषाच्युतगलगलितो वेदनादो गभीरः ॥ २४ ॥**

**उन्नम्रेति** । उन्नम्रौ = उन्नतौ, यौ स्कन्धौ = अंसौ, तयोः पर्याकलनेन = परितो बन्धनेन, परिलसन्ती = परितः शोभमाना, या, शश्वत् = नित्यं, अम्लाना = अक्षीणहर्षा, या माला = वैजयन्ती, तस्यां व्यालोलन्ती — वि = विविधप्रकारेण आ = समन्तात् लोलन्ती = सञ्चरन्ती, दिव्याः = अलौकिकाः, ये दीव्यन्मधुकराः = क्रीडद्भ्रमराः, तेषां निकरस्य = समूहस्य, अनुक्त्या = अनुवचनेन, कोलाहलः = कलकलीकृतः । 'कोलाहलः कलकल' इत्यमरः । भूषितं = अलङ्कृतं, आकल्पानां = कटककेयूराद्याभरणानां जातं याभ्यां तौ तथाभूतौ यौ, श्रियः = लक्ष्मीदेव्याः, बाहू = भुजौ, ताभ्यां यो आश्लेषः = परिरम्भः, सैव वेषः अलङ्कारो यस्य तत्, तथाभूतो यः, अच्युतस्य = विष्णोः, गलः = कण्ठः । 'कण्ठे गले च ग्रीवायामि'त्यभिधानम् । तस्माद् गलितः = निर्गतः । गभीरः = गम्भीरः । वेदनादः = वेदध्वनिः । नः = अस्माकम् । अविद्यया = अज्ञानेन, कृता = आपादिता या मतेः = बुद्धेः, विकृतिः = विकारः तम् । दूरीकुर्यादिति ।

**पूर्णानन्तामलेन्दुप्रकरमतिशयानस्य कान्त्या मुखेन्दोः**
**सौभाग्यं भाग्यदेव्याः स्वभिमतकमितुर्वर्ण्यते किं विविच्य ।**
**यत्संस्मृत्यैव तापान् प्रजहति जनता यत्र सङ्गादसङ्गे**
**माङ्गल्याङ्ग्या मनोज्ञं मुखकमलमभून्मङ्गलैकप्रसूतिः ॥ २५ ॥**

**पूर्णेति** । कान्त्या = शोभया । पूर्णानन्तामलेन्दुप्रकरं — पूर्णा = षोडशकलोपेताः, ये अनन्ताः, अमलाः = कलङ्करहिताः, इन्दवः = चन्द्राः तेषां प्रकरं = समूहम् । अतिशयानस्य = अतिक्रम्य वर्तमानस्य, तदपेक्षया अनन्तगुणितकान्त्युपेतस्य । भाग्यदेव्याः = लक्ष्म्याः । स्वभिमतकमितुः =

नरामभीष्टभर्तुः भगवतः । मुखेन्दोः सौभाग्यं = मनोहरत्वम् । विविच्य = ईदृशमिति विवेकं न्या । किं वर्ण्यते ? अनुक्तासिद्धत्वात्तु तत्र वर्णनीयमेवेत्यर्थः । तद्विशिनष्टि **यत्संस्मृत्येति** । संस्मृत्यैव = यस्य मुखेन्दोः, संस्मृत्यैव स्मरणमात्रेण । जनता = जनसमूहः । समूहार्थे ताल्ययः । तापान् = आध्यात्मिकादित्रिविधसन्तापान् । प्रजहति = त्यजन्ति । असङ्गे = दोषसङ्गते । यत्र = यस्मिन् भगवन्मुखेन्दौ । सङ्गात् = सम्बन्धात् । माङ्गल्याङ्ग्याः = शोभमानगात्र्याः क्ष्म्याः । मनोज्ञं = सुन्दरम् । मुखकमलं = वदनारविन्दम् । मङ्गलैकप्रसूतिः – मङ्गलानां = ल्याणानां, एकप्रसूतिः मुख्यप्रसवित्री, अनेन शेषत्वेन सम्पादकमित्यर्थः । अभूदिति ॥ २५ ॥

**वन्दे विष्णोर्मुखाब्जं मणिमकरजलत्कुण्डलोल्लासिगण्डं**
**चारुभ्रून्नम्रनासं सरसिजनयनं ताम्रकम्राधरोष्ठम् ।**
**उन्मीलत्कुन्दवृन्दद्युतिमतिशयतश्चोल्लसन्त्या हसन्त्या**
**मज्जन्त्या वाऽधरोष्ठारुणिमनि रुचिरं दन्तपङ्क्त्यन्तकान्त्या ॥२६॥**

**वन्देति** । मणिमकरचलत्कुण्डलोल्लासिगण्डं = मणिखचिते ये मकराकारे, चलत्कुण्डले चञ्चलर्णाभरणे, ताभ्यामुल्लासिनौ शोभनशीलौ, कपोलौ यस्मिन् तत्तथा । उन्नम्रनासं = उन्नम्रा उन्नता, नासासिका यस्मिन् तत्तथा तत् । 'स्याद् घ्राणं गन्धवहा घ्रोणा नासा च नासिके'त्यमरः । सरसिजनयनं सरसिजे इव नयने = नेत्रे यस्मिन् तत्तथा तत् । ताम्रकम्राधरोष्ठं = ताम्रवत् लोहविशेषवत् कम्रौ मनीयौ, अधरोष्ठौ यस्मिन् तत्तथा तत् । उन्मीलत्कुन्दवृन्दद्युतिं = उन्मीलन्ति विकसन्ति, यानि न्दानि = कुन्दकुसुमानि, तेषां वृन्दस्य = समूहस्य, द्युतिं = कान्तिम् । अतिशयतः = अतिशयेन । सन्त्या = उपहासं कुर्वत्या । किञ्च अधरोष्ठारुणिमनि = अधरोष्ठयोः अरुणिमनि रागे । मज्जन्त्या = वगाहनं कुर्वत्या । अत एव उल्लसन्त्या = उच्चैः विराजमानया । दन्तपङ्क्त्यन्तकान्त्या = दन्तानां, ङ्क्तिः = श्रेणी, तस्याः अन्तकान्त्या = अग्रशोभया । रुचिरं = मनोहरम् । विष्णोः मुखाब्जं = दनारविन्दम् । वन्दे = नमस्करोमि, स्तौमि चेति ॥ २६ ॥

**आनन्दं सन्दधानो हृदिमदमदयं मन्दयन्निन्द्रियाणां**
**तन्वन्दान्तिं दुरन्तं दुरितदरदुहं द्रावयन् दोषराशिम् ।**
**कैवल्यं द्योतयन् स्वं दिवसमनुसतां दासतां दर्शयन्नो**
**मौकुन्दो मन्दहासो दिशतु कृतदयो वन्दितः स्वापरोक्ष्यम् ॥२७॥**

**आनन्दमिति** । आनन्दं = सुखम् । सन्दधानः = आदधानः । हृदि = हृदये । मदं = अहङ्कारम् । अदयं = दयारहितं यथा भवति तथा । मन्दयन् = स्वल्पीकुर्वन्, विनाशयन्नित्यर्थः । इन्द्रियाणामादीनाम् । दान्तिं = निग्रहम् । तन्वन् = विस्तारयन् । दुरन्तं = अन्तरहितम् । दुरितदरदुहं – दुरितं = पापं, दरः = भयं, तौ दोग्धीति तथा । दोषराशिं = दोषसमूहम् । द्रावयन् = अपक्रमयन् । स्वं = स्वकीयम् । कैवल्यं = मोक्षम् । द्योतयन् = प्रकाशयन् । दिवसमनु = प्रतिदिवसम् । अनुः कर्मप्रवचनीयः । सतां = सज्जनानां दासतां = सेवकतां, भृत्यत्वमिति यावत् । दर्शयन् = अनुभावयन् । कृतदयः = कृता दया, निरुपाधिकपरदुःखप्रहाणेच्छा येन स तथोक्तः । मौकुन्दः = मुकुन्दसम्बन्धी । तस्येदमिति अणप्रत्ययः । मन्दहासः = मन्दस्मितम् । वन्दितः सन् = नमस्कृतः सन् । ततश्च । नोऽस्माकम् । स्वापरोक्ष्यं = स्वस्य निजस्य, आपरोक्ष्यं प्रत्यक्षज्ञानम् । अपरोक्षज्ञानविषयत्वमित्यर्थः । दिशतु = ददातु । भक्तेषु स्वत एवंविधानुग्रहकर्ता भगवान् अस्माकमात्मस्वरूपं दर्शयत्वित्यर्थः ॥ २७ ॥

**सुव्यक्तोद्रिक्तभक्तिप्रसरभरनमन्नाकिलोकावलोक-**
**प्रोद्यत्प्रौढानुकम्पापरवशविशदव्यञ्जितानुस्मितेन्दोः ।**
**निर्यन्नीरोधनानामुखसुखरमयूखोत्करोत्काश्यमानैः**
**साकं पीयूषपूरैः स्नपयतु सुजनैर्मां जगज्जन्मभूमिः ॥ २८ ॥**

**सुव्यक्तेति** । जगज्जन्मभूमिः = जगतः प्रपञ्चस्य, जन्मभूमिः = उत्पत्तिस्थानभूतो विष्णुः । सुव्यक्ताः = सुतरां व्यक्ता, स्पष्टीभूता, या उद्रिक्ता = उत्कृष्टा, भक्तिः = स्नेहविशेषलक्षणा, तस्या प्रसरः प्रसरणं, उपचय इति यावत्, तस्य भरेण नमन्तः = गौरवेण नम्रीभवन्तः नमस्कुर्वत इति यावत्, ये नाकिलोकाः = सुरजनाः । 'लोकस्तु भुवने जन' इत्यभिधानम् । तेषामवलोकेन = दर्शनेन, प्रोद्यन्ती = प्रकर्षेणोदयं प्राप्नुवन्ती, प्रौढा = भक्ताभिमतसाधनक्षमा या, अनुकम्पा = निरुपधिकपरदुःखप्रहाणेच्छेति यावत् । 'कृपा दयाऽनुकम्पा स्यादि'त्यमरः । तया परवशः = परतन्त्रः, परमस्वतन्त्रस्य तस्य केवलं भक्तानुकम्पाप्रयुक्तमेव पारतन्त्र्यं न तु सामर्थ्याभावप्रयुक्तमित्यर्थः । तादृशो यो विशदः = निर्मलः, व्यञ्जितः अभिव्यक्तिं प्रापितः = अनुस्मितेन्दुः, मन्दहासाख्यचन्द्रः, तस्मात् सकाशात् । निर्यतः = निर्गच्छन्तः, निर्गतः रोधः प्रतिरोधो येभ्यस्ते तथा अप्रतिहता इत्यर्थः, नानामुखाः = सर्वतोमुखाः । सुखं रान्ति = ददाति ते सुखराः । रा दान इति धातोः, आतोनुपसर्गे क इति कप्रत्ययः । सुखप्रदा इति यावत् । ये मयूखाः = किरणाः, तेषामुत्करेण = समूहेन, उत्काश्यमानैः =

ष्कास्यमानैः निःसार्यमाणैरित्यर्थः । पीयूषपूरैः = अमृतसमूहैः । 'पीयूषममृतं सुधे'त्यभिधानम् । म् । सुजनैः = सत्पुरुषैः । साकं = सह, 'साकं सत्रा समं सहे'त्यमरः । स्नपयतु = स्नानं कारयतु। पासिन्धुः भगवान् निजमन्दहासामृतबिन्दुमेकेन सज्जनवृन्दमानन्दयन्त्विति भावः ॥ २९ ॥

**यस्मादास्माकमित्रादमितमहिमतो हृष्यतो रुष्यते वा**
**लोकाः पुष्यन्ति शुष्यन्त्यपि खलु निखिलाः साकमाकं परस्य ।**
**सोऽयं सोपानभूमिर्विधिभवविभवोद्भावयित्र्याः सवित्र्याः**
**स्रष्टॄणां दृष्टियाने जयति जनिमृतेर्मोक्षहेतुः कटाक्षः ॥ २९ ॥**

**यस्मादिति** । अमितमहिमतः = अपरिच्छिन्नसामर्थ्यवतः । आस्माकमित्रात् = अस्मदीयत्रात् । यस्मात् = कटाक्षात् । हृष्यतः = हर्षं गच्छन्तः । रुष्यतो वा = रोषं गच्छतो गमयतः । आकं चतुर्मुखपर्यन्तं, 'को ब्रह्मणी'त्यभिधानम् । निखिला अपि = समस्ता अपि । लोकाः = नाः । साकं = सहैव, एकसमयावच्छेदेनैव यथायोग्यं फलं ददातीति भावः । पुष्यन्ति = पुष्टिं वृद्धिं यान्ति । शुष्यन्ति = शोषं = नाशं प्राप्नुवन्ति । हृष्यतः पुष्यति, रुष्यतः शुष्यन्तीति यथाक्रमन्वयः । खलु = प्रसिद्धौ । दृष्टियाने = दृष्टिपाते सति, कटाक्षलेशमात्रपाते सतीत्यर्थः । विधिभवभवोद्भावयित्र्याः = विधिश्चतुर्मुखः, भवो महादेवः, तयोः विभवं = सत्यलोकाधिपत्यकैलासाधियादिलक्षणैश्वर्यं, उद्भावयित्र्याः = सम्पादयित्र्याः 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं' इति तेः । स्रष्टॄणां = ब्रह्मादिजगत्सृष्टिकर्तॄणाम् । सवित्र्याः = प्रसवित्र्याः, जनन्याः लक्ष्म्याः सकात् । परस्य = उत्तमस्य विष्णोः 'अव्यक्तात्पुरुषः पर' इति श्रुतेः, 'उत्तमः पुरुषस्त्वन्य' इति चनाच्च । जनिमृतेः = जनसहितमरणात्, जननमरणाभ्यामिति यावत् । संसारादिति यावत् । तयोरेव सारपदार्थत्वात् । मोक्षहेतुः = अपवर्गप्राप्तिहेतुः । सोपानभूमिः = सोपानमार्गभूतः । यद्वा स्रष्टॄणां ह्मादीनां सवित्र्याः = श्रीदेव्याः दृष्टियाने = कटाक्षमोक्षे सति जनियुतमृतेः सकाशात् मे हेतुभूतः सोपानमार्गभूतः सोऽयम् । 'कटाक्षोऽपाङ्गदर्शनमि'त्यभिधानम् । जयति = उत्कृष्टो वर्तते । धातुराद्येऽर्थेऽकर्मक इति ध्येयम् ॥ २९ ॥

**कृष्णात्मानः सुवक्रा विलुलिततिलका लोकभर्तुः परस्त्री-**
**वक्त्रामर्शाद्विवर्णा गुरुपितुरलका उत्तमाङ्गाश्रया नः ।**
**ध्याताश्चेतोविशुद्धिं विदधति तदिदं नैव चित्रं नमस्त-**
**चूडारत्नाय रम्यद्युतिनिकरसमापूरिताशामुखाय ॥ ३० ॥**

**कृष्णात्मान इति**। कृष्णात्मानः = कृष्णवर्त्माः, कृष्णः = वासुदेवः आत्मा = स्वरूपं येषां ते तथा। सुवक्राः = सुतरां कुटिलाः। विलुलिततिलकाः – विलुलितं = परिमृष्टं विरलीकृतं, तिलकं यैस्ते तथा, ललाटाविलम्बिन इत्यर्थः। परस्त्रीवक्त्रामर्शात् – पराः = उत्तमाः, स्त्रियः भगवतो भोगयोग्याः, अप्सरोगणाः, तासां वक्त्रस्य = मुखस्य, आमर्शात् = सम्बन्धात्, परा = सर्वोत्तमा स्त्री = लक्ष्मीः तस्य वक्त्रस्य आमर्शात् = सम्बन्धादिति वा। विवर्णाः = विशिष्टो वर्णो येषां ते तथा। गुरुपितुः = गुरूणां = महतां, ब्रह्मादीनां, पितुः = जनकस्य। लोकभर्तुः – लोकानां = चतुर्दशभुवनानां भर्तुः = धारणपोषणादिकर्तुः स्वामिनो विष्णोः। उत्तमाङ्गाश्रयाः – उत्तमाङ्गं = शिरः आश्रयः = आधारो येषां ते तथा। अलकाः = चूर्णकुन्तलाः। ध्याताः सन्तः = स्मृतमात्राः। नः = अस्माकम्। चेतोविशुद्धिं = चेतसोऽन्तःकरणस्य विशुद्धिं = नैर्मल्यम्। विदधति = कुर्वतीति यावत्। तदिदं नैव चित्रम्। कृष्णवर्णवत्त्वादिविशेषणविशिष्टानामपि अलकानां भगवदुत्तमाङ्गाश्रितत्वात् कृष्णस्वरूपत्वाच्च, स्मृतिमात्रेण अस्मदन्तःकरणशुद्धिप्रदत्वं नैवाश्चर्यमिति भाव इत्यर्थः। रम्यद्युतिनिकरसमापूरिताशामुखाय = रम्याणां मनोहराणां, द्युतीनां = कान्तीनां निकरैः = समूहैः, समापूरितानि = सम्यक्परिपूरितानि, आशामुखानि = दिङ्मुखानि येन स तथा तस्मै। चूडारत्नाय = तस्य हरेः चूडारत्नाय = चूडामणये। नम इति। शिष्टं स्पष्टम्॥ ३०॥

*॥ इति श्रीमद्विजयीन्द्रतीर्थविरचिता विष्णुस्तुतिटीका समाप्ता॥*

*श्रीकृष्णार्पणमस्तु॥*

*(॥ शके १५६२ विक्रमसंवत्सरे दक्षिणायने वर्षऋतौ भाद्रपदमासे कृष्णपक्षे तृतीयायां पुण्यतिथौ विष्णुस्तुतिटीका समाप्ता॥)*

★ ★ ★

**स्वान्ते स्वान्ते वसन्त्या विहितकलिमलोपारमाया रमाया**
**भर्तुर्भर्तुर्गुणानां स्थिरतरतरुणश्रीधराया धराया।**
**स्वोरुं स्वोरुर्गुरूणामपि मम कृतसम्मोददानो दधानो**
**दद्याददद्याच्युतो मे सुमतिमिह सतां सम्प्रदायप्रदाय ॥ ३१॥**

**स्वान्तेति**। अच्युतः = भगवान्। मे = मह्यम्। सम्प्रप्रदायप्रदाय = तत्त्वविद्यासम्प्रदायस्य प्रदानकर्त्रे (मह्यं)। अद्य सुमतिं = सुबुद्धिम्। दद्यात्। कीदृशः – रमायाः = देव्याः। गुणानां =

ऐश्वर्यादीनाम् । भर्तुः = धारकस्य । भर्तुः = स्वस्वामिनः हरेः स्वान्ते = समीपे । स्वान्ते = चेतसि ; हृदि । वसन्त्याः । विहितकलिमलोपारमायाः – विहितः = कृतः , कलिमलोपारमः = लिनिमित्तमलस्य दुरितादेः उपारमः = अवसानं यया तस्याः । स्वोरुं = स्वं = आत्मीयं ऊरुं न्दरश्च । आसमन्तादुरुः गुरुश्चेति । स्वत आत्मनैव उरुः न चेतरसाधनेन तस्योरुत्वमिति वा । ानीय । 'आत्मात्मीयधनेषु स्व' इति स्वशब्दस्योभयत्रापि वृत्तेः । दधानः = संहननादिसेवार्थे तरन् । धरायाः = भूमिदेव्याः । स्थिरतरतरुणश्रीधरायाः = स्थिरतरां दृढतरां, तरुणश्रियं यौवनशोभां ते । अत्रापि मम गुरूणां = श्रीमदाचार्याणामपि ॥ कृतसम्मोददानः = कृतं सम्मोददानं अनेनेति । स सुमतिं वितरत्विति ।

**पूर्णप्रज्ञस्य साक्षादपि निजगुणतः श्रीमदानन्दतीर्थ-**
**प्रज्ञाचार्यस्य शिष्यस्तवमिति कृतवांस्तत्प्रसादावलम्बात् ।**
**तेन त्रैविक्रमेण प्रणिहितकरणः स्तौति यस्तं सुभक्त-**
**स्तस्मै स्वामी रमेशः प्रदिशतु विशदां दुष्टिमिष्टां च भक्तिम् ॥३२॥**

अथ स्तोत्रकर्ता भगवान्स्तोत्रमुपसंहरन् आचार्यवर्यचूडामणिः सकलकविकुलतिलको यः वादिवारणदुर्गर्वमस्तकविदारणकण्ठीरवो निरवद्या विद्या ब्रुतिता समस्ता येन सः अस्मत्परमगुरुः त्वदीपिकाप्रणेता स्तोत्रावसाने स्वनामप्रख्यापनपुनःसरं फलश्रुतिं चाह **पूर्णप्रज्ञस्येति** । पूर्णप्रज्ञस्य = र्णप्रज्ञनाम्नः । ननु एतन्नामास्मिन्साङ्केतिकमाहोस्विद्येन केनापि मानेन सिद्धमिति । नेतदस्मिन्भगवति ाकवत्साङ्केतिकमात्रं किन्तु 'दशप्रमतिं जनयन्त योषणः', 'दशेति सर्वमुद्दिष्टं पूर्णं स च इहोच्यते । ज्ञाप्रमतिलद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः' इत्यादि प्रमाणसिद्धमेव । प्रधानवायोरवतारात्मकस्यास्य भगवतः देतत् ।

ननु यदिदमेवं प्रमाणसिद्धं तत्र तथाप्यौपचारिकमेतत्, साक्षात्प्रत्ययहेतुगुणराहित्यादित्यत आह **ाक्षान्निजगुणतोऽपि** । तस्य नाम्नः मुख्यभगवत्प्रवृत्तिहेतुभूतात् । गुणादपि तत्कथा र्णप्रज्ञा । 'अश्रुतप्रतिभा यस्य, श्रुतिस्मृत्यविरोधिनी । विस्तृतं नृषु जातं च तं विद्याद्देवसत्तममि'ति तिसिद्धा । सा प्रत्यक्षत एवास्मिन्भगवति सर्वलोकैरनुभूयते च । अतो न केवलं नामत एव पूर्णप्रज्ञत्वं न्तु अर्थतोऽपीत्यर्थः । श्रीमदानन्दतीर्थप्राज्ञाचार्यस्य = श्रीमदानन्दतीर्थभगवतः प्राज्ञाचार्यस्य । ज्ञानां = वामदेवादीनां अपि आचार्यस्य शिष्य इत्यर्थः । स्तवं कृतवान् = चकार । तत्प्रसादा- लम्बात् – तस्य = भगवतः प्रसादाधारात् । तेन त्रैविक्रमेण = त्रिविक्रमाचार्यकृतत्वात् । यः

प्रणिहितकरणः – तस्मिन्भगवति प्रणिहितानि प्रकर्षेणाहितानि करणानि मनआदीन्द्रियाणि अनेनेति सुभक्तः तं भगवन्तं स्तौति । तस्मै भक्ताय स्वामी रमेशः श्रीपतिः विशदां दृष्टिं, विद्यां क्रमेणामलां अपरोक्षदृष्टिं च, इष्टां मुक्तिं च प्रदिशति = ददाति ॥ ३२ ॥

*॥ इति श्रीरामाचार्यकृतविष्णुस्तुतिव्याख्यानसुरूपामृतपद्धतेरुद्धृता अन्तिमश्लोकद्वयस्य व्याख्या समाप्ता ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

## श्रीविजयीन्द्रभिक्षुविरचिता

# न्यायामृतोदाहृतजैमिनीयन्यायमाला

॥ श्री वेदव्यासाय नमः ॥

## श्रीविजयीन्द्रभिक्षुविरचिता

# न्यायामृतोदाहृतजैमिनीयन्यायमाला

**न्यायामृतोदाहृतजैमिनीयन्यायान् पृथग् व्याकुरुते सहाङ्गैः ।**
**न्यायाध्वगः श्रीविजयीन्द्रभिक्षुः न्यायाध्वनीहाल्पधियां प्रवृत्त्यै ॥**

## 1. उच्चैस्त्वादीनां वेदधर्मताधिकरणम् – III-3-1

**तृतीयाध्याये तृतीयपादे चिन्तितम्— 'श्रुतेः जाताधिकारः स्यात्'** (III 3-1-1)* **इत्यत्र योतिष्टोमे [१]'प्रजापतिरकामयत प्रजाः सृजेयेति । स तपोऽतप्यत । तस्मात्तेपानात् त्रयो देवा**

---

अस्मिन् ग्रन्थे निरूपितानां जैमिनीयाधिकरणानां पूर्वपक्षसिद्धान्तयोः सुलभतया अवगाहनाय ।मिनीयन्यायमालातः पूर्वपक्षसिद्धान्तसङ्ग्रहश्लोकाः अत्र टिप्पणीरूपेण प्रदत्ताः । शास्त्रदीपिकागत-ङ्ग्रहश्लोकाः अपि तत्र तत्र निर्दिष्टाः ।

1. **पूर्वपक्षः—**

(i) कर्तव्यमुच्चैः सामग्र्यामुपांशु यजुषेत्यमी ।
मन्त्राणामथ वेदानां धर्मा मन्त्रगताः यतः ।
विध्युद्देशे मन्त्रवाचिशब्दाः प्रोक्ता ऋगादयः ॥

**सिद्धान्तः—**

ऋग्वेदोऽग्नेः समुत्पन्न इत्युपक्रमवेदगीः ।
असञ्जातविरोधातः तद्वशादुपसंहृतेः ।
नयने सति वाक्येन धर्माणां वेदगामिता । (जै.न्या.मा.)

---

* (III 3-1-1) अध्याय-पाद-अधिकरण-सूत्रसङ्ख्याः ।

१. प्रजापतिर्वा इदमेक आसीत् इति भाष्ये ।

असृज्यन्त । अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त । तेभ्यः तेपानेभ्यः त्रयो वेदा असृज्यन्त । अग्नेः ऋग्वेदः वायुना यजुर्वेदः आदित्यात् सामवेदः' इत्येवमुपक्रम्य तदुपसंहारे श्रूयते 'उच्चैः ऋचा क्रियते उच्चैः साम्ना उपांशु यजुषा' इति । तत्र सन्देहः । किमुच्चैष्ट्वादयः ऋगादिधर्माः उत ऋग्वेदादिधर्माः इति । तत्र उपसंहारगतेषु विध्युद्देशेषु ऋगादिश्रवणात् उपक्रमगतार्थवादे ऋग्वेदादिशब्दसत्त्वेऽपि अर्थवादस्य विधिशेषतया गुणप्रधानविरोधे प्रधानस्य विध्युद्देशस्यानुसरणीयत्वात् ऋगादिधर्माः उच्चैष्ट्वादयः । एवंच यजुर्वेदादिगतेष्वपि ऋगादिषु उच्चैष्ट्वादयः कर्तव्याः इति पूर्वपक्षः ।

सिद्धान्तस्तु— लब्धात्मनः प्रधानस्य गुणाद् बलीयस्त्वम् । न चेह विध्युद्देशानां ऋगादिविषयतया लब्धात्मता । उपक्रमे वेदसङ्कीर्तनेन वेदानां किञ्चिद् विधास्यते इति प्रथममेव विधास्यमानस्य वेदधर्मत्वावगत्या तदेकवाक्यतया पश्चादुपनतोपसंहारस्य तद्विरुद्धार्थबोधकत्वासम्भवात् । तस्मात् प्रथममुपक्रमेण कस्मिंश्चिदर्थे बोधिते तदेकवाक्यतया आपन्नः उपसंहारः तदाकाङ्क्षानुसारेण बलात् लक्षणां प्रतिपद्यते इति ऋगादिशब्दस्य ऋग्वेदादिलक्षकत्वेन वेदधर्माः उच्चैष्ट्वादयः इति ।

---

(ii) **पूर्वपक्षः—**

गुणत्वादनुवादत्वादर्थवादस्य लक्षणा ।
मुख्यस्यापि प्रधानत्वादप्राप्तविषयत्वतः ।
विध्युद्देशो जघन्योऽपि स्वार्थहानिं न गच्छति ॥

**सिद्धान्तः—**

लब्धात्मनः प्रधानस्य बलीयस्त्वं गुणाद् भवेत् ।
विध्युद्देशस्त्वलब्धात्मा लब्धात्मानं न बाधते । (शा.दी.)

(iii) ऋगादिधर्माः— मन्त्रधर्माः, ऋचा मन्त्रेण उच्चैरिति ।

वेदधर्माः— ऋग्वेदेन उच्चैरिति ।

उपक्रमे वेदशब्दश्रवणात् उपसंहारे ऋगादिमन्त्रशब्दश्रवणात् ।

## 2. श्रुतेः लिङ्गापेक्षया प्राबल्याधिकरणम् – III-3-7

तृतीयाध्याये तृतीयपादे चिन्तितम्— श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये रदौर्बल्यमर्थविप्रकर्षात्। (III 3-7-14) इति बलाबलाधिकरणसूत्रम्। तत्र श्रुतिलिङ्गविरोधे दमुदाहरणम्— अग्निचयने श्रूयते 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति। तत्र किं ऐन्द्र्या ऋचा न्द्रस्य उपस्थानं कर्तव्यमुत गार्हपत्याग्नेरिति संशये अशक्यार्थे वस्तुनः केनापि विनियोक्तु- शक्यत्वात् ऐन्द्र्या इति श्रुत्या ऐन्द्री शक्य एव विनियोक्तव्या। तस्याश्च शक्तिः इन्द्र- काशन एवेति तस्यैवोपस्थानं कर्तव्यम्। गार्हपत्यशब्दस्तु यज्ञसाधनत्वसाधर्म्यादिना न्द्रे वर्तयितव्यः इति पूर्वः पक्षः।

यत्र वस्तुनः सर्वथा न सामर्थ्यं तत्रैव विनियोगो न सम्भवति। अस्ति तु गार्हपत्ये गौणं त्। अवश्यं मन्त्रे इन्द्रशब्दस्य ब्राह्मणे गार्हपत्यशब्दस्य वा कस्यचिदमुख्यार्थत्वं कल्प- येयम्। तच्च प्राप्तार्थे मन्त्र एव युक्तम्। विधौ लक्षणायाः अन्याय्यत्वात्। न च विध्यनुसारेण ऽक्षणया गार्हपत्योपस्थाने विनियोगेऽपि इन्द्रप्रकाशनरूपया मुख्यवृत्त्या लिङ्गात्मकया न्द्रोपस्थाने विनियोगोऽस्तु इति वाच्यम्। प्रत्यक्षश्रुत्या शीघ्रं विनियुक्ते मन्त्रे तावतैव न्त्राम्नानस्य चरितार्थतया लैङ्गिकविनियोगकल्पनानिमित्ताभावात्।

तस्मात् गार्हपत्यस्योपस्थानं कर्तव्यम्।

---

2. **पूर्वपक्षः—**

यद्वा सामर्थ्यरूपत्वात् लिङ्गं स्यात् प्रबलं श्रुतेः।
वस्तुशक्त्यनुसारी हि सर्वः शब्दः प्रवर्तते॥

**सिद्धान्तः—**

(i) अत्राभिधीयते सत्यं यद्यत्यन्तमशक्यता।
गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते।
गुणाद्वाप्यभिधानं स्यादित्यत्रैतद्धि साधितम्॥

(ii) यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते।
तावदेव श्रुतिर्मन्त्रं गार्हपत्यर्थतां नयेत्।
तेन शीघ्रप्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम्॥ (शा.दी.)

## 3. वर्त्महोमादिभिः आहवनीयस्य बाधाधिकरणम्

## X-8-8

दशमेऽध्याये अष्टमपादे चिन्तितम्—

अविशेषेण यत् शास्त्रमन्यायत्वात् विकल्पस्य तत् सन्दिग्धमाराद् विशेषशिष्टं स्यात् (X-8-8-16) 'यदाहवनीये जुहोति' इति होमसामान्ये अधिकरणत्वेन विहितस्य आहवनीयस्य 'गार्हपत्ये पत्नीसंयाजान् जुहोति' इत्यादिना होमविशेषेषु अधिकरणत्वेन विहितैः गार्हपत्यादिभिः विकल्पो बाधो वेति सन्देहे सामान्यविशेषशास्त्रयोः द्वयोरपि प्रत्यक्षत्वेन क्लृप्तया श्रौतलैङ्गिकविनियोगवत् क्लृप्तकल्पनाभावेन बलाबलानवधारणात् विकल्पः इति पूर्वः पक्षः।

सिद्धान्तस्तु—

क्लृप्तत्वेऽपि सामान्यविशेषशास्त्रयोः। विशेषशास्त्रतः पत्नीसंया-जादिहोमविशेषे गार्हपत्यादेः श्रुत्यैव प्राप्तिः। सामान्यशास्त्रतस्तु आहवनीयादेः होम-सामान्यविधानात् श्रुतहोमसामान्यमुखेन तद्विशेषलक्षणया तत्राहवनीयस्य प्राप्तिरित्येव सन्निकर्षसद्भावात् विशेषविहितैः गार्हपत्यादिभिः सामान्यविहितस्य बाध एव।

---

3. **पूर्वपक्षः**—

सामान्यस्यापि लब्धत्वात् प्रत्यक्षेण विशेषवत्।
नास्ति लिङ्गादिवद्बाधः नापि बाधोऽनिदेशवत्॥
अतः तुल्यबलत्वात् विकल्पः।

**सिद्धान्तः**—

प्राप्तिः सामान्यशिष्टस्य विशेषे लक्षणावशात्।
श्रुत्या विशेषे शिष्टस्य तस्मादस्ति बलाबलम्॥ (शा.दी.)

# 4. अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम्

## IX-1-6

नवमे अध्याये प्रथमपादे चिन्तितम्— 'देशसम्बद्धमुपांशुत्वं तेषां स्यात् श्रुति-निर्देशात् तस्य च तत्र भावात्' (IX 1-6-20) ज्योतिष्टोम श्रूयते 'त्सरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेन उपांशु चरन्ती'ति । तत्र सन्देहः— यज्ञस्य यो अग्नीषोमीयात् प्राग्भागः तद्धर्मः उपांशुत्वं उत अग्नीषोमीयात् पशोः ये प्राग्भागवर्तिनः पदार्थाः तद्धर्मः इति । तत्र प्राचीनशब्दस्य दिक्शब्दतया यज्ञप्राग्भागे मुख्यवृत्तेः तत्रत्येषु पदार्थेषु लक्षणावृत्तेः मुख्यवृत्त्या प्रथमोपस्थितस्य प्राग्भागस्यातिक्रमे कारणाभावात् तद्धर्म एव उपांशुत्वमिति पूर्वः पक्षः ।

सिद्धान्तस्तु— प्राग्भावधर्मत्वे तस्य एकत्वात् यत् प्राचीनमग्नीषोमीयादित्येतावदेव वक्तव्यं स्यात् । यत्किञ्चिदित्यनेकव्यक्तिवचनशब्दानुपपत्तेः । तदनुरोधेन अग्नीषोमीय-प्राग्भागवर्तिनां पदार्थानां धर्मः उपांशुत्वम् ।

एवञ्च यद्यपि यत्किञ्चिदित्यनेकव्यक्तिवाचिना शब्देन प्राग्भागवर्तिनः सर्वे पदार्थाः दीक्षणीयादयः तत्तत्प्रातिस्विकरूपेण उपस्थापयितुं युक्ताः तथापि यावत्या वाचा कामयीत तावत्या दीक्षणीयायाम् अनुब्रूयादित्यादिधर्मान्तरविधानात् निरवकाशत्वात् सावकाश-यत्किञ्चिदित्येतद् दीक्षणीयादिव्यतिरिक्तपरं कल्पनीयमिति ।

अत्र उपांशुत्वस्य प्राग्भागधर्मत्वमिति पूर्वपक्षे ज्योतिष्टोमविकृतिषु प्राग्भागारम्भके अप्राकृतपदार्थेपि उपांशुत्वं स्यात् । प्राग्भागवर्तिज्योतिष्टोमादिकतत्तत्पदार्थधर्मत्वमिति सिद्धान्ते वैकृतिषु तावत्स्वेव उपांशुत्वं स्यात् न अप्राकृतपदार्थे इति फलभेदो द्रष्टव्यः ।

---

4. एतदधिकरणपूर्वपक्षसिद्धान्तौ शाबरभाष्यानुसारेण शास्त्रदीपिकायाः प्रथमवर्णकानुसारेण च निरूपितौ । अतः जैमिनीयन्यायमालायाः सङ्ग्रहश्लोकौ नात्र प्रदत्तौ ।

## 5. प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणम्

## XII-2-8

द्वादशे द्वितीयपादे चिन्तितम्— 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्' (XII-2-8-22) पञ्चदशरात्रे सत्रे प्रथममहः अग्निष्टुत् नामकम्। तत्र नामाति-देशेन एकाहाग्निष्टुद् धर्मभूता आग्नेयी सुब्रह्मण्या प्राप्नोति । इतरेषु तु अहस्सु यथाप्रकृति ऐन्द्री । तत्र उपसद्दिवसेषु का आहूतव्येति संशये मुख्यश्रुत्यनुग्रहार्थमाग्नेयीति पूर्वः पक्षः । प्रयोगवचनस्य भूयोवैगुण्यासहिष्णुत्वाद् द्वितीयादिबहुश्रुत्यनुग्रहार्थमैन्द्री सुब्रह्मण्या आहूतव्येति सिद्धान्तः ।

---

5. पूर्वपक्षः—

या पञ्चदशरात्रस्य सुब्रह्मण्याद्यकालगा ।
आग्नेयी स्यात् किमैन्द्री वा प्रथमाहानुगुण्यतः ।
आग्नेयी प्रथमं चाहो विरोधानुदयाद् बली ॥

सिद्धान्तः—

न बह्वनुग्रहादैन्द्री कुलार्थत्यागनीतितः । (जै.न्या.मा.)

## 6. श्रुतिप्राबल्याधिकरणम् I-3-2

प्रमाणलक्षणे स्मृतिपादे चिन्तितम्— 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' -3-2-3) ज्योतिष्टोमे श्रूयते 'औदुम्बरीं स्पृष्ट्वा उद्गायेदि'ति । अनया श्रुत्या उदुम्बरमयीं ास्थूणां स्पृष्ट्वा उद्गात्रा गानं कर्तव्यमिति विहितम् । स्मृतिकारास्तु तत्संस्पर्शविरुद्धं तस्याः ात्स्न्येन वाससा वेष्टनं स्मरन्ति "औदुम्बरी सर्वा वेष्टयितव्या" इति । तस्मात् स्मरणं गाणमप्रमाणं वेति संशये स्मृत्यधिकरणे स्मृतीनां मूलश्रुत्यनुमापकतया श्रुतिमूलकत्वेन माण्यसमर्थनात् इयं श्रुतिः मूलश्रुतिमनुमापयन्ती प्रमाणमिति पूर्वः पक्षः ।

स्पर्शनसर्ववेष्टनयोः विरुद्धतया तत्कर्तव्यताबोधकयोरपि औष्ण्यशैत्यवद् विरुद्धत्वाद् ह्नौ औष्ण्यप्रत्यक्षेण शैत्यानुमानस्येव स्पर्शनश्रुतिप्रत्यक्षेण सर्ववेष्टनश्रुत्यनुमानस्य बाधात् ळश्रुत्यभावेन अप्रमाणमिति सिद्धान्तः ।

---

6. पूर्वपक्षः—

औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः ।
अमितिर्वेति सन्देहे मितिः स्यादष्टकादिवत् ॥

सिद्धान्तः—

औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः ।
विरोधात् मूलवेदस्याननुमानादमानता ॥ (जै.न्या.मा.)

## 7. शरमयबर्हिषा कौशबर्हिर्बाधाधिकरणम्

### X-4-2

दशमे अध्याये चतुर्थे पादे चिन्तितम्— 'चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात्' (X-4-2-2) सोमारौद्रचरौ श्रूयते शरमयं बर्हिर्भवतीति तत्र किं दर्शपूर्णमासिकाः कुशाः न निवर्तन्ते निवर्तन्ते वा इति सन्देहे शराणां कुशानां च उपदेशातिदेशरूपप्रमाणद्वयावगतत्वात् समुच्चयः इति पूर्वः पक्षः ।

बर्हिःशब्दलक्षिते बर्हिःकार्ये शराणां विधायकस्य वचनस्य प्रत्यक्षत्वात् तैरेव कृतस्वकार्याणां कुशानां प्रापकस्य कुशसाधारणशब्दस्यातिदेशवाक्यस्य कल्पनं न प्रवर्तते । किन्तु कुशव्यतिरिक्ताङ्गप्रापकस्यैव तस्यानुमानमिति प्रापकाभावात् कुशा निवर्तन्ते इति सिद्धान्तः ।

---

7. **पूर्वपक्षः—**

समुच्चेयं शरमयं कौशेनोतास्य बाधकम् । प्राचुर्यस्य विधेराद्यः ।

**सिद्धान्तः—** मैवं प्रतिपदोक्तितः । (जै.न्या.मा.)

जैमिनीयन्यायमालानुसारेण द्वितीये अधिकरणे इदं प्रथमवर्णकम् । शास्त्रदीपिकानुसारेण तु प्रथमाधिकरण एव वर्णकान्तरम् ।

## 8. अर्थवादाधिकरणम् I-2-1

अर्थवादाधिकरणे 'शास्त्रदृष्टविरोधाच्च' (I-2-1-2) इति पूर्वपक्षसूत्रे 'तस्माद् धूम एवाग्नेर्दिवा ददृशे नार्चिः । तस्मादर्चिरेवाग्नेः नक्तं ददृशे न धूमः' इत्यर्थवादयोः दिवाप्यर्चिदर्शनात् नक्तमपि धूमदर्शनात् दृष्टविरोधेन आनर्थक्ये उक्ते 'गुणवादस्तु' (I-2-1-10) इति सिद्धान्तसूत्रेण दिवा नक्तं च अर्चिर्धूमयोः अदर्शनशब्दः गौण इति दृष्टविरोधः समाहितः । गौणतानिमित्तं च दूरभूयस्त्वादिति (I-2-1-12) सूत्रेणोक्तम् । यथा दिवा धूमः दूरस्थैः भूम्ना दृश्यते न तथा अर्चिः । रात्रौ च अर्चिः दूरस्थैः भूम्ना दृश्यते न तथा धूमः । एवञ्च न दृश्यते इत्यत्र दर्शनमात्रवाचिना दृशिना भूम्ना विशिष्टदर्शने लक्षिते तदभावः तयोः बोध्यते इति ।

## 9. मन्त्रलिङ्गाधिकरणम् (I-2-4)

तथा मन्त्राधिकरणे 'अर्थविप्रतिषेधात्' (I-2-4-36) इति पूर्वपक्षसूत्रेण एकस्य आदित्यादेः परस्परभिन्नद्युगगनाद्यनेकात्मकत्वविरोधेन 'अदितिर्द्यौरदितिरन्तरिक्षमदिति-र्माता स पिता स पुत्र' इति मन्त्रस्यार्थविवक्षायां दूषितायां 'गुणादवि(वि)प्रतिषेधः स्यात्' (I-2-4-47) इति सिद्धान्तसूत्रेण अदितेः द्युकार्यकरणत्वादिना 'त्वमेव माता च पिता त्वमेव' इत्यादौ मात्रादिशब्दानामिव द्युशब्दादीनां गौणत्वमाश्रित्य विरोधः परिहृतः ।

---

8. अस्मिन्नधिकरणे जैमिनीयन्यायामालायां 'वायुर्वै क्षेपिष्ठा' इत्यर्थवादवाक्यमवलम्ब्य पूर्वोत्तर-पक्षौ निरूपितौ । अतः तत्र विद्यमानपूर्वपक्षसिद्धान्तसङ्ग्रहश्लोकौ नात्र प्रदत्तौ । 'तस्माद् धूम एवाग्नेर्दिवा ददृशे' इत्याद्यर्थवादवाक्यं तु शाबरभाष्ये तन्त्रवार्तिके च विचारितम् । तच्च अत्र श्रीविजयीन्द्रपूज्यपादैः सङ्गृह्य निरूपितम् ।

9. अस्मिन्नधिकरणे जैमिनीयन्यायमालायां 'उरु प्रथस्व' इति मन्त्रमुदाहृत्य पूर्वोत्तरपक्षौ निरूपितौ । अतः तयोः सङ्ग्रहश्लोकौ नात्र प्रदत्तौ ।

'अदितिः द्यौः अदितिरन्तरिक्षमि'ति मन्त्रः शाबरभाष्ये वार्तिके च विचारितः । स च विचारः श्रीविजयीन्द्रपूज्यपादैः अत्र सङ्गृह्य निरूपितः ।

## 10. यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थत्वाधिकरणम्

I-4-13...18

**प्रमाणलक्षणे नामधेयपादे तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायादिति सूत्रेण** (I-4-13.... 16, 23...28) **यजमानः प्रस्तरः, अग्निर्वै ब्राह्मणः, आदित्यो यूपः अपशवो वा अन्ये गो अश्वेभ्यः, इति श्रुतिषु प्रस्तरस्य यज्ञसाधनभूतदर्भमुष्टिविशेषस्य यजमानत्वं, ब्राह्मणस्य अग्नित्वं, यूपस्य आदित्यत्वं, गवाश्वव्यतिरिक्तानामजादीनामपशुत्वं प्रत्यक्षविरुद्धमिति तत्परिहाराय प्रस्तरादिषु यजमानादिशब्दाः गौणाः इति तेषां प्रवृत्तिनिमित्तभूतगुणाः प्रदर्शिताः। तत्र यजमानशब्दस्य प्रस्तरे प्रवृत्तौ तत्सिद्धिः तत्कार्यकरत्वं गुणः । उभयोरपि यज्ञसाधनत्वेन एककार्यकरत्वात्। ब्राह्मणे अग्निशब्दस्य प्रवृत्तौ जातिर्जन्म एकप्रभवत्वं गुणः। 'ब्राह्मणोऽस्य**

---

**10. पूर्वपक्षः—**

यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ।

**सिद्धान्तः—**

यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः ॥
आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत् सर्वनिर्णयः ।
द्वारं तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे ॥
आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः ।
द्वारं चाक्षुषसारूप्यं घृताक्ते तैजसेऽस्तु तत् ॥
पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम् ।
पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः ॥
लक्ष्यास्तत्र निमित्तं तु प्रशंसैव गवाश्वयोः ॥ (जै. न्या. मा.)

(i) शास्त्रदीपिकायां तत्सिद्धिजातिसारूप्येत्यादिसूत्रम् 'तत्सिद्धिः, जातिः' इत्यादि विभागेन अधिकरणषट्कतया निरूपितम् ।

(ii) जैमिनीयन्यायमालायां तद्विस्तरेऽपि च इत्थमेव निरूपितम् ।
शाबरभाष्ये तु षण्णामेषां सूत्राणां तत्सिद्धिपेटिका इति पेटिका कृता ।
श्रीविजयजीन्द्रपूज्यपादैः षट्सूत्राणामपि सारः सङ्गृह्य अत्र निरूपितः ।

,खमासीत्', 'मुखादिन्द्रश्चाग्निश्च' इति एतयोः मुख-जत्वश्रवणात्। यूपे आदित्यशब्दप्रवृत्तौ ऊर्ध्वत्वमाज्याञ्जननिमित्तमौज्ज्वल्यं (इति) गुणः । तदेव सारूप्यमित्युक्तम् । सूत्रे यद्यपि त्सिद्धयादिकमपि सारूप्यमेव तथापीदं चाक्षुर्ग्राह्यं सारूप्यमिति विशेषात् तथोक्तम् । ापशुशब्दस्य अजादिषु प्रवृत्तौ प्रशंसा निमित्तम्। पशुशब्देन गवाश्वगतेन उपकारातिशयेन शस्तत्वे लक्षिते नञा तदभावः पश्वन्तरेषु बोध्यते इति । भूमलिङ्गसमवायोदाहरणं तु कृतानुपयोगान्न लिख्यते।

## 11. वाजपेयादिशब्दानां यागनामधेयताधिकरणम् (I-4-6)

प्रमाणलक्षणे नामधेयपादे चिन्तितम्— नामधेये गुणश्रुतेः स्याद् विधानमिति चेत् I-4-6-6) 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र वाजपेयशब्दः गुणविधिर्नामधेयं वेति संशये वाजम् अन्नम् यत् पेयं तत् वाजपेयमिति योगोपस्थापितयवाग्वादिगुणविधिः न तु ागनामधेयं नातिप्रयोजनत्वादिति पूर्वः पक्षः ।

सिद्धान्तस्तु— गुणविधिवादिना वाजपेयवता यागेन फलं भावयेदिति द्रव्यविशिष्टस्य ाजेः फलभावनायां करणत्वेन विधिमुपगम्य वाजपेयशब्दस्य यजिना सामानाधिकरण्येन न्वयाङ्गीकारे तन्निर्वाहाय तस्य मत्वर्थलक्षणाप्रसङ्गात् ।

---

**11. पूर्वपक्षः—**

यजेत वाजपेयेन स्वराज्यार्थीत्यसौ गुणः ।
नाम वा, गुणता तन्त्रयोगात् गुणफलद्वये ।
साधारणयजेः कर्मकरणत्वेन तन्त्रता ॥

**सिद्धान्तः—**

त्रिकद्वयं विरुद्धं स्यात् तन्त्रतायां फलं प्रति ।
उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः ॥
उद्देश्यानुक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति ।
त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः ।
वाजपेयेति शब्दोऽपि कर्मनामाग्निहोत्रवत् ॥ (जै.न्या.मा.)

## 10. यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थत्वाधिकरणम्

I-4-13...18

प्रमाणलक्षणे नामधेयपादे तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायादिति सूत्रेण (I-4-13.... 16, 23...28) यजमानः प्रस्तरः, अग्निर्वै ब्राह्मणः, आदित्यो यूपः अपशवो वा अन्ये गो अश्वेभ्यः, इति श्रुतिषु प्रस्तरस्य यज्ञसाधनभूतदर्भमुष्टिविशेषस्य यजमानत्वं, ब्राह्मणस्य अग्नित्वं, यूपस्य आदित्यत्वं, गवाश्वव्यतिरिक्तानामजादीनामपशुत्वं प्रत्यक्षविरुद्धमिति तत्परिहाराय प्रस्तरादिषु यजमानादिशब्दाः गौणाः इति तेषां प्रवृत्तिनिमित्तभूतगुणाः प्रदर्शिताः। तत्र यजमानशब्दस्य प्रस्तरे प्रवृत्तौ तत्सिद्धिः तत्कार्यकरत्वं गुणः । उभयोरपि यज्ञसाधनत्वेन एककार्यकरत्वात्। ब्राह्मणे अग्निशब्दस्य प्रवृत्तौ जातिर्जन्म एकप्रभवत्वं गुणः । 'ब्राह्मणोऽस्य

---

**10. पूर्वपक्षः—**

यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ।

**सिद्धान्तः—**

यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः ॥
आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत् सर्वनिर्णयः ।
द्वारं तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे ॥
आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः ।
द्वारं चाक्षुषसारूप्यं घृताक्ते तैजसेऽस्तु तत् ॥
पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम् ।
पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः ॥
लक्ष्यास्तत्र निमित्तं तु प्रशंसैव गवाश्वयोः ॥ (जै. न्या. मा.)

(i) शास्त्रदीपिकायां तत्सिद्धिजातिसारूप्येत्यादिसूत्रम् 'तत्सिद्धिः, जातिः' इत्यादि विभागेन अधिकरणषट्कतया निरूपितम् ।

(ii) जैमिनीयन्यायमालायां तद्विस्तरेऽपि च इत्थमेव निरूपितम् ।
शाबरभाष्ये तु षण्णामेषां सूत्राणां तत्सिद्धिपेटिका इति पेटिका कृता ।
श्रीविजयजीन्द्रपूज्यपादैः षट्सूत्राणामपि सारः सङ्गृह्य अत्र निरूपितः ।

व्रमासीत्', 'मुखादिन्द्रश्चाग्निश्च' इति एतयोः मुख-जत्वश्रवणात्। यूपे आदित्यशब्दप्रवृत्तौ र्ध्वत्वमाज्याञ्जननिमित्तमौज्वल्यं (इति) गुणः । तदेव सारूप्यमित्युक्तम् । सूत्रे यद्यपि त्सिद्धयादिकमपि सारूप्यमेव तथापीदं चाक्षुर्ग्राह्यं सारूप्यमिति विशेषात् तथोक्तम् । पशुशब्दस्य अजादिषु प्रवृत्तौ प्रशंसा निमित्तम्। पशुशब्देन गवाश्वगतेन उपकारातिशयेन ास्तत्वे लक्षितं नञा तदभावः पश्वन्तरेषु बोध्यते इति । भूमलिङ्गसमवायोदाहरणं तु कृतानुपयोगान्न लिख्यते।

## 11. वाजपेयादिशब्दानां यागनामधेयताधिकरणम् (I-4-6)

प्रमाणलक्षणे नामधेयपादे चिन्तितम्— नामधेये गुणश्रुतेः स्याद् विधानमिति चेत् -4-6-6) 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र वाजपेयशब्दः गुणविधिर्नामधेयं वेति शये वाजम् अन्नम् यत् पेयं तत् वाजपेयमिति योगोपस्थापितयवाग्वादिगुणविधिः न तु गनामधेयं नातिप्रयोजनत्वादिति पूर्वः पक्षः ।

सिद्धान्तस्तु— गुणविधिवादिना वाजपेयवता यागेन फलं भावयेदिति द्रव्यविशिष्टस्य जेः फलभावनायां करणत्वेन विधिमुपगम्य वाजपेयशब्दस्य यजिना सामानाधिकरण्येन न्वयाङ्गीकारे तन्निर्वाहाय तस्य मत्वर्थलक्षणाप्रसङ्गात् ।

---

11. पूर्वपक्षः—

यजेत वाजपेयेन स्वराज्यार्थीत्यसौ गुणः ।
नाम वा, गुणता तन्त्रयोगात् गुणफलद्वये ।
साधारणयजेः कर्मकरणत्वेन तन्त्रता ॥

सिद्धान्तः—

त्रिकद्वयं विरुद्धं स्यात् तन्त्रतायां फलं प्रति ।
उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः ॥
उद्देश्यानुक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति ।
त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः ।
वाजपेयेति शब्दोऽपि कर्मनामाग्निहोत्रवत् ॥ (जै.न्या.मा.)

वाजपेयेन यागं भावयेत् यागेन स्वाराज्यमिति यागकर्मिकायां भावनायां द्रव्यस्य करणत्वेन फलकर्मिकायां यागस्य करणत्वेन च विधिमुपगम्य तस्यैव वैयधिकरणाङ्गीकारे भावनायां द्रव्यस्य करणतया अन्वयाय यागस्य कर्मत्वेन फलस्य कर्मतया अन्वयाय तस्य करणत्वेन च प्रत्येतव्यत्वात् । तथा प्रत्यययोश्च क्रमिकत्वे यजेः आवृत्तिलक्षणवाक्यभेदप्रसङ्गात् । एकस्यैव यजेः युगपदनुपपन्नपरस्परविरुद्धकर्मत्वकरणत्वरूपद्वयोपस्थापकत्वात्मकवैरूप्यस्य यागे कर्मत्वानुबन्धिप्रधानत्वानुवाद्यत्वोद्देश्यत्वकरणत्वानुबन्धिगुणत्वविधेयत्वोपादेयत्वरूपविरुद्ध-त्रिकद्वयस्य च प्रसङ्गात् गुणविधानानुपपत्तेः कर्मनामधेयं वाजपेयपदम् ।

एवञ्च सोमेन यजेत इत्यत्रापि वैयधिकरण्येन गुणविधिस्वीकारे सोमेन यागं कुर्यात् यागेन समीहितमिति विरुद्धो त्रिकद्वयापत्तेः सामानाधिकरण्ये वक्तव्ये नामतया यागसामानाधिकरण्यं लतारूपे अर्थान्तरे रूढस्य तस्य शक्त्यन्तरकल्पनापत्तेः । अतः ततो वरं लक्षणेति मत्वर्थलक्षणया गुणविधित्वेन सामानाधिकरण्यम् । मत्वर्थलक्षणाया अप्यभावे सोमलतायागक्रियायाश्च भेदस्य प्रत्यक्षसिद्धत्वेन सामानाधिकरण्यस्य तेन बाधप्रसङ्गात् ।

## 12. आनुपूर्व्येणापच्छेदे उत्तरापच्छेदनिमित्त-प्रायश्चित्तानुष्ठानाधिकरणम्

## VI-5-19

षष्ठे पञ्चमपादे एकोनविंशाधिकरणं चिन्तितम्— पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् VI-5-19-54) 'अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारमुद्गाता उद्गातारं प्रतिहर्ता' इत्यादिश्रुत्या ाहितस्य बर्हिष्पवमानं प्रसर्पतां प्रस्तोत्रादीनामध्वर्य्वाद्यन्वारम्भस्य विच्छेदे प्रायश्चित्त-ाशेषाः श्रूयन्ते । यदि बर्हिष्पवमानं प्रसर्पतां प्रस्तोता अपच्छिद्यात् ब्रह्मणे वरं दद्यात् । दि प्रतिहर्ता सर्ववेदसम् । तथा यद्युद्गाता अपच्छिद्याददक्षिणं यज्ञमिष्ट्वा तेन पुनर्यजेत । त्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यादिति ।

तत्र तु क्रमेण उद्गातृप्रतिहर्त्रपच्छेदे किं पूर्वनिमित्तमदक्षिणं कर्तव्यमुत उत्तरनिमित्तं र्वदक्षिणं प्रायश्चित्तमिति संशये उपक्रमाधिकरणन्यायेन असञ्जातविरोधितया बलीयस्त्वात् र्वनिमित्तकं कर्तव्यमिति पूर्वः पक्षः ।

उपसंहारस्य प्रथमप्रवृत्तोपक्रमैकवाक्यतया आपाततः तदाकाङ्क्षितार्थसमर्पणनियमेन द्विरुद्धार्थविषयतया लब्धात्मतैव नास्तीत्युक्तमुपक्रमाधिकरणे पूर्वप्राबल्यम् । इह तु रस्परनिरपेक्षशास्त्रद्वयाधीनकर्तव्यताज्ञानयोः आद्येन द्वितीयस्योत्पत्तिप्रतिबन्धासम्भवात् त्पाद्यमानस्य च तस्य नानुपमृद्य पूर्वं तद्विरोध्युत्पत्तुमर्हतीति पूर्वोपमर्दनोपपत्तेः परप्राबल्यं ाय्यमिति परनिमित्तं कर्तव्यमिति सिद्धम् ॥

---

12. पूर्वपक्षः—

अपच्छेदक्रमे पूर्वं प्रबलः स्यादथोत्तरः ।
असञ्जातविरोधेन पूर्वेणोत्तरबाधनम् ॥

सिद्धान्तः—

निरपेक्षोत्तरज्ञानं जायते पूर्वबाधया ।
न बाधकान्तरं तस्य तेन प्रबलमुत्तरम् ॥ (जै.न्या.मा.)

## 13. उद्गातुः अपच्छेदेऽपि सर्वस्वदक्षिणादानाधिकरणम्

## VI-5-20

'यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेतसं दद्यात् यथेतरस्मिन्' (VI-5-55) तत्रैव यद्युद्गात्रपच्छेदः परो भवति तदा तन्निमित्तके पुनर्यज्ञे किं क्रतुसङ्कल्पकाले यद्दिदित्सितं द्वादशशतं देयमुत प्रतिहर्त्रपच्छेदे यद्दिदित्सितं सर्वस्वमिति संशये पूर्वस्मिन् दास्यन्नित्यनेन यन्नित्यवत् क्रतुस्वभावतो देयं तदेव प्रतीयते नत्वागन्तुकमिति पूर्वः पक्षः।

सिद्धान्तस्तु— प्रथमं यद् द्वादशशतं दास्यन्नासीत् तत्परेण सर्ववेदसेन बाधितमेव। न च तदपि ततः परेण अदाक्षिण्येन बाधितमिति वाच्यम्। तस्य अबाधेनैव प्रयोगान्तरे निक्षेपोपपत्तेः तस्मात् तत्र सर्वस्वं देयमिति सिद्धान्तः।

---

13. **पूर्वपक्षः—**

उद्गातुः पश्चिमच्छेदे पुनर्यागस्य दक्षिणा।
शतं द्वादशयुक्तं स्यात् यदि वा सर्ववेदसम्॥
तद्दद्यात् यत् पुरा दित्सुरित्युक्तेः शतदक्षिणा॥

**सिद्धान्तः—**

प्रतिहर्तुः पुराच्छेदात् सर्ववेदसबाधितम्।
शतदानं, पूर्वयागे सर्ववेदसदित्सुता॥
प्राप्ता, इत्यूर्ध्वं प्रयोगे तद्दातव्यं सर्ववेदसम्॥ (जै.न्या.मा.)

## 14. यौगपद्ये अदाक्षिण्यसर्वस्वदाक्षिण्यविकल्पाधिकरणम्

### VI-5-18

'तत्र विप्रतिषेधात् विकल्पः स्यात्' (VI-5-18-51) उद्गातृप्रतिहर्त्रोः युगपदपच्छेदे किं नैमित्तिकद्वयं समुच्चीयते उत विकल्प्यते इति संशये विकल्पस्याष्टदोषदुष्टत्वात् पुनर्यजेत इति प्रयोगद्वयसद्भावेन पूर्वस्मिन् अदक्षिणत्वमुत्तरस्मिन् सर्ववेदसमिति उभयसम्भवाच्च समुच्चीयते इति पूर्वः पक्षः।

यत्र प्रयोगे निमित्तं जातं तस्यैवाङ्गं नैमित्तिकं न प्रयोगान्तरक्रियमाणनिमित्तवतः साद्गुण्यावहमित्येकस्मिन्नेव प्रयोगद्वयमापतितं विरोधात् समुच्चेतुमशक्यं सत् विकल्प्यते इति सिद्धान्तः।

---

14. पूर्वपक्षः—

समुच्चयो विकल्पो वा प्रायश्चित्तद्वयेऽग्रिमः।
अदक्षिणत्वं पूर्वस्मिन् प्रयोगेऽन्यत्तु पश्चिमे॥

सिद्धान्तः—

प्रयोगे पश्चिमे नास्ति निमित्तं तेन तद्द्वयम्।
प्राप्तमेकप्रयोगेऽतो विरुद्धत्वाद् विकल्प्यते॥ (जै.न्या.मा.)

## 15. पदार्थप्राबल्याधिकरणम् I-3-4

प्रमाणलक्षणे स्मृतिपादे चिन्तितम्— 'शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वात् (I-3-4-5-6) 'क्षुत आचमेत्' इत्यादि स्मरणम् । 'वेदं कृत्वा वेदिं कुर्यात्' इत्यादि-श्रुतिप्रतिपन्नदार्शिकपौर्णमासिकादिपदार्थक्रमविरुद्धं प्रमाणमप्रमाणं वेति संशये श्रुति-विरुद्धस्मृतिवद् विरोधाधिकरणन्यायेन अप्रमाणमिति पूर्वः पक्षः ।

सिद्धान्तस्तु— पदार्थगुणभूतक्रमविषयायाः श्रुतेः आचमनादिविषयिणी स्मृतिरेव बलीयसी । प्रमाणबलात् प्रमेयबलस्य प्रबलत्वात् । प्रमाणयोः स्वरूपतः विरोधाभावेन प्रमेयविरोधाधीनतया तदवगत्यर्थं प्रमेयविरोधालोचनाय प्रमेयस्वरूपे अवगम्यमाने तदैव तदीयबलाबलस्यापि स्फुरणेन तस्य प्रथममुपस्थितत्वात् ॥

---

15. पूर्वपक्षः—

आचान्तेनेत्यमा मा वा स्मृतिरेषा न मा भवेत् ।
वेदं कृत्वेति यः श्रौतः क्रमस्तेन विरोधतः ॥

सिद्धान्तः—

आचान्त्यादिः पदार्थोऽत्र क्रमो धर्मः पदार्थगः ।
धर्मस्य धर्म्यपेक्षत्वादबाधादस्ति मानता ॥ (जै.न्या.मा.)

## 16. सर्वशाखाप्रत्ययैकताधिकरणम् II-4-2

द्वितीये अध्याये चतुर्थपादे चिन्तितम्—

'नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरेषु कर्मभेदः स्यात्' (II-4-2-8)

नानाशाखास्वाम्नातमग्निहोत्रादि भिद्यते नवेति सन्देहे अविशेषे पुनः श्रुतिलक्षणात् अभ्यासात् दूरस्थत्वलक्षणात् प्रकरणान्तराच्च भिद्यते इति पूर्वः पक्षः ।

सिद्धान्तस्तु— पुनः श्रुत्या प्रकरणान्तराच्च कर्मविधेयमित्येतावत् सिद्ध्यति । न तु भेदः । विधिवशात्तु भेदसिद्धिः अन्यत्र विहितस्य विधानायोगादिति । इह तु शाखाभेदाना-मध्येतृभेदनियतत्वेन विहितस्यापि पुरुषान्तरं प्रति विधिः सम्भवतीति न ताभ्यां भिद्यते इति । नामरूपाद्युदाहरणभेदास्तु प्रकृतानुपयोगात् न लिख्यन्ते ।

---

16. पूर्वपक्षः—

शाखाभेदात् कर्मभेदो न वा कर्मात्र भिद्यते ।
दृष्टं काठकनामादि बहुभेदस्य कारणम् ।
ग्रन्थद्वारादिना ह्येते युज्यन्ते भेदहेतवः ॥

सिद्धान्तः—

रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते । (जै.न्या.मा.)

## 17. प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणम् VII-3-8

सप्तमे तृतीयपादे चिन्तितम्— 'सौमिकं तु प्रणयनमवाच्यं हीतरत्' (VII-3-8-19)

चातुर्मास्येषु 'द्वयोः प्रणयन्ती'ति वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानां चतुर्णां चातुर्मास्यपर्वणां मध्ये द्वयोः पर्वणोः अग्निप्रणयनमुच्यमानं किं दर्शपूर्णमासधर्मिकमुत सौमिकधर्मिकमनेकाङ्गकलापयुक्तमुतोभयोपलक्षणमपूर्वमिति संशये ।

चातुर्मास्यानां दर्शपूर्णमासप्रकृतितया चोदकप्राप्तत्वेन सन्निधानात् दार्शपूर्णमासिकमित्येकः पक्षः । चोदकप्राप्तस्याविधेयत्वात् गुणविद्ध्याद्यभावेन अनुवादानर्थक्याच्च अर्थवत्त्वाय सौमिकमिति द्वितीयः पक्षः ।

प्रणयतीत्यस्य प्रणयनसामान्यवाचिनः सौमिकप्रणयनविशेषपरत्वे लक्षणाप्रसङ्गात् चातुर्मास्येष्वेव किञ्चित् प्रणयनमस्पृष्टसौमिकत्वाद्याकारं विधीयते । तच्च तदुभयविलक्षणमपूर्वं पर्यवस्यतीति सिद्धान्तः ॥

---

17. वार्तिककारोक्तः सिद्धान्तः—

अनामत्वाच्च वैयर्थ्यात् सौमिकं प्राकृतं न च ।
अपूर्वं तत्प्रणयनं शाखान्तरसमोक्तितः ॥

शास्त्रदीपिकायां जैमिनीयन्यायमालायां च अयं विषयः अष्टमे नवमे च अधिकरणे विभज्य निरूपितः । अत्र तु वार्तिकानुसारेण आहत्य निरूपितः ।

## 18. आश्वमेधिकसवनीयाश्वस्य 'न चतुस्त्रिंशदिति ब्रूयात्' इत्यनेन समस्तायाः ऋचः निषेधाधिकरणम् IX-4-3

नवमे चतुर्थपादे चिन्तितम्— 'तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात्' (IX-4-3-18)

अग्नीषोमीये पशौ 'अध्रिगुप्रैषे श्रुतस्य षड्विंशतिरस्य वङ्क्रयः' इति मन्त्रस्य अश्व-मेधीयाश्वपशुके प्राजापत्ययागे चोदकप्राप्तस्य तत्र येन 'चतुस्त्रिंशद्वाजिनो देवबन्धोः' वङ्क्रिः अश्वस्य स्वधितिः समेतीति वैशेषिकमन्त्रेण अचोदितस्य सर्वथैव निवृत्तौ प्रसक्तायां तत्रैव इदं समाम्नायते । न चतुस्त्रिंशद् इति ब्रूयादिति षड्विंशतिरित्येव ब्रूयादिति । तत्र संशयः किमश्वस्य पठितमेव वैशेषिकमध्रिगुवचनं कर्तव्यमिति प्राकृताध्रिगुवचनस्य सर्वथैव निवृत्तिः उत न निवृत्तिरिति ।

तत्र न चतुस्त्रिंशदित्यादिवचनस्य चतुस्त्रिंशद्वाजिन इत्यस्यां ऋचि चतुस्त्रिंशत्पदं प्रतिषिध्य षड्विंशतिपदविधानार्थत्वोपपत्तेः । समस्तायाः ऋचोः प्रतिषेधकत्वेन प्रकरण-पठितायाः तस्याः बाधोऽभ्युपगन्तुमयुक्तः इति प्राकृताध्रिगुवचनस्य निवृत्तिरेवेति प्राप्ते ।

पठितायां ऋचि चतुस्त्रिंशत्पदप्रतिषेधे तत्र तत्स्थाने च षड्विंशतिपदप्राप्तौ प्रमाणा-भावेन षड्विंशतिरित्येव ब्रूयादिति तदनुवादासम्भवात् तस्यापि विधौ वाक्यभेदापत्तेः एकवाक्यत्वनिर्वाहाय न चतुस्त्रिंशदिति वैशेषिकीं ऋचं प्रतिषिध्य षड्विंशतिरिति निष्परिपन्थि-चोदकप्राप्तं प्राकृताध्रिगुवचनमनूद्यते इत्यभ्युपेयत्वात् न तस्य निवृत्तिः इति सिद्धान्तः ॥

---

18. पूर्वपक्षः—

पृथग्वचनमश्वस्य स्यादन्याभ्यां समस्य वा ।
आद्यः पदे निषिद्धेऽत्र विशेषो नियतो यतः ॥

सिद्धान्तः— वङ्क्रीयत्तानुक्तिदोषाद् ऋगेवात्र निषिद्ध्यते ।
पक्षे प्राप्तः प्राकृतोऽस्मिन् समस्योक्तिः पुरा यथा ॥ (जै.न्या.मा.)

शास्त्रदीपिकायां अस्य अधिकरणस्य नाम 'आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वक्रित्रिरूप-विशेषवचनाधिकरणम्' इति निर्दिष्टम् ।

## *19. मन्त्रलिङ्गाधिकरणम् I-2-4

प्रमाणलक्षणे चिन्तितम्—

'तदर्थशास्त्रात् (I-2-4-31) 'उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्' इत्यादयो मन्त्राः किमुच्चारणमात्रेण दर्शपूर्णमासादिकर्मसूपकुर्वन्ति उत पुरोडाशप्रथनादितत्तत्कर्मसमवेतार्थाभिधानद्वारेणेति संशये अनुच्चरितानामर्थानभिधायकत्वात् प्राथम्यावश्यकत्वाभ्यामुच्चारणस्यैव द्वारत्वं युक्तमिति तन्मात्रेणोपकुर्वन्तीति पूर्वः पक्षः ।

सिद्धान्तस्तु— कर्मप्रकरणेषु मन्त्राणां समुच्चारणस्य अविधानात् । कर्मविध्यनपेक्षि-तत्वेन तैरप्यनाक्षेपात् । पुंव्यापारस्य तस्य मन्त्रगतव्यापारलाभत्वेन मन्त्राङ्गानिर्वाहकतया तेनाप्यनाक्षेपाच्च मन्त्रोच्चारणकर्तव्यतायामेव न प्रमाणमिति न तस्य द्वारत्वं युक्तम् । किन्तु अनुष्ठानाय कर्मविधेरपेक्षिततया मन्त्रगतव्यापारत्वेन मन्त्रान्तर्गतनिर्वाहकतया च अभिधानविध्याक्षेपसम्भवात् अभिधानस्य द्वारत्वं युक्तम् । तादार्थ्येन तु पश्चादुच्चारणस्यापि कर्तव्यतासिद्धिः । तस्मादभिधानेन मन्त्राः उपकुर्वन्तीति ॥

---

19. पूर्वपक्षः—

मन्त्रा उरु प्रथस्वेति किमादृष्टैकहेतवः ।
यागेषूत पुरोडाशप्रथनादेश्च भासकाः ।
ब्राह्मणेनापि तद्भानात् मन्त्राः पुण्यैकहेतवः ॥

सिद्धान्तः—

न, तद्भानस्य दृष्टत्वात् दृष्टं वरमदृष्टतः । (जै.न्या.मा.)

---

*: इदमधिकरणं 'अदितिः द्यौः' इत्यादिमन्त्रार्थविचाराय पूर्वं (No.9) निरूपितम् । इह तु 'उरु प्रथस्व' इत्यादिमन्त्राणामर्थप्रकाशकत्वं विचार्यते ।

## 20. आधाराद्याग्नेयीनामङ्गाङ्गिभावाधिकरणम् II-2-3

द्वितीये द्वितीयपादे चिन्तितम्— 'प्रकरणं तु पौर्णमास्यां रूपावचनात्' (II-2-3-3)

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति', 'तावब्रूतामग्नीषोमीयावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्निति', 'अग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्', 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति पौर्णमास्यमावास्याकालयुक्तं कर्म विधायाम्नायते 'य एवं विद्वान् पौर्णमासीं यजते', 'य एवं विद्वानमावास्यां यजते' इति । तत्र संशयः किमिमौ यजती प्रकृतानामाग्नेयादीनां पौर्णमास्यमावस्याकालसम्बन्धलब्धतच्छब्दानामनुवादकौ उत एवंसंज्ञकयोः अपूर्वयोः कर्मणोः विधायकौ इति । तत्र विधेः पुनःश्रुतिरूपाभ्यासेन अपूर्वकर्मविधायकौ अनुवादमात्रस्य आनर्थक्यादिति पूर्वः पक्षः ।

सिद्धान्तस्तु— कर्मान्तरविधिपक्षे तयोः (कुतोऽप्यलाभात्) सर्वस्मै वा एतद्यज्ञायोपगृह्यते यद्ध्रुवायामाज्यमिति साधारण्येन विहितस्य ध्रौवाज्यस्य द्रव्यस्य लाभेऽपि देवतायाः कुतोऽप्यलाभात् कर्मान्तरविधायकत्वानुपपत्तेः । अनुवादचिह्नकर्तृसमानाधिकरणयावत्पदसमभिव्याहाराच्च अनुवाद एव । न चानुवादवैयर्थ्यं, तस्य दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्याग्नेयादीनां षण्णां फलसम्बन्धबोधकवाक्ये द्विवचनोपपत्तये (अमावास्यानुष्ठेय)-दर्शत्रिकस्य पौर्णमास्यनुष्ठेयत्रिकस्य च समुदायद्वित्वसम्पादनप्रयोजनकत्वात् । अन्यथा तेषां बहुत्वे बहुवचनापत्तेः ।

---

**20. पूर्वपक्षः—**

एवं विद्वान् पौर्णमासीममावास्यामितीरितम् ।
कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम् ॥
कर्मान्तरं हि स्यादभ्यासात् ध्रौवं द्रव्यं हि देवता ।
वार्त्रघ्नीत्यादितो लभ्यानुवादस्तु न युज्यते ॥

**सिद्धान्तः—**

वार्त्रघ्नीरित्याज्यभागाङ्गव्यवस्थोक्तेः न देवता ।
पौर्णेत्यनूद्यते पौर्णमासीत्युक्तं त्रिकं तथा ।
अमेत्यपि समूहस्य द्वित्वसिद्धिः प्रयोजनम् ॥ (जै.न्या.मा.)

न च विद्वद्वाक्यद्वयेन समुदायद्वित्वासम्पादनेऽपि फलवाक्यगतेन दर्शशब्देन पौर्णमासशब्देन च त्रिकस्य पृथक् पृथगुपादानात् समुदायद्वित्वसिद्धया द्विवचनोपपत्तिरिति वाच्यम्। द्विवचनान्तस्य प्रागेव नाम्नः सिद्धयर्थत्वा(ङ्गीकारा)भावे राजसूय नाम इव यजिपरतन्त्रतया यजेश्च सङ्कोचे कारणाभावेन आग्नेयादिष्विव सान्निध्यविशेषात् प्रयाजादिष्वप्रवृत्त्या प्रयाजादीनामपि तेन फलसम्बन्धो बोध्यते इति सर्वेषां समप्राधान्यम्। नामधेयमपि तदनुसारेण द्विवचनप्रतिरूपकं सर्वेषां नामेत्यापत्तेः । तस्मात् विद्वद्वाक्यद्वयेऽपि द्विवचनान्तं नामप्रसिद्धयर्थमुपपाद्य प्रसिद्धार्थनामावच्छेदेन सङ्कोच्य तेषामेव फलसम्बन्धेन प्राधान्यं व्यवस्थाप्यत इति नानुवादवैयर्थ्यम्॥

## 21. यागे शूद्रस्यानधिकाराधिकरणम् VI-1-7

षष्ठे प्रथमपादे चिन्तितम्— 'चातुर्वर्ण्यमविशेषात्' (VI-1-7-25) अग्निहोत्रादिषु किं चतुर्वर्णानामधिकारः उत अपशूद्राणामिति संशये विधिवाक्येषु विशेषाश्रवणात् चतुर्वर्णानामिति पूर्वः पक्षः ।

अग्निहोत्रादिकर्मणामग्निविद्यासापेक्षत्वात् अग्निविद्ययोश्च आधानोपनयनपूर्वकाध्ययनसाध्यत्वात् तयोश्च 'वसन्ते ब्राह्मणो अग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्' इति त्रिष्वेव दर्शनात् अन्यतो लब्धाग्निविद्यानां त्रैवर्णिकानामधिकारिणां सत्वेन कर्मविधिभिः शूद्रेष्वपि तयोराक्षेपकल्पनायां प्रमाणाभावात् अपशूद्राणामेव वेदविद्याधिकारः इति सिद्धान्तः ॥

---

21. **पूर्वपक्षः—**

शूद्रोऽपि यष्टा नो वा स्यादवैधाध्ययनेन वा ।
उपदेष्टृमुखाद्वास्य क्रतुवित्त्वेन यष्टृता ॥

**सिद्धान्तः—**

त्रिवर्णैः वेदविद्भिः कृतार्थाः विधयः क्रतोः ।
नाक्षिपन्ति चतुर्थस्य विद्यां तद्यष्टृता कुतः ॥ (जै.न्या.मा.)

## 22. ग्रहसम्मार्जनाधिकरणम्

### III-1-7

तृतीये प्रथमपादे चिन्तितम्— 'एकत्वयुक्तमेकस्य श्रुतिसंयोगात्' (III-1-7-13)

ज्योतिष्टोमे श्रूयते 'ग्रहं सम्मार्ष्टी'ति तत्र ग्रहैकत्वं विवक्षितं न वेति सन्देहे श्रुतस्य अविवक्षाकारणाभावात् विवक्षितमिति एकस्यैव ग्रहस्य सम्मार्गः इति पूर्वः पक्षः ।

सिद्धान्तस्तु— तद्विवक्षितं चेत् सम्मार्गवत् विधेयं वा स्यात् । ग्रहवदुद्देश्यं वा स्यात् । ग्रहत्ववदुद्देश्यविशेषणं वा स्यात् । आद्ये ग्रहमुद्दिश्यैकत्वं सम्मार्गश्चेति द्वयं विधेयमिति वाक्यभेदः स्यात् । द्वितीये ग्रहमेकत्वं चोद्दिश्य सम्मार्गो (विधेयं वा स्यात् ।) विधीयते इति प्रत्युद्देश्यं वाक्यपरिसमाप्त्या वाक्यभेदः । तृतीये एकत्वविशिष्टं गृहमुद्दिश्य संमार्गो विधेय इति स्यात् । न च तदुपपद्यते । विभक्त्यादिभिः युगपत् सङ्ख्याकारकं चोच्यते । न तु प्रथमं सङ्ख्यां प्रातिपादकार्थस्योक्त्वा पश्चात् तद्विशिष्टस्य कारकत्वमुच्यते येन एकत्वविशिष्टग्रहस्य कर्मत्वं स्यात् । तस्मात् एकत्वस्य विवक्षानुपपत्तेः प्रतिप्रधानं गुणावृत्तिन्यायेन सोमे आहुत्यर्थानां सर्वेषां ग्रहाणां सोमावसेकनिर्हरणाद्यर्थसम्मार्गाकाङ्क्षा-तौल्येन सर्वेषां सम्मार्गः इत्यवगत्या परिच्छेदकसङ्ख्याकाङ्क्षाविरहाच्च एकत्वं न विवक्षितमिति सर्वेषां सम्मार्गः ॥

---

22. पूर्वपक्षः—

सम्मार्ष्टि ग्रहमित्येको ग्रहः शोध्यः उताखिलः ।
एक उद्देशसङ्ख्याया उपादेयवदादरात् ॥

सिद्धान्तः—

प्राधान्यात् तद्गुणावृत्तेरेकत्वमनपेक्षितम् । (जै.न्या.मा.)

न च विद्वद्वाक्यद्वयेन समुदायद्वित्वासम्पादनेऽपि फलवाक्यगतेन दर्शशब्देन पौर्णमासशब्देन च त्रिकस्य पृथक् पृथगुपादानात् समुदायद्वित्वसिद्ध्या द्विवचनोपपत्तिरिति वाच्यम्। द्विवचनान्तस्य प्रागेव नाम्नः सिद्धयर्थत्वा(ङ्गीकारा)भावे राजसूय नाम इव यजिपरतन्त्रतया यजेश्च सङ्कोचे कारणाभावेन आग्नेयादिष्विव सान्निध्यविशेषात् प्रयाजादिष्वप्रवृत्त्या प्रयाजादीनामपि तेन फलसम्बन्धो बोध्यते इति सर्वेषां समप्राधान्यम्। नामधेयमपि तदनुसारेण द्विवचनप्रतिरूपकं सर्वेषां नामेत्यापत्तेः । तस्मात् विद्वद्वाक्यद्वयेऽपि द्विवचनान्तं नामप्रसिद्धयर्थमुपपाद्य प्रसिद्धार्थनामावच्छेदेन सङ्कोच्य तेषामेव फलसम्बन्धेन प्राधान्यं व्यवस्थाप्यत इति नानुवादवैयर्थ्यम्॥

## 21. यागे शूद्रस्यानधिकाराधिकरणम् VI-1-7

षष्ठे प्रथमपादे चिन्तितम्— 'चातुर्वर्ण्यमविशेषात्' (VI-1-7-25) अग्निहोत्रादिषु किं चतुर्वर्णानामधिकारः उत अपशूद्राणामिति संशये विधिवाक्येषु विशेषाश्रवणात् चतुर्वर्णानामिति पूर्वः पक्षः।

अग्निहोत्रादिकर्मणामग्निविद्यासापेक्षत्वात् अग्निविद्ययोश्च आधानोपनयनपूर्वकाध्ययनसाध्यत्वात् तयोश्च 'वसन्ते ब्राह्मणो अग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्' इति त्रिष्वेव दर्शनात् अन्यतो लब्धाग्निविद्यानां त्रैवर्णिकानामधिकारिणां सत्वेन कर्मविधिभिः शूद्रेष्वपि तयोराक्षेपकल्पनायां प्रमाणाभावात् अपशूद्राणामेव वेदविद्याधिकारः इति सिद्धान्तः॥

---

21. पूर्वपक्षः—

शूद्रोऽपि यष्टा नो वा स्यादवैधाध्ययनेन वा।
उपदेष्टृमुखाद्वास्य क्रतुवित्त्वेन यष्टृता॥

सिद्धान्तः—

त्रिवर्णैः वेदविद्भिः कृतार्थाः विधयः क्रतोः।
नाक्षिपन्ति चतुर्थस्य विद्यां तद्यष्टृता कुतः॥ (जै.न्या.मा.)

## 22. ग्रहसम्मार्जनाधिकरणम्

III-1-7

तृतीये प्रथमपादे चिन्तितम्— 'एकत्वयुक्तमेकस्य श्रुतिसंयोगात्' (III-1-7-13)

ज्योतिष्टोमे श्रूयते 'ग्रहं सम्मार्ष्टी'ति तत्र ग्रहैकत्वं विवक्षितं न वेति सन्देहे श्रुतस्य अविवक्षाकारणाभावात् विवक्षितमिति एकस्यैव ग्रहस्य सम्मार्गः इति पूर्वः पक्षः ।

सिद्धान्तस्तु— तद्विवक्षितं चेत् सम्मार्गवत् विधेयं वा स्यात् । ग्रहवदुद्देश्यं वा स्यात् । ग्रहत्ववदुद्देश्यविशेषणं वा स्यात् । आद्ये ग्रहमुद्दिश्यैकत्वं सम्मार्गश्चेति द्वयं विधेयमिति वाक्यभेदः स्यात् । द्वितीये ग्रहमेकत्वं चोद्दिश्य सम्मार्गो (विधेयं वा स्यात् ।) विधीयते इति प्रत्युद्देश्यं वाक्यपरिसमाप्त्या वाक्यभेदः । तृतीये एकत्वविशिष्टं गृहमुद्दिश्य संमार्गो विधेय इति स्यात् । न च तदुपपद्यते । विभक्त्यादिभिः युगपत् सङ्ख्याकारकं चोच्यते । न तु प्रथमं सङ्ख्यां प्रातिपादकार्थस्योक्त्वा पश्चात् तद्विशिष्टस्य कारकत्वमुच्यते येन एकत्वविशिष्टग्रहस्य कर्मत्वं स्यात् । तस्मात् एकत्वस्य विवक्षानुपपत्तेः प्रतिप्रधानं गुणावृत्तिन्यायेन सोमे आहुत्यर्थानां सर्वेषां ग्रहाणां सोमावसेकनिर्हरणाद्यर्थसम्मार्गाकाङ्क्षा-तौल्येन सर्वेषां सम्मार्गः इत्यवगत्या परिच्छेदकसङ्ख्याकाङ्क्षाविरहाच्च एकत्वं न विवक्षितमिति सर्वेषां सम्मार्गः ॥

---

22. पूर्वपक्षः—

सम्मार्ष्टि ग्रहमित्येको ग्रहः शोध्यः उताखिलः ।
एक उद्देशसङ्ख्याया उपादेयवदादरात् ॥

सिद्धान्तः—

प्राधान्यात् तद्गुणावृत्तेरेकत्वमनपेक्षितम् । (जै.न्या.मा.)

## 23. नातिरात्रे षोडशिनं गृह्णातीत्यादिनिषेधस्य विकल्परूपताधिकरणम्

## X-8-3

**दशमे अष्टमपादे चिन्तितम्— 'शिष्टत्वात् प्रतिषेधः स्यात्' (X-8-3-6) 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र नातिरात्र इति पर्युदासः प्रतिषेधो वेति संशये प्रतिषेध(विधि)विप्रतिषेधयोः भिन्नवाक्यत्वेन विकल्पापत्तेः नानुयाजेष्वितिवत् पर्युदासः इति पूर्वः पक्षः ।**

**नानुयाजेष्वित्यत्र अनुयाजव्यतिरिक्तेषु यागेषु 'ये यजामह' इति सामान्ये किञ्चिद्विशेषव्यतिरिक्तस्यैव अतिरात्रिव्यतिरिक्तातिरात्रे षोडशिनं गृह्णातीति तत्रैव तद्व्यतिरिक्तत्वविशेषणानुपपत्त्या पर्युदासायोगात् तत्प्रतिषेधः । अगत्या व्रीहियववद् विकल्पः इति सिद्धान्तः ॥**

---

**23. पूर्वपक्षः—**

नातिरात्रे पर्युदासो वादो वाथ निषेधनम् ।
आद्योनुयाजवन्मैवं विध्येक विषयत्वतः ॥
अत एवार्थवादोऽपि न युक्तः पशुसोमवत् ॥

**सिद्धान्तः—**

निषेधः स्यात् विकल्पोऽत्र व्रीह्यादाविव युज्यते । (जै.न्या.मा.)

## 24. चित्रादिशब्दानां यागनामाधिकरणम्

I -4-3

प्रमाणलक्षणे नामपादे चिन्तितम्— 'यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः' (I-4-3-3) आज्यैः स्तुवते इति स्तोत्रप्रकरणे श्रुतेः 'पञ्चदशान्याज्यानी'त्यत्र आज्यशब्दो गुणविधिः कर्मनामधेयं वेति संशये रूढिप्रावल्यात् पञ्चदशसङ्ख्याविशिष्ट(घृतलक्षणो)गुणविधिः। तथा च 'अग्निमुपनिधाय स्तुवते' इत्यत्र अग्नीनां स्तोत्रकाले पुरोनिधानेनैव आज्यानामपि पात्रभेदलब्धपञ्चदशसङ्ख्यानां तत्काले सन्निधापनेन स्तोत्रगुणता। एवञ्च 'आज्यैः स्तुवते' इत्युत्पत्तिवाक्यगतमपि आज्यपदं गुणविधिप्रामाज्यानुवादकमिति पूर्वः पक्षः।

सिद्धान्तस्तु— पञ्चदशान्योज्यानीति भिन्नपदोपात्तयोः द्रव्यसङ्ख्ययोः न परस्पर-वैशिष्ट्यावगतिरित्युभयोरपि स्तोत्राङ्गतया प्रत्येकं विधौ वाक्यभेदापत्तेः आज्यपदं प्रकृत-स्तोत्रनामधेयमिति स्तोत्रानुवादेन सङ्ख्याविधिः अतश्च उत्पत्तिवाक्ये आज्यपदं स्तोत्र-नामधेयमिति ॥

---

24. सिद्धान्तः—

स्यान्नाम पृष्ठाज्यबहिष्पवमानेषु तत्तथा। (जै.न्या.मा.)

अस्मिन्नधिकरणे चित्राबहिष्पवमानाज्यपृष्ठशब्दानां नामधेयत्वं व्यवस्थापितम्। अत्र तु प्रकृतोपयोगित्वात् आज्यशब्दस्य नामधेयत्वमात्रं निरूपितम्।

# 25. उपांशुयाजापूर्वताधिकरणम्

द्वितीयाध्याये द्वितीयपादे चिन्तितम्— 'पौर्णमासीवदुपांशुयाजः स्यात्' (II-2-4-9) दर्शपूर्णमासयोः श्रूयते 'जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति। तत्र सन्देहः। किं विष्ण्वादिवाक्येषु त्रिषु यागविधयः। उपांशुयाजवाक्यं तु तत्समुदायानुवादः। उत उपांशुयाजवाक्ये यागविधिः विष्ण्वादिवाक्यत्रयं तदर्थवादः इति। तत्र विष्ण्वादिवाक्येषु तव्यप्रत्ययदर्शनात् ध्रौवा-ज्यसत्त्वेन विष्ण्वादिश्रवणेन च द्रव्यदेवतात्मकरूपलाभाच्च तेष्वेव विधयः। न उपांशु-याजवाक्ये। वर्तमानमात्रोपदेशात् सर्वयज्ञसाधारणध्रौवाज्यरूपद्रव्यलाभेऽपि देवताया अलाभाच्च तद्यागत्रयसमुदायानुवाद इति पूर्वः पक्षः।

सिद्धान्तस्तु— जामि वा एतदित्याद्युपक्रमे पुरोडाशद्वयनैरन्तर्यप्रयुक्तजामितादोषः उक्तः। तन्निर्हरणाय तदन्तराले पुरोडाशद्रव्यकं भिन्नं किञ्चित् कर्म विधित्सितमिति प्रथम-मवगमात् जामितादोषोपक्रमात् जामित्वोपसंहारैकरूप्यप्रतीतैकवाक्यत्वलाभाच्च पञ्चम-लकारकल्पनया उपांशुयाजवाक्य एव अन्तरालसंयुक्तयागविधिः।

तस्य याज्यानुवाक्याकाण्डगताग्नेयाग्नीषोमीययाज्यानुवाक्यायुगलद्वयमध्याम्नानरूप-क्रमप्रमाणावगततदङ्गभागवैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलत्रयरूपमन्त्रवर्ण-प्रापित(प्राप्ति)विकल्पितविष्ण्वादिदेवतासत्त्वेन रूपालाभशङ्कानुदयात्।

न तु विष्ण्वादिवाक्येषु यागविधयः। उपक्रान्तजामितादोषस्य अन्तरालसंयुक्तयाग-विधिनेव विष्ण्वादिसंयुक्तयागविधिभिरपरिहारात्। प्रतीतैकवाक्यताभङ्गप्रसङ्गाच्च। तस्माद् विष्ण्वादिवाक्यत्रयं मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेन तद्दैवत्यतया उपांशु याजस्तावकमिति॥

---

25. पूर्वपक्षः—

उपांशुयाजमित्येषोऽनुवादोऽथवा विधिः।
विष्ण्वादिवाक्ये विस्पष्टविधेरस्यानुवादता॥

सिद्धान्तः—

जामित्वोक्तेरन्तराले उपांशुगुणके विधौ।
गन्त्यर्थवादो विष्ण्वादिः तद्रूपं ध्रौवमन्त्रतः॥ (जै.न्या.मा.)

## 26. प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासाधिकरणम्

X-8-1

दशमेऽध्याये अष्टमपादे चिन्तितम्— 'प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषेद्धत्वात् विकल्पः स्यात्' (X-8-1-1)

चातुर्मास्येषु महापितृयज्ञे इष्टित्वादविशेषेण दर्शपूर्णमासविध्यन्तप्राप्तौ इदमाम्नायते।

'नार्षेयं वृणीते न होतारमि'ति। अत्र नञर्थः प्रतिषेधः पर्युदासो वेति संशये प्रतिषेधत्वे त्प्रतिषिध्यते तत्र तस्य प्राप्तिपूर्वकत्वात् महापितृयज्ञे आर्षेयवरणादिकर्तृकत्वस्य लोकतः ाप्त्यभावात् शास्त्रप्राप्तस्य सर्वथाननुष्ठाने प्रापकशास्त्राप्रामाण्यप्रसङ्गात् अगत्या विकल्पो भवति। पर्युदासत्वे तु प्रकृतिवत्कुर्यात् 'आर्षेयवरणादिवर्जमि'ति तस्यातिदेशशास्त्रशेषतया देकवाक्यत्वेन अतिदेशशास्त्रस्य वरणातिरिक्ताङ्गविषयत्वात् अविहितमेव वरणं पितृयज्ञे ति नियमतस्तद्वर्जनं भवतीति फलभेदः। तत्र पर्युदासपक्षे नञ् धातुभ्यां वरणव्यतिरिक्त-ाकृताङ्गलक्षणाप्रसङ्गात् मुख्यार्थानुग्रहाय प्रतिषेध इति पूर्वपक्षे, अष्टदोषदुष्टविकल्पात् वरं लक्षणया पर्युदासाश्रयणमेकवाक्यत्वस्यापि सम्पादकमिति सिद्धान्तः॥

---

26. पूर्वपक्षः—

नार्षेयं न च होतारं नानुयाजेष्वितीदृशे।
विकल्पः पर्युदासो वा स्यादाद्यो वचनद्वयात्॥

सिद्धान्तः—

अन्यायत्वाद्विकल्पस्य विध्यंशः स निषेधगीः।
तेनानुयाजवाक्यस्थः तदर्थं पर्युदस्यति॥ (जै.न्या.मा.)

## 27. छागस्यैवाग्नीषोमीयपशुताधिकरणम्

### VI-8-10

षष्ठे अष्टमपादे चिन्तितम्— पशुचोदनायामनियमोऽविशेषात् (VI-8-10-30) 'यो दीक्षितो यदग्नीषोमीयपशुमालभते' इत्यत्र यः कश्चित् पशुः आलब्धव्यः उत छाग एवेति । चोदनायां सामान्यश्रवणात् छागस्य वपायाः (वपायामेकादश) मेदसः इति मन्त्रे विशेष-श्रवणाच्च संशयः । तत्र प्रधानभूतचोदनास्थपशुशब्दानुसारेण चोदितार्थप्रकाशकतया तत्परतन्त्रे मन्त्रे श्रुतस्य छागशब्दस्य कथञ्चित् छन्नगमनत्वादियोगेन पशुसामान्यप्रका-शकत्वस्य छागालम्भनपक्षे मन्त्रप्रयोगस्य वा कल्पनाद् यः कश्चिदालब्धव्यः ।

न चोक्ताधिकरणन्यायेन विशेषपर्यवसानं विध्युद्देशार्थवादस्य पदैकवाक्यतया अर्थ-वादान्वयात् प्रागपर्यवसितस्य तस्य अर्थवादोपात्तविशेषपर्यवसानेऽपि मन्त्रान्वयात् प्राक् पर्यवसिततत्प्रकाश्यविशेषपर्यवसानायोगादिति पूर्वः पक्षः ।

चोदनोपात्तस्य पशुत्वसामान्यस्य छागेऽप्यविकलस्य सत्त्वेन मन्त्रस्य तद्विरोधा-भावात् अनुष्ठानाय चोदनाया अपि विशेषसापेक्षत्वादविरुद्धस्य आकाङ्क्षितस्य विशेषस्य वाक्यान्तरार्पितस्यापि ग्रहणसम्भवात् नित्यवदाम्नातेन मन्त्रेण रूढ्यर्पितछाग एवालब्धव्यः ॥ इति सिद्धान्तः ॥

---

27. पूर्वपक्षः—

अग्नीषोमीयकः कोऽपि छाग एवोन चोदिते ।
अविशेषेण कोऽपि स्यात्

सिद्धान्तः—

छागो मन्त्रे विशेषणात् । (जै.न्या.मा.)

# 28. आग्नीध्रोपस्थाने प्रकृतानां मन्त्राणां विनियोगाधिकरणम्

## III-2-8

तृतीयाध्याये द्वितीयपादे वर्णितम्— 'अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात्' (III-2-8-20) ज्योतिष्टोमे काश्चिद् 'अग्न आयाहि वीतये' इत्याद्याः आग्नेय्यः ऋचः समाम्नाताः तत्रैव श्रुतम् 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति। तत्र संशयः किं यया कयाचित् आग्नीध्रोपस्थानं कर्तव्यमुत प्रकृतानां मध्य एव कयाचिदिति।

तत्र पूर्वपक्षः यत्र व्रीहीन् प्रोक्षतीत्यादौ व्रीह्यादीनुद्दिश्य प्रोक्षणादिसंस्काराः विधीयन्ते तत्र अपूर्वासम्बन्धिनां संस्कारस्य वैयर्थ्यात् 'व्रीहिभिः यजेते'त्यादिभिः अपूर्वसम्बन्धित्वेन प्रकृता एव ग्राह्याः इति युक्तम्। इह तु न आग्नेयीमुद्दिश्य उपस्थानं विधीयते किन्तु उप-स्थानकरणतया आग्नेयी उपादीयते। तृतीयानिर्देशात्। तत्र च शब्दार्थमात्रस्य अङ्गत्वात् न प्रकृतनियम इति।

सिद्धान्तस्तु— यौगिकत्वादाग्नेयीशब्दः सन्निहितामेव व्यक्तिमालम्बते। विग्रहवाक्य-समानशीलत्वात्। समासस्य विग्रहवाक्यस्य च 'अग्निर्देवता यस्ये'ति सर्वनामघटितत्वेन सन्निहितविषयत्वात् अतः प्रकृतयैव उपस्थानमिति।

---

28. पूर्वपक्षः—

आग्नेय्याग्नीध्रमित्यादिदेवताकाः ऋचोऽखिलाः।
उपस्थाने प्रयोक्तव्याः प्रकृता एव ते उत।
साधारण्येन शब्दोक्तेः सर्वाभिः तदुपस्थितिः॥

सिद्धान्तः—

विशेषे विधिसङ्क्रात्या प्रकृताभिरितीष्यताम्। (जै.न्या.मा.)

## 29. वाक्यशेषेण सन्दिग्धार्थनिर्णायकाधिकरणम्

### I-4-19

नामधेयपादे चिन्तितम्— 'सन्दिग्धेषु वाक्यशेषात्' (I-4-19-29) 'अक्ताः शर्करा उपदधाति', 'तेजो वै घृतमि'त्यत्र शर्कराणामञ्जनं घृततैलवसाद्यन्यतमेन द्रवद्रव्येण कर्तव्य-मुत वाक्यशेषोपात्तेनाघृतेनेति। विधौ विशेषाश्रवणात् अर्थवादानुसारेण प्रधानस्य विधेः नयनायोगात् येन केनचिदञ्जनम्। अर्थवादस्थघृतशब्दस्तु विध्यनुरोधात् द्रवद्रव्यमात्रलक्षकः अस्तु इति पूर्वः पक्षः।

विधौ अञ्जनक्रियाक्षिप्तद्रवद्रव्यसामान्यस्य घृतेऽपि सत्त्वात् निर्विशेषसामान्यानुष्ठा-नासम्भवेन क्वचिद्विशेषपर्यवसानस्य विधिनैवाक्षिप्तत्वात् वाक्यशेषोपात्ते विशेषे स्थिते विशेषान्तरकल्पनानौचित्याच्च विधेयस्तावकवाक्यशेषानुसारात् घृते नैव अञ्जनमिति सिद्धान्तः॥

---

29. पूर्वपक्षः—

शर्करा उपधत्तेऽक्ताः तेजो वै घृतमत्र किम्।
तैलादिनाञ्जिता अक्ता घृतेनैवाथवाञ्जनम्॥
तैलादिनापि मुख्यत्वादसञ्जातविरोधनात्।
अप्राप्तार्थत्वतश्चास्य विधेर्वादाद् बलित्वतः॥

सिद्धान्तः—

सामान्यमननुष्ठेयं विशेषस्तु विधौ न हि।
घृतेनैवाञ्जनं वाक्यशेषात् सन्दिग्धनिर्णयात्॥
अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी।
बोधयन्ती विधेयत्वं घृतस्य गमयेद्विधिम्॥ (जै.न्या.मा.)

## 30. गवानयनस्य पदकर्माप्रयुक्तताधिकरणम्

## IV-1-10

चतुर्थे प्रथमपादे चिन्तितम्— 'पदकर्माप्रयोजकं नयनस्य परार्थत्वात्' (IV-1-10-25) ज्योतिष्टोमे एकहायन्या सोमं क्रीणाती'ति एकहायन्या गवा सोमक्रयणं प्रकृत्य षट्पदा-पनुनिष्क्रामति सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीति षट्पदनयनानन्तरं सप्तमपदपांसुग्रहणं विधाय र्हि हविर्धाने प्राची प्रवर्तयेयुः तर्हि तेनाक्षमुपाञ्ज्यादिति हविर्धानशकटप्रवर्तनकाले तदक्षाञ्जनं न पदपांसुना कर्तव्यमाम्नायते । तत्र सन्देहः । सोमक्रयणवत् पदपांसुसाध्या-क्षाञ्जनमपि कहायनीनयनस्य प्रयोजकमित्यक्षाञ्जनार्थसङ्गृहीतपदपांशुविनाशादौ तन्निष्प-त्त्यर्थं नरप्येकहायनीनयनं कर्तव्यमुत न तत्तस्य प्रयोजकमिति न कर्तव्यमिति । उभयो-प्येकहायन(नी)नयनसाध्यत्वात् उभयं प्रयोजकमिति पूर्वः पक्षः ।

'एकहायन्या सोमं क्रीणाती'त्येकहायन्याः क्रयणार्थत्वेनैव विधानात् यदर्थं द्रव्यं तदर्थः त्संस्कार इत्येकहायन्याः सोमक्रयणदेशं प्रति नयनरूपस्य संस्कारस्यापि क्रयणार्थ-वात् क्रयणमेव तन्नयनप्रयोजकम् । अन्यदनुनिष्पादीति सिद्धान्तः ॥ एतदधिकरणं सप्तमं दमित्यत्र पदशब्दस्य सन्निधानादेकहायनीपदविषयकत्वं सिद्धं कृत्वा प्रवृत्तमिति पदि-यायेनेत्युक्तम् ।

---

30. पूर्वपक्षः—

सोमक्रयण्या नयने पदकर्म प्रयोजकम् ।
नवाद्योऽक्षाञ्जनस्यापि क्रयवत् सन्निकर्षतः ॥

सिद्धान्तः—

तृतीयया क्रयार्था गौः तद्वारानयनस्य च ।
तादर्थ्यात् तत्प्रयुक्तं तन्न प्रयोजकता पदे ॥ (जै.न्या.मा.)

## 31. हस्तावनेजादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम्

### III-1-14

तृतीयाध्याये वर्णितम्— 'आनन्तर्यमचोदना' (III-1-14-24) दर्शपूर्णमासयोः श्रुतम्— 'हस्तावववनेनिक्ते उलपराजिं स्तृणाति' इति । अत्र हस्तसंस्कारार्थतया करिष्य-माणस्य हस्तावनेजनस्य कर्माङ्गतायां स्थितायां किं तद् अनन्तरस्य वेद्यां उलपराजि-संज्ञकदर्भमुष्टिसंस्तरणस्याङ्गम् उत करिष्यमाणसकलकर्माङ्गमिति संशयः ।

तत्रानन्तर्यलक्षणक्रमात् तन्मात्राङ्गत्वप्राप्तौ हस्तशुद्ध्याकाङ्क्षालक्षणस्य प्रकरणस्य क्रमात् प्रबलस्य सर्वकर्मणामविशेषात् सर्वाङ्गत्वमिति सिद्धान्तः ॥

---

31. पूर्वपक्षः—

हस्तौ द्वाववनेनिक्तेस्तृणात्युलपराजिकाम् ।
दर्भास्तरण एवाङ्गं हस्तशुद्धिरुताखिलम् ।
तन्मात्राङ्गत्वमत्र स्यादानन्तर्यात्मकात् क्रमात् ॥

सिद्धान्तः—

लिङ्गप्रकरणाभ्यां तु सर्वानुष्ठानशेषता ॥ (जै.न्या.मा.)

# 32. अनुषङ्गाधिकरणम्

## II -1-17

द्वितीयाध्याये प्रथमपादे विचारितम्— 'अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात्' (II-1-17-48) 'या ते अग्ने अयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा', 'या ते अग्ने रजाशया', 'या ते अग्ने हराशया' इति मन्त्रत्रयमाम्नायते। तत्र 'रजाशया' हराशया' मन्त्रयोः साकाङ्क्षयोः किं लौकिकशेषोऽध्याहर्तव्यः उत 'अयाशया' मन्त्रशेषः तनूर्वर्षिष्ठेत्यादिरेव तयोरपि अनुषङ्गेण शेषः इति सन्देहे लोके विवक्षानुसारेण अनुषङ्गेऽपि न वेदेषु अनुषङ्गः। क्रमनियमवति वेदे यदर्थं वाक्यशेषाम्नानं ततोऽन्यत्रास्य नयनायोगात्। तस्मादध्याहारः इति पूर्वः पक्षः।

---

**32. पूर्वपक्षः—**

या ते अग्ने रजेत्यध्याहारो यद्वानुषञ्जनम्।
तनूरित्यन्यशेषत्वादध्याहारोऽत्र लौकिकः॥

**सिद्धान्तः—**

वेदाकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनम्।
अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः॥ (जै.न्या.मा.)

**पूर्वपक्षः—**

एकत्रैव निबद्धो हि समाम्नायेन वैदिकः।
शेषोऽन्यत्र न नेतव्यो लौकिकस्त्वनिबन्धनः॥ (शा.दी.)

**सिद्धान्तः—**

यथापेक्षितरूपे हि वाक्यशेषे समर्थिते।
वेदेन लौकिकः शेषो न मृग्यो निष्प्रमाणकः॥ (शा.दी.)

जैमिनीयन्यायमालायामिदं षोडशाधिकरणमिति गणितम्। 'अच्छिद्रेण पवित्रेण' इत्यस्य विचारः सप्तदशाधिकरणमिति। शास्त्रदीपिकायां षोडशसप्तदशाधिकरणे समुच्चित्य अनुषङ्गाधिकरणमिति कल्पितम्। भाट्टसङ्ग्रहे सप्तदशाधिकरणे वर्णकद्वयं प्रदर्श्य 'या ते अग्ने' इतीदं प्रथमवर्णके चिन्तितम्। 'अच्छिद्रेण पवित्रेण' इति तु द्वितीये वर्णके चिन्तितम्।

सिद्धान्तस्तु— वैदिके वाक्यशेषे लभ्यमानेन लौकिकशेषः वेदे अध्याहार्यः । शक्नोति चायं सर्वैरन्वेतुम् । अन्वयकारणानामाकाङ्क्षायोग्यतासन्निधीनामविशेषात् । व्यवहित-समाम्नातानामपि असम्बन्धिपदनिचयव्यवधानाभावेन बुद्धिविषयवृत्तिरूपसन्निधिसत्त्वात् आनन्तर्यस्याप्रयोजकत्वात् । तस्मादाम्नातानामेव सर्वार्थत्वमिति सर्वस्यैवायं शेष इति ।

## 33. प्रोक्षण्यादिशब्दानां योगिकताधिकरणम्

I-4-9

नामधेयपादे चिन्तितम्— 'प्रोक्षणीष्वर्थसंयोगात्' (I-4-9-11) दर्शपूर्णमासयोः 'प्रोक्षणीरासादयती'त्यत्र प्रोक्षणीशब्दः संस्कारशब्दो जातिशब्दो यौगिको वेति संशये उत्पवनादिसंस्कृतासु अप्सु तत्प्रयोगस्य सार्वभौमत्वात् संस्कारशब्दः इत्येकः पक्षः । 'प्रोक्षणीभिरुद्वेजिताः स्मः' इति क्वचिद्देशे अस्वजातिमात्रे प्रयोगदर्शनात् असंस्कृतासु अप्सु प्रयोगस्यापि तद्वाचित्वेनैव निर्वाहसम्भवाच्च जातिशब्दोऽयमित्यन्यः पक्षः । 'उक्ष सेचने' इति धातोः प्रोपसृष्टात् ल्युटि स्त्रीप्रत्ययान्तस्यास्य शब्दस्य प्रकृष्टसेककरणभूतास्वप्सु क्लृप्तयोगेनैव प्रयोगोपपत्तौ रूढ्यकल्पनाद् योगः इति सिद्धान्तः ॥

---

33. पूर्वपक्षः—

प्रोक्षणीः संस्कृतिर्जातिः योगो वा सर्वभूमिषु ।
तथोक्तेः संस्कृतेः जातिः स्याद्रूढेः प्रबलत्वतः ॥

सिद्धान्तः—

अन्योन्याश्रयतो नाद्यो न जातिः कल्प्यशक्तितः ।
योगः स्यात् क्लृप्तशक्तित्वात् क्लृप्तिर्व्याकरणाद् भवेत् ॥

रूढिर्लब्धात्मिका योगं बाधते न त्वलब्धात्मिका ।
तत्रैव चात्मलाभोऽस्या यत्र नावयवार्थता ॥ (शा.दी.)

## 34. शास्त्रप्रसिद्धार्थप्रामाण्याधिकरणम्

I-3-5

स्मृतिपादे चिन्तितम्— 'तेष्वदर्शनात् विरोधस्य समा विप्रतिपत्तिः स्यात्' (I-3-5-8) यवमयश्चरुर्भवति', 'वाराही उपानहावुपमुञ्चते', 'वेतसे कटे प्राजापत्यान् सञ्चिनोति' इति विधिवाक्येषु यववराहवेतसशब्दानां कैश्चित् प्रियङ्गुवायसजम्बूवृक्षेषु कैश्चित् दीर्घशूक-सूकरवञ्जुलेषु प्रयुज्यमानानां व्यवहारविप्रतिपत्त्या अर्थानिर्णये प्राप्ते।

'शास्त्रस्था वा तन्निमित्तत्वात्' (I-3-5-9) इति सिद्धान्तसूत्रेण 'यत्रान्या ओषधयो म्लायन्ते अथैते) तत्रैते मोदमाना इवोत्तिष्ठन्ति', 'वराहं गावोऽनुधावन्ति', 'अप्सुजो वेतसः' इति वादिविधिवाक्यशेषाणां यवादीनां क्रमेण अन्यौषधिम्लानिकाले फाल्गुने मोदमान-त्वस्य गोसादृश्यस्य जलोद्भवत्वस्य च प्रतिपादकागमानुगुण्येन दीर्घशूकादिव्यवहारस्य बलीयस्त्वाद् दीर्घशूकादिरेवार्थो ग्राह्य इति॥

---

34. पूर्वपक्षः—

यवादिशब्दाः किं द्व्यर्थाः नो वाऽऽर्यम्लेच्छसाम्यतः।
दीर्घशूकप्रियंग्वाद्याः द्वयेऽप्यर्था विकल्पिताः॥

सिद्धान्तः—

यत्रान्या इति शास्त्रस्था प्रसिद्धिस्तु बलीयसी।
शास्त्रीयधर्मे तेनात्र प्रियंग्वादिन गृह्यते॥ (जै.न्या.मा.)

पूर्वपक्षः—

लोकप्रसिद्धिगम्यत्वात् शब्दार्थस्योभयोरपि।
समा विप्रतिपत्तिः स्यात् शास्त्रार्थे हि बलाबलम्॥ (शा.दी.)

सिद्धान्तः—

प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते।
अविप्लुतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते॥ (शा.दी.)

## 35. आग्नेयादिशब्दानामनामताधिकरणम्

### I-4-7

'तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः' (I -4-7-9) 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'त्यत्राग्नेयशब्दः कर्मनामधेयं गुणविधिर्वेति संशये अष्टाकपालशब्दितस्य अष्टसु कपालेषु संस्कृतस्य पुरोडाशद्रव्यस्य अग्नेर्देवतायाश्च विधाने अनेकगुणविधानरूपगौरवप्रसङ्गात् । द्रव्यमात्रविशिष्टो यागो विधीयते । आग्नेयपदं तु याज्यानुवाक्यकाण्डे अस्य यागस्य 'अग्निर्मूर्धा दिवः ककुद्, भुवो यज्ञस्य रजसश्च नेता' इति अग्निदेवताकयाज्यानुवाक्यायुगलपाठात् तल्लब्धाग्निदेवतात्वरूपप्रवृत्तिनिमित्तं कर्मनामधेयमिति पूर्वः पक्षः ।

सिद्धान्तस्तु— 'यदाग्नेय' इति वाक्ये यागः प्रत्यक्षो न श्रूयते इत्यतो द्रव्यदेवतासम्बन्धेन यागाविनाभूतेनाक्षेप्यः । आक्षिप्ते च सति यागे मन्त्राकाङ्क्षायां मन्त्रान्वयः । अतो मन्त्रान्वयात् प्रागेव यजिकल्पनात् देवतोपस्थितेः वक्तव्यत्वात् आग्नेयशब्दो गुणविधिरिति ॥

---

35. **पूर्वपक्षः—**

यदाग्नेयोऽष्टाकपाल इति नामगुणोऽथवा ।
नामाग्निहोत्रवत्

**सिद्धान्तः—**

मैवं नामत्वे देवता न हि ।
मन्त्रोऽपि नेह प्रत्यक्षः तद्धितादेवताविधिः ।
द्रव्यदेवविशिष्टस्य विधानादेकवाक्यता ॥ (जै.न्या.मा.)

## 36. प्रयोजनैक्ये गुणानां विकल्पाधिकरणम्

## XII-3-4

द्वादशाध्याये तृतीयपादे चिन्तितम्— 'एकार्थस्तु विकल्पेरन् समुच्चये हि आवृत्तिः स्यात् ानस्य' (12-3-4-10) दर्शपूर्णमासयोः व्रीहिभिर्यजेत यवैर्यजेत इति श्रुतयोः व्रीहियवयोः ुच्चायो विकल्पो वेति संशये सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहाय प्रमाण-ाप्रमाणत्वपरित्यागकल्पनात् तदुपजीवनहानाच्च प्रत्येकस्याष्टदोषदुष्टतेत्यष्टदोषनिदान-कल्पपरिहाराय च समुच्चयः इति पूर्वः पक्षः ।

सिद्धान्तस्तु— न तावत् व्रीहियवयोः मिश्रपुरोडाशनिष्पादनेन समुच्चयः सम्भवतीति यमविधिलब्धनैरपेक्षवाधापत्तेः व्रीहियवशास्त्रेषु नियमविधिः । कपालेषु श्रपयतीति ायं श्रपणविधानादेव यत्किञ्चित् प्रकृतद्रव्योपादानस्य प्राप्त्या प्राप्तप्रापकत्वात् ताभ्यां प्राप्तांशपरिपूरणवशादितरव्यवच्छेदपर्यवसन्नाभ्यां व्रीहिणां यवानां च नैरपेक्ष्यं लब्धं तद् ध्येत ।

नापि प्रत्येकं पुरोडाशद्वयनिष्पाद्ययागाभ्यासेन समुच्चयः सम्भवति अङ्गानुरोधेन ानप्रवृत्तिरन्यायत्वात् । तस्मादगत्या विकल्पः । न च प्रयोगवचनविरोधः । प्रकृति-ययोः प्रत्येकं पुरोडाशनिष्पादनसमर्थयोः परस्परनिरपेक्षवाक्याभ्यां विहितयोः (प्र)योग-ानेनापि पुरोडाशद्वारा पर्यायेणैव ग्रहणादिति ॥

---

36. पूर्वपक्षः—

समुच्चयो यवव्रीह्योः विकल्पो वात्र पूर्ववत् ।
आद्यः

सिद्धान्तः—

मैवं नैरपेक्ष्याददृष्टाभेदतोऽन्तिमः । (जै.न्या.मा.)

# 37. अन्तर्वेदेः यूपानङ्गताधिकरणम्

## III-7-6

तृतीयाध्याये सप्तमपादे चिन्तितम्— तथा यूपस्य वेदिः (III-7-6-13) अग्नी-षोमीयपशौ यूपं प्रकृत्य श्रूयते 'अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि' इति तत्र संशयः । किमन्तर्वेद्येकदेशः यूपाङ्गत्वेन चोद्यते उत बहिर्वेद्येकदेशसन्निहितं स यूपाङ्गमन्तरालं (देशं) लक्षयतीति । तत्र लक्षणायाः अन्याय्यत्वात् अन्तर्वेद्येकदेशः (श्रूयते) श्रुतो यूपार्धाङ्गत्वेन (अ)विधीयते । 'अर्धं बहिर्वेदि' इति तु अर्धे अन्तर्नीयमाने अर्धान्तरं बहिर्भवतीत्यनूद्यते । न सोऽपि विधीयते, येन वाक्यभेदः स्यादिति पूर्वः पक्षः।

सिद्धान्तस्तु— अर्धमन्तर्वेदि ज्ञातव्यमित्येतावन्मात्रविधौ अर्धान्तरं बहिरित्यविधानादप्रतिषेधाच्च तस्यान्तर्बहिर्वा मानं स्यात् । ततश्चान्तर्बहिरिति पाक्षिकोऽनुवादो भवेदिति नित्यवत् श्रवणविरोधात् तस्यापि पृथग् विधौ वाक्यभेदापत्तेः यत्र देशे नीयमानस्यार्धमन्तर्वेदि भवति अर्धं बहिर्वेदि तत्र मिनुयादित्युभयलक्षितान्तरालदेशविधिरिति ।

---

37. पूर्वपक्षः—

अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत् ।
देशं यूपाङ्गभावेन वेदिभागोऽत्र बोध्यते ।

सिद्धान्तः—

बहिर्वेद्यर्धमित्येतद् वाक्यं भिद्येत तद्विधौ ॥
मीयमानस्य यूपस्य तावान् देशोऽत्र लक्ष्यते । (जै.न्या.मा.)

## 38. न तौ पशौ करोतीत्यादिनिषेधस्यार्थवादताधिकरणम्

## X-8-2

दशमे अष्टमपादे चिन्तितम्— 'अपूर्वे चार्थवादः स्यात्' (X -8-2-5) दर्शपूर्णमासयोः आज्यभागौ प्रकृत्य श्रूयते 'न तौ पशौ करोति, न सोमेऽध्वरे' इति । तत्र न सोमेऽध्वरे इति प्रतिषेधः पर्युदासः अर्थवादो वेति संशये मुख्यार्थलाभात् प्रतिषेधः विकल्पभयात् पर्युदासो वेति पूर्वः पक्षः ।

सिद्धान्तस्तु— न प्रतिषेधः पर्युदासो वा सम्भवति । सोमे आज्यभागयोः अनाम्नानेन सोमस्य दर्शपूर्णमासविकृतित्वाभावेन उपदेशतोऽतिदेशतो वा तयोः प्रसक्त्यभावात् । न च सोमाङ्गभूतेषु दीक्षणीयादिषु तयोः अतिदेशतः प्रसक्त्या सोमद्वारा तेषु प्रतिषेधादिः शक्यः । तथा सति प्रकृतिपशोः अग्नीषोमीयस्यापि सोमाङ्गतया 'न सोम' इत्यनेनैव तत्राज्यभागाननुष्ठानसिद्ध्या 'न तौ पशौ' इत्यस्य वैयर्थ्यापत्तेः । तस्मात् 'न तौ पशौ इति' पशौ आज्यभागप्रतिषेधः । न सोम इत्ययमर्थवादः । एवं नाम अयमाज्यभागप्रतिषेधः प्रशस्तः यदाज्यभागरहितेन महाक्रतुना सोमेन साम्यमापादयतीति ।

अथ 'न तौ पशौ' इत्ययं प्रतिषेधः पर्युदासो वेति चिन्तनीयम् । तत्र विकल्पपरिहाराय पर्युदासत्वप्राप्तावुच्यते । पर्युदासत्वे अनन्तरवृत्ताज्यभागविधिशेषत्वं तावत् न सम्भवति । तस्य दर्शपूर्णमासमात्रविषयत्वेन पशुसाधारण्याभावात् पशुव्यतिरिक्तत्वस्य च वैयर्थ्येन

---

38. पूर्वपक्षः—

न सोमेऽध्वर इत्युक्तौ निषेधः पर्युदस्यते ।
उतार्थवादो वाऽऽद्यः स्यादसमस्तपदोक्तितः ।
सोमे प्रवृत्तिरङ्गेष्टावविकल्पाय मध्यमः ।
नैवारस्त्वत्र समासस्य नियमः पाणिनेर्मते ।
पुरैतस्मात् सोमयागः आज्यभागप्रसक्तितः ।
न पर्युदासः

सिद्धान्तः—

किन्त्वर्थवादः दृष्टान्तवर्णनात् । (जै.न्या.मा.)

दर्शपूर्णमासविशेषणत्वायोगात्। नापि पाशुकप्रकृतिवच्छेषत्वं तस्यात्रासन्निधानात्। तच्छेषत्वेन सोमेऽध्वरे इत्यर्थवादानन्वयाच्च । न हि एवं सम्भवति यथा सोमस्य आज्यभागव्यतिरिक्तमैष्टिकमङ्गं कर्तव्यं तथा पशोरपीति। तस्यापूर्वत्वादैष्टिकाङ्गाभावात्। सम्भवति तु एवं यथा सोमस्य आज्यभागौ न कर्तव्यौ तथा पशोरपीति। तस्मात् प्रतिषेधमात्रम्। तस्य च शास्त्रप्राप्तिसापेक्षत्वात् पशौ आज्यभागतत्प्रतिषेधयोरगत्या विकल्पः ।

## 39. एकहविरार्तावपि पञ्चशरावनिर्वापाधिकरणम्

### VI -4-6

षष्ठे चतुर्थपादे विचारितम्— 'यथाश्रुतीति चेत्' (VI-4-6-22) दर्शपूर्णमासयोः दोहौ प्रकृत्य श्रुतम् 'यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्च शरावमोदनं निर्वपेदि'ति प्रायश्चित्तं सायं दोहस्य प्रातर्दोहस्य चार्तौ स्यात् उत अन्यतरविनाशेऽपीति संशये ग्रहैकत्वाधिकरणे उद्देश्यविशेषणस्याविवक्षायां स्थितायामपि यथेह नार्तिमात्रं निमित्तं किन्तु हविषापि विशेषितम् एवं सङ्ख्ययापि विशेषितं निमित्तमस्तु इति पूर्वः पक्षः ।

सिद्धान्तस्तु— यस्य कस्यचिदार्तेः सर्वदा सहभावात् अनियतत्वाभावेन निमित्तत्वापर्यवसानात् । तत्पर्यवसानाय ग्रहत्वेनेव हविषा विशेषणीये तावता तत्पर्यवसानात् । ग्रहैकत्ववदुभयत्वमपि न विवक्षितुं शक्यमित्यन्यतरार्तावपि स्यात्। उभयपक्षं तु न केवलं प्रातर्दोहार्तिर्निमित्तं नापि सायंदोहार्तिरिव किन्तु उभयमपि प्रत्येकं निमित्तमिति योज्यम्।

---

39. पूर्वपक्षः—

आर्तौ पञ्चशरावो यः स दोहद्वयसङ्क्षये ।
एकनाशेऽपि वाद्योऽस्तु हविर्वदुभयोक्तितः ॥

सिद्धान्तः—

हविरार्त्युक्तिमात्रेण निमित्तं पर्यवस्यति ।
उभयोक्त्यविवक्षायामेकनाशेऽप्यसौ भवेत् ॥ (जै.न्या.मा.)

## 40. अङ्गापूर्वभेदाधिकरणम्

II-2-1

द्वितीयाध्याये कर्मान्तरादिभिः (शब्दान्तरादिभिः) षड्भिः प्रमाणैः कर्मभेदः साधितः। तद्यथा 'शब्दान्तरे कर्मभेदः कृतानुवन्धत्वात्' (II-2-1-1) एकप्रकरणगताः यजति ददाति जुहोतीत्यादयः किमेकां भावनां प्रतिपादयन्ति उत प्रतिधातु भिन्नामिति संशये यज्यादि-धातुरभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदेऽपि प्रत्ययांशस्यैकरूपत्वेन भावनाभेदे प्रमाणाभावात् एकस्याः एव भावनायाः क्रयभावनायाः आरुण्यादिभिरिव यागदानहोमैः अवच्छेदसम्भवादनेकापूर्वकल्पनागौरवपरिहारलाभाच्च एक(मेव)भावनां प्रतिपादयन्तीति पूर्वः पक्षः।

आरुण्यादीनां भिन्नपदोपात्तानां अगृह्यमाणविशेषतया एकक्रयभावनावच्छेदकत्व-सम्भवेऽपि यजति(ती)समानपदोपात्तयागावच्छिन्नभावनां प्रति उत्पत्तिशिष्टगुणविरोधेन-(णावरोधेन) दानहोमयोरवच्छेदकत्वासम्भवाद्, यजत्यादयः पृथक्पृथगपूर्वजनकत्वेन भिन्नां भिन्नां भावनां प्रतिपादयन्तीति सिद्धान्तः।

---

**40. पूर्वपक्षः—**

ददाति यजतीत्यादौ भावनैक्यमुतान्यथा।
आख्यातैक्यात् तदैक्यत्वं धातुभेदोऽप्रयोजकः॥

**सिद्धान्तः—**

धातुभेदेन भिन्नत्वमाख्याते श्रूयते ततः।
उत्पत्त्येकानुरक्तत्वाद् भिद्यन्ते भावना मिथः॥ (जै.न्या.मा.)

## 41. समिधाद्यपूर्वभेदाधिकरणम् II-2-2

'एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं (हि) स्यात्' (II-2-2-2) 'समिधो यजति', 'तनूनपातं यजति', 'इडो यजति' 'बर्हिर्यजति', 'स्वाहाकारं यजति' इति पञ्चकृत्वोऽभ्यस्ते यजतिपदे किमेका भावना उत प्रत्यभ्यासं तद्भेद इति संशये इह धातुभेदाभावेन अव-च्छेदकधात्वर्थभेदस्याभावात् समिधो यजतीत्यनेन समित्संज्ञके यागे विहिते उत्तरवाक्यानां तत्रैव विकल्पिततनूनपादादिनामदेवताविधायकतया अभ्यासावैयर्थ्योपपत्तेः एकैव भावनेति पूर्वः पक्षः।

सिद्धान्तस्तु— विधेयस्य समानपदोपात्तयागभावनाविषयत्वस्वारस्याय 'दध्ना जुहोती'त्यादावप्राप्तगुणश्रवणवैयर्थ्यस्य विशिष्टविधिगौरवस्य च भङ्गोपगमेपि 'तनूनपातं यजती'त्यादौ तनूनपादन्न आज्यस्येत्यादिमन्त्रवर्णप्राप्तदेवतानुवादकतया तत्परिहारसम्भवेन विधिस्वारस्यभङ्गायोगात् प्रत्यभ्यासं यागभेदः तदवच्छिन्नभावनाभेदश्च।

---

**41. पूर्वपक्षः—**

समिधो यजतीत्यादावेकत्वमथ भिन्नता।
धातुप्रत्यययोरैक्यादेकत्वे भिन्नता कुतः॥

**सिद्धान्तः—**

अभ्यासात् कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे।
विधित्वं श्रुतितो भाति सन्निधेरनुवादता॥ (जै.न्या.मा.)

## 42. सङ्ख्याकृतकर्मभेदाधिकरणम् II -2-7

'पृथक्त्व(1)निवेशात् सङ्ख्यया कर्मभेदः स्यात्' (II-2-7-21) सप्तदश प्राजापत्यान् पशूनालभेतेत्यत्र संशयः। किं सप्तदशपशुद्रव्यकः एको यागः किंवा एकैकपशुद्रव्यकाः सप्तदश यागाः इति। तत्र पूर्वः पक्षः। प्राजापत्यानित्यत्र प्रकृत्या प्रजापतिर्देवताभिधीयते। तद्धितेन पशुद्रव्यं बहुवचनेन बहुत्वम्। तत्र तद्धितार्थः पशुद्रव्यं बहुत्वेन प्रथममन्वितं पश्चात् प्रजापतिना देवतया सम्बन्ध्यत इति बहूनां पशूनां व्यासज्यैकदेवतासम्बन्धेन द्रव्य-देवतासम्बन्धैक्यादेको यागः। न च प्राजापत्यशब्देन देवताविशिष्टद्रव्याभिधानात् स्रग्विण इत्यत्रेव विशिष्टरूपेण सङ्ख्यान्वयः स्यान्न स्वरूपेणेति द्रव्यदेवतासम्बन्धभेदात् तत्कल्प्य-यागभेदः स्यादिति वाच्यम्। द्वौ त्रय इत्यत्रापि स्वरूपेण सङ्ख्यान्वयदर्शनात्। अन्यथा चतुर्णां नवानां च प्रतीतिप्रसङ्गात्। तथा अत्रापि स्वरूपेणैव सङ्ख्यान्वयो युक्तो यागैक्य-कल्पनालाघवादिति।

सिद्धान्तस्तु— स्वरूपेण सङ्ख्यान्वयादेकयागत्वे तत्र प्रकृतिभूतादग्नीषोमीयपशोः हृदयं जिह्वा वक्षो यकृत् वृक्यौ सव्यं दोः उभे पार्श्वे दक्षिणे श्रोणी गुद तृतीयमिति दैवतानी'ति विहितस्यैकस्यैव एकपशुनिष्पन्नावदानगणस्यातिदेशतः प्राप्तौ यस्यैव पशोः अवदानगणः गृहीतः स्यात् स एव प्राजापत्यः कृतः स्यात्। नान्ये षोडशपशव इति। तेषामपि प्राजा-पत्यत्वलाभाय एकस्य यागस्यानेकद्रव्योपदेशेन (द्रव्यकत्वोपदेशेन) तत्रैकस्यावदानग्रहणस्य प्रापकमतिदेशं बाधित्वा सप्तदशावदानग्रहणप्राप्तिः कल्पिता स्यात्। न च विशिष्टरूपेण सङ्ख्यान्वयमुपगम्य द्रव्यदेवतासम्बन्धाभेदाद्यागभेदकल्पनया प्रतियागमवदानगणस्याति-देशतः प्राप्त्या पशूनां प्राजापत्यत्वोपदेशनिर्वाह सति देशबाधेन सम्भवति। स्वरूपेण सङ्ख्यान्वयाद्या-(योगेन वाक्य-मुपगम्य)गैक्यमुपगम्य तद्बाधकल्पनं युक्तम्। तस्माद् एकैकपशुद्रव्यकाः सप्तदश यागाः इति।

---

42. पूर्वपक्षः—

पशून् सप्तदश प्राजापत्यानित्यत्र भाष्यकृत् विचारमाह—

बहुत्वोपेतपशुभिर्देवयोगादभिन्नता ।
रूपस्य तेन कर्मैक्यं सङ्ख्या नात्र क्रियागता ॥

सिद्धान्तः—

देवतासङ्गतस्यैव तद्धितार्थस्य पश्चिमः ।
बहुत्वासङ्गमो रूपसङ्ख्यया तत् क्रियाभिदा ॥ (जै.न्या.मा.)

# 43. देवताभेदकृतकर्मभेदाधिकरणम्

## II-2-9

'गुणश्चापूर्वसंयोगे वाक्ययोः सम(मान)त्वात्' (II-2-9-23) चातुर्मास्येषु 'वैश्वदेव्यामिक्षा' इति विधाय आम्नायते 'वाजिभ्यो वाजिनमि'ति । तत्र संशयः । 'किं पूर्वस्मिन्नेव आमिक्षायागे वाजिनद्रव्यं विधीयते उत तद्द्रव्यकं कर्मान्तरमि'ति । तत्र पूर्वः पक्षः— वाजमन्नमामिक्षारूपमेषामिति वाजिनशब्देन आमिक्षायागदेवान् विश्वान् देवानेव निर्दिश्य तत्सम्बन्धितया उक्तं वाजिनं पूर्वकर्मण्येव विहितं भवति एवञ्च गुणमात्रविधानात् विधेय-लाघवम् । न च आमिक्षायुक्तस्यैव यागस्योत्पत्तेः तस्मिन् यागावच्छिन्नभावनायां होम-स्यावच्छेदकत्वमिव वाजिनस्य द्रव्यत्वमयुक्तं आकाङ्क्षाविरहात् इति वाच्यम् । उत्पत्तौ द्रव्ययुक्तस्यापि (यागस्य द्रव्यदेवतासम्बन्धकल्पितयजिपदोपस्थितस्यापि तस्य) निष्कृष्टद्रव्ययुक्तस्वरूपमात्रानुवादेना-काङ्क्षासम्भवात् । अभिधानविशेषकृता हि आकाङ्क्षा न वस्तु-कृता । भावना तु प्रत्ययवाच्या (गम्या) प्रकृत्यननुरक्ता नानुवदितुं शक्यते इति न यागाव-च्छिन्नायां भावनायां होमस्यावकाशः इति वैषम्यम् । तस्मात् न यागभेदः इति पूर्वः पक्षः ।

सिद्धान्तस्तु यद्यपि वाजिभ्यो वाजिनमित्यत्र कल्पितेन यजिना आमिक्षायागस्वरूपमात्रं निष्कृष्यते तथापि उत्पत्तिवाक्यावगतस्य तस्यानुवादात् तत्स्वरूपमालोच्यमानं गुणयुक्त-मवगम्यते इति नैराकाङ्क्ष्यादयोग्यत्वाच्च तत्र निवेशमलभमानं गुणान्तरमात्मनि निवेशितुं कर्मान्तरं गमयतीति युक्तो गुणात् कर्मभेदः ।

---

43. पूर्वपक्षः—

गुणः कर्मान्तरं वा स्याद्वाजिभ्यो वाजिनं त्विति ।
गुणो देवाननूद्योक्तसमुच्चयविकल्पतः ॥

सिद्धान्तः—

आमिक्षोत्पत्तिशिष्टत्वात् प्रबला तत्र वाजिनम् ।
गुणोऽप्रविश्य कर्मान्यत् कल्पयेद्वाजिदेवकम् ॥ (जै.न्या.मा.)

## 44. मासाग्निहोत्रादीनां क्रत्वन्तरताधिकरणम्

II-3-11

'प्रकरणान्तरे प्रयोजनान्यत्वम्' (II-3-11-24) कुण्डपायिनामयनाख्ये सत्रे श्रूयते 'मासमग्निहोत्रं जुहोती'ति । किमनेन नित्याग्निहोत्रे एव मासो गुणो विधीयते किं वा कर्मान्तरमिति संशये असन्निहितस्यापि नित्याग्निहोत्रस्य अग्निहोत्रशब्देन 'यदाहवनीये जुहोती'त्यनारभ्याधीतवाक्ये तत्तत्प्रकरणगतानां होमानां जुहोतिशब्देनैवोपस्थानसम्भवात् तेषु आहवनीय इव तस्मिन् मासो गुणो विधीयते इति पूर्वः पक्षः ।

सिद्धान्तस्तु— 'यदाहवनीये जुहोती'त्यत्र यज्जुहोतीति तदाहवनीय इति होमानुवादेन आहवनीयविधानात् असन्निहिततया बुद्धौ अपरिवर्तमानमपि यज्जुहोतीति प्रासवन्निर्देशेन कथञ्चित् दूरस्थमप्युपस्थाप्यते इति युक्तम् । इह तु न होमानुवादेन मासविधिः । काल-स्यानुपादेयत्वात् । न होमानुरोधेन मासः सम्पादयितुं शक्यते । तेनात्र यो मासः तत्र जुहो-तीति मासे होमस्य विधेयत्वात् न तस्य सिद्धवन्निर्देशेन दूरस्थकर्मोपस्थापकत्वं, न वा सन्निधानमिति प्रकरणान्तरानुपादेयसम्बन्धानुगृहीतात् कर्मभेदे तत्रैवाग्निहोत्रशब्दस्यापि वृत्तिर्युक्तेति कर्मान्तरमिति ॥

44. अत्र पूर्वोत्तरपक्षविन्यासः शास्त्रदीपिकातः जैमिनीयन्यायामालाविस्तरतश्च भिन्नः दृश्यते । अतः तत्रत्य सङ्ग्रहश्लोकौ न उदाहृतौ ।

## 45. संज्ञाकृतकर्मभेदाधिकरणम्

II-2-8

'संज्ञा चोत्पत्तिसंयोगात्' (II-2-8-22) ज्योतिष्टोमं प्रकृत्य श्रूयते 'अथैष ज्योतिरेतेन सहस्रदक्षिणेन यजेत' इति। तत्र किं प्रकृते ज्योतिष्टोमे सहस्रदक्षिणाख्यो गुणो विधीयते उत कर्मान्तरविधिरिति संशये एतच्छब्दस्य प्रकृतज्योतिष्टोमाभिधायिकत्वात् तत्रैव गुणविधिरिति पूर्वः पक्षः।

संज्ञाभेदेन संज्ञिभेदस्य प्रतीतेः एतच्छब्दस्य प्रक्रियमाणकर्मपरतयाप्युपपत्तेः ज्योतिः-संज्ञिकसहस्रदक्षिणकर्मान्तरविधिरिति सिद्धान्तः॥

---

45. पूर्वपक्षः—

अथैष ज्योतिरित्यत्र गुणो वा कर्म वा पृथक्।
गुणः सहस्रदानात्मा ज्योतिष्टोमे ह्यनूदिते॥

सिद्धान्तः—

अथेति प्रकृते छिन्ने एतच्छब्दोऽग्रगं वदेत्।
सङ्ख्ययेवान्यकर्मत्वमिह नूतनसंज्ञया॥ (जै.न्या.मा.)

## 46. तण्डुलावापमन्त्रे धान्यशब्दस्य ऊहाधिकरणम्

### IX-1-13

नवमे प्रथपपादे 'गुणशब्दस्तथेति चेत्' (IX -1-13-37) इत्यधिकरणस्य द्वितीय-वणकि चिन्तितम्— दर्शपूर्णमासयोः 'धान्यमसि धिनु हि देवानि'ति मन्त्रः श्रूयते । अस्ति शाक्यानामयनं नाम सत्रम् । 'तत्र संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति । स यान् यान् मृगान् हन्ति तेषां तरसमयाः सवनीयाः पुरोडाशाः इति मांसमयेषु पुरोडाशेषु विहितेषु अस्मिन् मन्त्रे अतिदेशेन प्राप्ते सन्देहः किमत्र धान्यस्थाने तरसमित्यूहनीयं न वेति । तत्र प्रकृतौ तण्डुलावस्थायां प्रयुज्यमानेऽस्मिन् मन्त्रे धान्यशब्दस्य सतुषवचनस्य समवेतार्थत्वा-सम्भवादसमवेतार्थस्य च देवस्येति मन्त्रे सवित्रादिपद इव अनूह्यत्वात् नैवमूहितव्य-मिति प्राप्ते ।

धान्यशब्दस्य द्रव्यप्रकाशनरूपशब्दार्थत्वसम्भवे अदृष्टार्थकल्पनानौचित्यात् तस्य च सतुषवाचिनः लक्षणया तत्प्रकृतितण्डुलवाचकत्वसम्भवात् समवेतार्थतया तदूहितव्यमिति सिद्धान्तः ॥

---

46. पूर्वपक्षः—

नोह्य ऊह्योऽथवा धान्यशब्दो नासङ्गमोक्तितः ।

सिद्धान्तः—

ऊह्यो लक्षणयार्थस्य गोपानस्येव सङ्गतिः ॥ (जै.न्या.मा.)

## 47. कर्मणां गुणप्रधानविभागाधिकरणम्

II-1-3

द्वितीये प्रथमपादे चिन्तितम्— 'तानि द्वैधं गुणप्रधानभूतानि' (II-1-3-6) 'व्रीहीन्नवहन्ती'त्यादिषु प्रयाजादिभ्य इव अवघातादिभ्यः अपूर्वमस्ति न वेति संशये भावार्थाधिकरणन्यायेन तेभ्योऽपूर्वमस्तीति प्राप्ते तत्र सिद्धान्तः । अवघातादीनां कर्मोपयिकतुषविमोकादिदृष्टप्रयोजनसम्भवेन अदृष्टकल्पनानौचित्यात् नियमादृष्टमात्रस्य च तेषामपूर्वार्थत्वपक्षेऽपि व्रीह्यादिद्रव्यनियमेन 'दध्ना जुहोती'त्यादाविवावश्यकत्वात् न तेभ्यः अपूर्वमिति । न तान्यारादुपकारकाणि किन्तु करणशरीरनिवर्तकतया सन्निपातानीति ॥

---

47. पूर्वपक्षः—

अवघातादिनापूर्वमुत्पाद्यं विद्यते न वा ।
यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा ॥

सिद्धान्तः—

दृष्टे तुषविमोके तु नापूर्वं द्रव्यतन्त्रतः ।
स्याद्यजत्यादिवैषम्यं नियमापूर्वकृद्वचः ॥ (जै.न्या.मा.)

## 48. उद्गातृणां चमसे भक्षाधिकरणम्

### III-5-7

'उद्गातृचमसमेकस्य श्रुतिसंयोगात्' (III-5-7-23) 'सोमे प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्ये'ति श्रूयते । यत्र सदसि हविः भक्षयितारः स्थिताः तत्र भक्षणीयानां चमसानां नयनार्थमध्वर्योरयं प्रैषः । अत्र उद्गातृचमससमाख्यया उद्गातुः चमसभक्षे स्थिते स एको भक्षयेदुत तेन सह एके स्तोत्रसम्बन्धिनौ सदसि स्थितौ प्रस्तोतृप्रतिहर्तारावपीति सन्देहे उद्गातृशब्दस्य श्रवणात् स एक एव । बहुवचनं तु प्रधानप्रातिपदिकमुख्यार्थत्वानुसारेण तत्रैव यथाकथञ्चित् नेयमिति पूर्वः पक्षः ।

सिद्धान्तस्तु— उद्गातृगणवर्तिषु सदसि स्थितेषु त्रिषु उद्गातृशब्दस्य अजहल्लक्षणायाः सम्भावितार्थतया बहुवचनस्यार्थवत्त्वसम्भवेन न तस्यार्थबाधनं युक्तम् । तस्मात् त्रयोऽपि भक्षयेयुरिति ॥

---

48. पूर्वपक्षः—

प्रोद्गातॄणामिति ह्येक उद्गाता भक्षयेदुत ।
सर्वेऽपि किंवा सुब्रह्मण्येन ऊनाः सामगायिनः ॥

सिद्धान्तः—

सदसि स्थित्यभावेन तृतीयो वार्तिकोदितः ॥ (जै.न्या.मा.)

अस्मिन्नधिकरणे चमसभक्षः किम् उद्गातुः एकस्य उत सर्वेषां षोडशानां ऋत्विजामथवा सामगायिनां त्रयाणामेवेति विचारं प्रस्तुत्य उद्गातृप्रस्तोतृप्रतिहर्तॄणां त्रयाणामेवेति वार्तिककारीयः पक्षः सिद्धान्तत्वेन निरुपितः ।

भाष्यकारपक्षस्तु सुब्रह्मण्यस्यापि भक्षः इति चतुर्णां चमसभक्षः इति ।

# 49. अभिधारणे शेषधारणतत्पात्रयोरननुष्ठानाधिकरणम्

(IV 1-14)

चतुर्थाध्याये प्रथमपादे चिन्तितम्— 'अभिधारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात्' (IV -1-14-33) दर्शपूर्णमासयोः 'प्रयाजशेषेण हवींषि अभिघारयती'ति श्रुतमभिघारणं किं हविषां संस्कारः उत प्रयाजशेषस्यैव प्रतिपत्तिरिति संशये द्वितीयया हविषां संस्कार्यत्वेन प्राधान्यावगमात् तत्संस्कारः । न तु प्रयाजशेषस्य प्रतिपत्तिः । तृतीयानिर्दिष्टस्य गुणत्वेन प्रतिपाद्यत्वायोगादिति पूर्वः पक्षः।

सिद्धान्तस्तु— प्रतिपत्तिरेव युक्ता। शेषशब्दस्य श्रवणादुपयुक्तशेषस्य हि द्रव्यस्य क्वचित् (क्षारण)रिक्तीकरणरूपा प्रतिपत्तिरपेक्षिता न तु हविःसंस्कारः । अतः 'प्रयाजशेषं हविषु क्षारयेदि'ति वाक्यार्थकल्पनया प्रतिपत्तिरेव ग्राह्येति ॥

---

49. पूर्वपक्षः—

तत्रोपयोक्ष्यमाणानां द्वितीया योगिनां तथा ।
हविषामेव संस्कारो न शेषस्य विपर्ययात् ॥

सिद्धान्तः—

सत्यमेवं तथापीह शेषस्य प्रतिपादनम् ।
न्याय्यं दृष्टार्थतालाभादन्यथादृष्टकल्पनम् ॥

## 50. सौभरनिधनयोः कामैक्याधिकरणम्

## II-2-13

भेदलक्षणे चिन्तितम्— 'सौभरे पुरुषश्रुतेः निधने कामसंयोगः' (II-2-13-28) 'यो वृष्टिकामः योऽन्नाद्यकामः यः स्वर्गकामः स सौभरेण स्तुवीते'ति ब्रह्म सामस्तोत्रमाश्रित्य वृष्ट्यादिफलत्रयसाधनत्वेन विहितं सौभराख्यं साम प्रकृत्य श्रूयते । 'हीषिति वृष्टिकामस्य निधनं कुर्यात्, ऊर्गिति अन्नाद्यकामाय, ऊ इति स्वर्गकामाये'ति निधनमिति अन्तिमसाम्नो भाग उच्यते । सौभरस्य च साम्नः शाखाभेदेन सन्ति हीषादीनि त्रीणि निधनानि । तत्र किमनेन वाक्येन हीषादीनि स्वातन्त्र्येण व्रीह्यादिफलार्थत्वेन विधीयन्ते उत सौभरस्यैव वृष्ट्यादि-फलं साधयतः शेषत्वेन तान्यनियमेन प्राप्तानि । तत्र वृष्टिकामायेत्यादिना तादर्थ्ये चतुर्थ्या हीषादीनां स्वातन्त्र्येण फलार्थत्वावगमात् तादर्थ्येनैव विधीयन्ते इति पूर्वः पक्षः ।

सिद्धान्तस्तु— सौभरफलत्वेन पूर्वोक्तानामेव वृष्ट्यादीनां प्रत्यभिज्ञानात् तदर्थं च सौभरशेषत्वेऽपि परम्परया तादर्थ्यसत्त्वेन तादर्थ्यचतुर्थ्या विरोधाच्च सौभरशेषत्वेन नियम्यन्ते इति ॥

---

50. पूर्वपक्षः—

वृष्ट्यन्नस्वर्गकामानां सौभरं स्तोत्रमीरितम् ।
निधनान्यपि हीषूर्ॣ इति वृष्ट्यादि कामिनाम् ।
फलान्तरं किं वृष्ट्यादि हीषादीनामुतोदिते ॥

सिद्धान्तः—

सौभरे फलसम्भिन्ने निधनं विनियम्यते ।
नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते ॥ (जै.न्या.मा.)

तस्मात् फलान्तरार्थेन नैव हीषादयो गुणाः ।
विधीयन्ते नियम्यन्ते यथाप्राप्ते तु सौभरे ॥ (शा.दी)

## 51. पर्वशब्दस्य कर्मपरत्वाधिकरणम्

### IX-2-18

**पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभिज्या हि (IX -2-18-51) दर्शपूर्णमासयोः 'स्रुवेण पार्वणहोमौ जुहोती'ति पर्वदैवत्यौ होमौ विहितौ तत्र देवतावाचिपर्वशब्दः कालवचनः उत आग्नेयादियागसमुदायवचन इति संशये काले पर्वशब्दस्य मुख्यत्वात् कालवचन इति पूर्वः पक्षः ।**

**सिद्धान्तस्तु (पृणातिधातोर्दानवाचिनः)— पर्वशब्दो अधिकरणव्युत्पत्त्या यथा काले मुख्यः तथा भावव्युत्पत्त्या कर्मण्यपि । तत्र प्रकरणात् कर्मार्थत्वं युक्तम् । आग्नेयादियागरूपस्य प्रकृताप्रकृतप्रत्यवे(पे)क्षणाय स्मरणांशेन संस्कार्यत्वसम्भवेन सन्निपातित्वलाभाच्च । सन्निपातित्वकल्पनं हि आरादुपका(कत्वकल्पना)रादभ्यर्हितम् । उक्तरीत्या दृष्टार्थत्वलाभात् सन्निपातिवाक्येषु सर्वत्र संस्कारवाचिशब्दे(सत्त्वे) अपूर्वसाधनत्वलक्षणाङ्गीकारेण आरादुपकारकविनियोजकात् प्रकरणादभ्यर्हितेन वाक्यप्रमाणेन विनियोगसम्भवाच्च । तस्मात् कर्मवचन इति ।**

---

51. **पूर्वपक्षः—**

काले शब्दस्य मुख्यत्वात् कालाभिज्येह मन्यते ।

**सिद्धान्तः—**

पृणातेर्दानकर्मत्वात् कर्मण्यपि च मुख्यता ॥ (शा.दी.)

शास्त्रदीपिकायां अस्य अधिकरणस्य नाम सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणमिति निर्दिष्टम् ।

# 52. प्रोक्षणादीनामपूर्वप्रयुक्तताधिकरणम्

## IX-1-5

नवमे चिन्तितम्— 'द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात्' (IX-1-5-11) दर्शपूर्णमासयोः 'व्रीहीन् (अवहन्ती)प्रोक्षती'त्यादिसंस्कारवाक्येषु व्रीह्यादयः प्रोक्षणादिभिः किं व्रीहित्वाद्याकारेण सम्बध्यन्ते उत 'व्रीहिभिर्यजेत' इत्यादिवाक्यावगतापूर्वसाधनत्वाकारेणेति संशये (श्रुति)श्रुतरूपातिक्रमे कारणाभावात् व्रीहित्वाद्याकारेणेति प्राप्ते व्रीहित्वाद्याकारस्य प्रोक्षणादेः प्रागपि सत्त्वेन तत्र द्वितीयावगततत्साध्यत्वान्वयासम्भवात् अपूर्वसाधनत्वेन सम्बध्यते इति युक्तम् । तथा च स्वरूपेण सिद्धा अपि व्रीह्यादयः प्रोक्षणादिभिरपूर्वसाधनत्वयोग्याः क्रियन्ते इति भवति तेन रूपेण तत्साध्यत्वम् । एवं च यवेष्वपि प्रोक्षणावहनादिसिद्धिः । न चैवमङ्गेऽपूर्वसाधनत्वाविशेषात् स्रुवादिष्वपि तदापत्तिः ।

व्रीह्यादिषु त्यक्तद्रव्यतया य आग्नेयाद्यवान्तरापूर्वप्रकारविशेषः तस्यैव व्रीह्यादिपदैर्लक्षणीयत्वाभ्युपगमादिति सिद्धान्तः ॥

---

52. पूर्वपक्षः—

व्रीह्यादयः प्रयोक्तारोऽपूर्वं वा प्रोक्षणादिषु ।
वाक्यश्रुतिभ्यामाद्यः स्यात्

सिद्धान्तः—

चोदिताकाङ्क्षयाऽन्तिमः । (जै.न्या.मा.)

(ii) तस्मात् साधनरूपं यद् व्रीहीणां शास्त्रचोदितम् ।
तेन रूपेण सम्बन्धः प्रोक्षणादेः विधीयते ॥ (शा.दी.)

## 53. आश्रयिणामदृष्टार्थताधिकरणम्

### IV -1-7

चतुर्थे प्रथमपादे विचारितम्— 'आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयते' (IV-1-7-18) ज्योतिष्टोमे अग्नीषोमीयपश्वङ्गत्वेन पुरोडाशयागः श्रुतः 'अग्नीषोमीयस्य वपया प्रचार्य अग्नीषोमीयं पुरोडाशं निर्वपतीति । सोऽयमग्नीषोमीयस्य पशोः तदीयदेवतास्मरणसंस्का-रार्थत्वेन सन्निपत्योपकारकः इति दशमस्थास्यान्तमर्थं सिद्धवत् कृत्वा अन्यदिह चिन्त्यते । किमयं पुरोडाशयागः पशुदेवतायाः स्मरणसंस्कारं कुर्वन् किं तदर्थ एव उत अपूर्वार्थो-ऽपीति । तत्र एकस्य कर्मणः युक्तमेकमेव प्रयोजनम् । 'दृष्टे सति न अदृष्टं कल्प्यम् । न अपूर्वमस्ती'ति पूर्वपक्षः ।

यागाङ्गमन्त्रमुखेन देवतास्मरणे सिद्धे देवतोद्देशेन त्यागांशस्य न अदृष्टार्थत्वे किञ्चित् प्रयोजनमिति त्यागांशेनापूर्वार्थोऽपीति सिद्धान्तः ॥

---

53. पूर्वपक्षः—

एकस्य कर्मणो युक्तमेकमेव प्रयोजनम् ।
दृष्टे सति नादृष्टं कल्प्यं नापूर्वमस्त्वतः ॥

सिद्धान्तः—

देवतास्मरणं मन्त्रात् प्रक्षेपात् द्रव्यसंस्कृतिः ।
त्यागस्य तु नादृष्टादृते किञ्चित् प्रयोजनम् ॥ (शा.दी.)

## 54. संयोगपृथक्त्वन्यायेन दध्यादेर्नित्यनैमित्तिकोभयार्थताधिकरणम्

### IV-3-3

चतुर्थे तृतीयपादे चिन्तितम्— 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' (IV-3-3-5) अग्निहोत्रे 'दध्नेन्द्रियकामस्य जुहुयात्, दध्ना जुहोति' इति वाक्यं श्रूयते। तत्र किं फलार्थमेव दधि उत क्रत्वर्थमपीति संशये फलवाक्यस्य दधीन्द्रियसम्बन्धसमर्पकतया एकवाक्यत्वेन दध्ना जुहोतीत्यस्य क्रतौ दधि विधायकत्वाभावात् फलार्थमेवेति पूर्वः पक्षः।

सिद्धान्तस्तु— सिद्धरूपस्य दध्नः स्वतः अननुष्ठेयत्वेन फलार्थत्वेन विधानायोगात् तदुपपत्तये साध्यतानुरागार्थं स्वतस्साध्यक्रियारूपाश्रयापेक्षया प्रकरणेनैव होमरूपाश्रय-सम्बन्धलाभात्। तदर्थं दध्ना जुहोतीत्यस्य तदेकवाक्यतेति तेन पृथगेव क्रत्वर्थतया दधिविधानादुभयार्थं दधीति।

---

54. पूर्वपक्षः—

दध्नेन्द्रियकामस्य नित्येऽन्यदुत तद्दधि।
अन्यत् स्यात् पूर्ववत्

सिद्धान्तः—

नैवं संयोगस्य पृथक्त्वतः। (जै.न्या.मा.)

## ५५. यावज्जीविकाग्निहोत्राधिकरणम्

II-4-1

द्वितीये चतुर्थपादे चिन्तितम्— 'यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्' (II-4-1-5) 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'ति किं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विहिते काम्यप्रयोगे गुणविधिः अधिकारान्तरविधिरिति (कालान्तरविधिरिति) संशये प्रकरणानुग्रहात् प्रकृत एव काम्यप्रयोगे यावज्जीवन(अभ्यास)काललक्षणो गुणो विधीयते इति पूर्वः पक्षः ।

गुणविधौ जीवनशब्देन तत्सहचरितकालो लक्षणीयः । जुहोति शब्देन च अभ्यासः अधिकारान्तरचोदनायां श्रुत्यर्थः । जीवनस्य अधिकारिविशेषणत्वात् यागस्यैव विधेयत्वात् न क्वापि लक्षणेत्यधिकारान्तरचोदना । ततश्च वाक्यद्वयवशात् काम्यो नित्यश्च दर्शपूर्ण-मासप्रयोगः इति सिद्धान्तः ॥

---

55. पूर्वपक्षः—

यावज्जीवं जुहोतीति धर्म कर्मणि पुंसि वा ।
कालत्वात् कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम् ॥

सिद्धान्तः—

न कालो जीवनं तेन निमित्तप्रविभागतः ।
काम्यप्रयोगो भिन्नः स्यात् यावज्जीवप्रयोगतः ॥ (जै.न्या.मा.)

## 56. कृष्णले अवघातबाधाधिकबाधाधिकरणम्

X-1-1

दशमाध्याये विचारितम्— 'प्राजापत्यं शतकृष्णलचरुं निर्वपेदायुष्कामः' इत्यत्र कृष्णलचरौ अवघातः कर्तव्यो न वेति संशये अवघातप्रापकचोदकवशादवघातः कर्तव्यः इति पूर्वः पक्षः ।

अवघातस्य तुषविमोचनरूपदृष्टद्वारस्य च कृष्णलेषु असाध्यत्वात् द्वारलोपेन चोदक-तदतिरिक्तदर्शपूर्णमासिकाङ्गविषयः । स तदंशे लुप्यते इति न कर्तव्यः इति सिद्धान्तः ॥

---

56. पूर्वपक्षः—

अवघातः कृष्णलानामस्ति नो वास्ति पाकवत् ।

सिद्धान्तः—

प्रत्यक्षोक्त्या चरेत् पाकमवघाते तु नास्ति सा । (जै.न्या.मा.)

## 57. भक्षमन्त्राणां यथालिङ्गं विनियोगाधिकरणम्

### III-2-9

शेषलक्षणे द्वितीये पादे चिन्तितम्— 'लिङ्गसमाख्याभ्यां भक्षार्थतानुवाकस्य' (III -2-9-24) अस्ति भक्षानुवाकः 'भक्षे हि माविश' इत्यादिः तस्य कश्चिदंशः सोमस्य भक्षणं प्रतिपादयति । ग्रहणावेक्षणनिगरणसम्यग्जरणप्रतिपादकाः अन्ये अंशाः । तत्र संशयः किं कृत्स्नः अयमनुवाकः 'भक्षणे विनियोक्तव्यः उत भक्षणप्रकाशकांशः भक्षणे, ग्रहणादि-प्रकाशकोंऽशः ग्रहणादिषु इति विभज्य विनियोक्तव्यः इति । तत्र भक्षानुवाकसमाख्या-वशात् विहितभक्षणप्रकाशकांशैकवाक्यत्वाच्च कृत्स्नोऽपि भक्षणे विनियोक्तव्यः । यद्यपि 'अश्विनोर्बाहुभ्यां सख्यासमम्', इत्यादीनां ग्रहणादिप्रकाशने सामर्थ्यरूपं लिङ्गमस्ति । तच्च वाक्यसमाख्याभ्यां बलीयः । तथापि ग्रहणादीनामचोदितानां क्रत्वर्थत्वात् तत्प्रका-शनमनर्थकमिति ग्रहणादिप्रकाशकभागानामपि (दृष्टादिपादानामिव लक्षणया) स्वस्वार्थ-विशिष्टे भक्षणे लक्षणाकल्पनात् कृत्स्नोऽपि तत्रैव विनियोक्तव्यः इति पूर्वः पक्षः ।

सिद्धान्तस्तु— साक्षादचोदितमपि ग्रहणादिकं भक्षार्थमर्थप्राप्तमनुष्ठेयम् । जरणं यद्यपि न भक्षणार्थं न वा साक्षात् कृतिसाध्यं तथापि सम्यग्जरणान्तमेव भक्षणं दृष्टम् । सोमप्रतिपत्त्यर्थतया तदपि जरणकार्यासनविशेषद्वारा अनुष्ठेयम् । तस्मात् लिङ्गबलाद् विभज्यैव विनियोगः इति ॥

---

57. पूर्वपक्षः—

भक्षे हीत्यनुवाकोऽयं सर्वो भक्षणगाम्युत ।
ग्रहणादौ यथायोगं विभज्य व्यवतिष्ठते ।
अविधेर्ग्रहणादीनां भक्षणे निखिलोऽस्तु सः ॥

सिद्धान्तः—

अर्थाक्षिप्तेषु तेष्वेव यथालिङ्गं विभज्यते ॥ (जै.न्या.मा.)

## 58. मन्द्रादिभूतिरित्यादेरेकमन्त्रताधिकरणम् III-2-10

'गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात्' (III -2-10-26) 'भक्षानुवाक एव वाग्जुषाणा सोमस्य तृप्यतु' इति तृप्तिप्रकाशको भागः तृप्तौ विनियोज्यः उत भक्षयाज्यं तदेकवाक्यतया भक्षणे एवेति संशये पूर्ववत् लिङ्गात् विभज्य विनियोगे प्राप्ते सिद्धान्तः । न तावत् तृप्तिः साक्षादनुष्ठेया नापि जरणवत् भक्षणातिरिक्त(विरक्त)किञ्चित्साधनानुष्ठान-द्वारा भक्षणानुनिष्पादितत्वात् । तस्मात् केवलतृप्तिप्रकाशने अनुष्ठेयाभावाददृष्टार्थता अस्य स्यात् । तृप्तिविशिष्टभक्षणप्रकाशने तु उत्साहजननाद् दृष्टार्थता भवति । तस्माद् भक्षण एव विनियोगः ।

इति न्यायामृते पूर्वमीमांसोक्ता उदाहृताः ।
वैदिकस्तान् पृथक्कृत्य जयीन्द्रो व्याकरोत् सुधीः (विजयीन्द्रकः) ।

अल्पधीः सुजनस्तत्र प्रवृत्तौ नाल्पधीर्भवेत् ।
तदा दैशिकसेवेयं मुदे मे पर्यवस्यति ॥

*॥ इति श्री विजयीन्द्रभिक्षुविरचिता न्यायामृतोदाहृतजैमिनीयन्यायमाला समाप्ता ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

---

**58. पूर्वपक्षः—**

मन्द्रेति वसुमच्चेति द्वयं तर्पणभक्षयोः ।
विभक्तव्यमुताशेषं तृप्तिसंयुक्तभक्षणे ॥
लिङ्गात् विभागः

**सिद्धान्तः—**

मैवं नो तृप्तिर्भक्षणतोऽन्यतः ।
लिङ्गस्यासम्भवे वाक्यशेषात् सर्वोऽस्तु भक्षणे ॥ (जै.न्या.मा.)

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

